॥ श्रीगणेशाय नमः ॥ श्रीगुरुचरणकमलेभ्यो नमः ॥ ॐ गणाधिपं रामगुरोः पदाब्जं दामोदराख्यं पितरञ्च नत्वा ॥ प्राचीनप
द्यैर्बलभद्रनामा करोति सद्धायनरत्नसंज्ञम् ॥१॥ भागीरथीतीरविराजमाने श्रीकान्यकुब्जे नगरेऽतिरम्ये ॥ अभूद्भरद्वाजमहर्षिवंशे
श्रीलालनामा गणकोपनामा ॥ २ ॥ तस्यात्मजाः पञ्च बभूवुरेषां श्रीदेविदासः प्रथमम्बभूव ॥ व्यक्तं च यश्श्रीपतिपद्धतौ च टीकां
व्यधाच्छिष्यगणस्य तुष्ट्यै ॥ ३ ॥ तस्माल्लघुःखेटविचारदक्षः प्रख्यातकीर्तिर्विजितारिपक्षः ॥ श्रीक्षेमकर्णोऽथ ततः कनिष्ठो नारा
यणो व्याकरणे पटिष्ठः ॥ ४ ॥ न्याये यः सुरराजपूजितनिभो वेदान्तिनामग्रणीर्मीमांसादिसमस्तशास्त्रकमलप्रोद्बोधने भास्करः
॥ श्रीमद्भूपतिवृंदपूजितपदो भूदेवमूर्द्धामणिः श्रीमन्मिश्रचतुर्भुजःसमभवत्तस्माल्लघुर्धर्मवित् ॥ ५ ॥ तस्माल्लघुः सकलशास्त्रकला
पटिष्ठो दामोदरः समभवत्कृतिनां वरिष्ठः ॥ यो भास्करोदितपितामहकर्मतुल्यां वृत्तिं व्यधान्निरुपमां कृतिनां हिताय ॥ ६ ॥ दा
मोदरस्य तनयौ जातौ बलभद्रबलिरामौ ॥ बलभद्रेण च किञ्चित्प्रकाश्यते ताजिकं गुरोः कृपया ॥ ७ ॥ निबन्धा रचिताः पूर्वैः सं
हितास्ताजिकादिषु ॥ न हायनफले तस्मान्निबन्धं कर्तुमुद्यतः ॥ ८ ॥ हिल्लाजखत्तखुत्तार्याखिन्धिरोमकसम्मतम् ॥ सारं समर
सिंहस्य क्रियते वार्षिकं फलम् ॥ ९ ॥ननु किमभिधेयकमिदं शास्त्रं प्रयोजनञ्च किम् ॥ उक्तञ्च–"ज्ञातार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्त
ते ॥ ग्रन्थादौ तेन वक्तव्यः सम्बधस्सप्रयोजनः" इति॥अन्यच्च–"सर्वस्यैव हि शास्त्रस्य कर्म्मणो वापि कस्यचित् ॥ यावत्प्रयोजनं
नोक्तं तावत्तत्केन गृह्यते ॥" इत्युच्यते यवनाचार्येण पारस्या भाषया प्रणीतज्योतिश्शास्त्रैकदेशरूपं वार्षिकादिनानाविधफलादेशफलकं शास्त्रं ताजिक
शब्दवाच्यम् ॥ तदनन्तरसंभूतैः समरसिंहादिभिरधीतव्याकरणैर्ब्राह्मणैस्तदेव शास्त्रं संस्कृतशब्दोपनिबद्धं तदपि ताजिकशब्दवाच्यमेव ॥ अतएवैतैस्ताएव
इक्कवालादयो यावंत्यःसंज्ञा उपनिबद्धाः॥अत्रग्रहराशिस्वरूपषोडशयोगसहमासांगवर्षफलभावविचारदशाविभागगमनागमनाद्यनेकप्रश्नरूपास्ताजिकपदार्थाः
प्रतिपाद्यंते न विषयभूताः॥एषां पदार्थानां ताजिकग्रंथस्य च प्रतिपाद्यप्रतिपादकभावः संबंधः ॥ प्रयोजनञ्च भूतभविष्यद्वर्तमानशुभाशुभफलकथनम्॥उक्तंच
नारदेन–'प्रयोजनं तु जगतःशुभाशुभनिरूपणम्'इति ॥ अत्र शास्त्रे तु वर्षफलप्रश्नादिजिज्ञासुरधिकारी स च ब्राह्मण एव॥ उक्तंच वसिष्ठेन–"अध्ये
तव्यं ब्राह्मणैरेव तस्माज्ज्योतिःशास्त्रं पुण्यमेतद्रहस्यम्॥एतद्बुद्ध्वासम्यगाप्नोति यस्मादर्थं धर्मं मोक्षमग्र्यं यशश्च"इति ॥ ननु यवनाचा

र्य्यप्रणीतेक्कवालादिपारसीशब्दात्मकस्य ताजिकशास्त्रस्याध्यापनमेव तावदनभिहितम् ॥ अध्ययनं तु दूरादपास्तमेव ॥ उक्तं च स्मृतौ—'न वदेद्याव
नीं भाषां प्राणैः कंठगतैरपि' इति । तन्मूलभूतत्वात्सदमरसिंहादिशास्त्रस्याप्यध्ययनमनुचितं मूलाशुद्ध्या सर्वमशुद्धमितिन्यायात् ॥ अत्रोच्यते । यवना
चार्य्यस्याष्टादशसंहिताकर्तृषु परिगणितत्वात्तद्वचः प्रमाणमेव ॥ उक्तं च कश्यपेन—"सूर्यःपितामहो व्यासो वसिष्ठोऽत्रिः पराशरः ॥ कश्यपो
नारदो गर्गो मरीचिर्मनुरङ्गिराः ॥ लोमशः पौलिशश्चैव च्यवनो यवनो गुरुः ॥ शौनकोष्टादशश्चैते ज्योतिःशास्त्रप्रवर्तकाः" इति ॥
तथा च यवनाचार्यप्रणीतं संस्कृतोपनिबद्धं जातकशास्त्रं यवनजातकाख्यं दृश्यते ॥ तथैव ब्रह्मणस्सकाशात्पारम्पर्यवशेन ताजिककर्तृत्वमप्यस्य स्मर्य्यते।
उक्तश्च रोमकेन—"ब्रह्मणा गदितं भानोर्भानुना यवनाय यत् ॥ यवनेन च यत्प्रोक्तं ताजिकं तत्प्रकाशितम्" इति ॥ अन्येपि ताजि
काचार्या उक्ताः टोडरानन्दे—"खत्तखुत्तो रोमकश्च हिल्लाजो धिपणाह्वयः ॥ दुर्मुखाचार्य इत्येते ताजिकस्य प्रवर्तकाः" इति ॥ अथच
ज्योतिःशास्त्रफलम्पुराणकैरादेश्यमित्युच्यत इति सिद्धान्तस्मरणात् । तथाच—"कृते पैतामहं शास्त्रं त्रेतायां बादरायणम् ॥ गार्गीयं
द्वापरे प्रोक्तं सुसत्यं ताजिकं कलौ" इति जीर्णताजिकोक्तेः ॥ अथच—"म्लेच्छा हि यवनास्तेषु सम्यक्छास्त्रमिदं स्थितम् ॥
ऋषिवत्तेऽपिपूज्यन्ते किम्पुनर्दैवविद्द्विजः" इति गर्गोक्तेश्च ॥ यवनज्योतिर्ग्रन्थानामध्ययने द्विजानान्न दोषः ॥ अथ पङ्को
द्भवकमलादेरीश्वरपूजादौ त्यागस्स्यात्तथा भुजङ्गफणवर्त्तिमणिग्रहणे नादरस्स्यात् ॥ उक्तञ्च गणेशदैवज्ञैः—"ब्रह्मद्रेपितुरुप्कसंभव
मिदं तार्तीयकं वर्तते शास्त्रं यद्यपि सद्द्विजैरपि तथाप्यध्येतुमर्हम्भवेत् ॥ यस्माद्यत्सदसत्फलं निगदितं सत्यं हि किम्पङ्कजे
शङ्का पङ्कभवा तथा फणिफणोत्पन्ने मणौ दूषणम्" इति ॥ हिल्लाजेन तु ब्रह्मविष्णुरुद्रमुखनिर्गतशापेन यवनताम्प्राप्तेन श्रीसूर्येणैव यवनशास्त्र
प्रणयनाद्द्विजानामपि सूर्यसिद्धान्तवत्तदध्ययनं युक्तमित्युक्तम् ॥ "केशवविष्णुमुखनिर्गतशापान्म्लेच्छाधिगततिग्ममरीचेः ॥ रोमके च
पुरि लब्धमशेषं तद्द्विजातिभिरतोध्ययनीयम्" इति ॥ पुरे रोमकपत्तने ॥ यदा च तदेव प्रमेयं केनाचित्सुबुद्धिना समरसिंहादिना अधीतं
तदीयं ज्योतिःशास्त्रेण दृढतरसंस्कारादव्यक्तसंज्ञापरिभाषेण संस्कृतशब्दैरुपनिबद्धञ्चेत्पठ्यते तदा न कोपि दोष इति ज्ञेयम् ॥ 'न वदेद्यावनीं
भाषाम्' एतद्वचनं तु यावनीयकाव्यालंकारादिविषयकमितिसिद्धांतः ॥ ननु सूर्यसिद्धांतादिग्रंथास्तु श्रौतस्मार्तकर्मविषयकाः कथमस्य ताजिकशास्त्रस्य

श्रौतस्मार्तकर्मविषयकत्वम् ॥उच्यते—"अष्टमे वर्षे ब्राह्मणमुपनयेत् षष्ठेऽन्नाद्यकामः" इति ॥तथा—'अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
गौरीं ददद्ब्रह्मलोकं सावित्रं रोहिणीं ददत्' ॥ इत्यादिभिर्वाक्यैरुपनयनविवाहकाला अनेकेऽभिहितास्तेषां ज्ञानं झटिति ताजिकशास्त्रादेव जाय
ते॥ अन्यच्च उक्तकालेपि गुरुशुद्धिं विना यथोपनयनविवाहावुत्सर्गतो न भवतस्तथा जन्मकालात्तत्तद्वर्षेष्वरिष्टसंभवेपि न भवतो दुष्टफलस्य तुल्यत्वादिति॥
ननु सदसत्फलावबोधार्थमस्ति ताजिकशास्त्रस्य प्रवृत्तिस्ताजिकशास्त्रोक्तवर्षप्रवेशो जन्मकालाधीनस्तदंगीकारे च जातकशास्त्रादेव नृणां सदसत्फलबोधो
भविष्यति किमनेन ताजिकशास्त्रेण । अत्रोच्यते ॥ जातकशास्त्रात्सदसज्ज्ञानं बह्वायाससाध्यं बहुकालसाध्यताऽस्ति तथाहि ॥ जन्मकालीनस्पष्टग्र
हानंगीकृत्य दृष्टिषड्बलेष्टकष्टबलानि सर्वग्रहाणामायुर्वर्षाणि चानीय ततो दशामंतर्दशां च निर्णीय जातकशास्त्रोदितं सदसत्फलं वाच्यम् । तत्रापि
इष्टकष्टबलाश्रयगुणकानयने सच्छेदगणितस्य दशाप्रवेशे जन्मकालकलियातवत्सरस्येत्यादिगणितस्य च ज्ञानं सिद्धांतविदामेव न यादृशानां तादृशानाम् ।
अन्यच्च एवमत्यायासेनानीतास्वपि दशासु फलविवेकः कर्तुमशक्यः कथं 'आयुः कृतं येन हि यत्तदेव' इत्यादिवराहोक्तेर्ग्रहायुर्वर्षाणां दश वा पञ्चदश
वा विंशतिर्वेत्यादीनां बहूनां वर्षाणां सत्त्वात्तत्तद्ग्रहसम्बन्धि शुभाशुभदशाफलं तावत्कालमध्ये नैकरूपं सम्भवति॥ अंतर्दशायामपि वर्षाणां पञ्चकं षट्कं
वा एकैकस्य समायाति ॥ तत्रापि नैकरूपमन्तर्दशाफलं विदशासूपदशासु च कस्यचिदल्पवर्षत्वं कस्यचिद्बहुवर्षत्वं समायाति । तत्रापि नैकरूपफल
ता वक्तुं शक्यते ॥ तस्माद्बह्वायासेनापि जातकफलं स्थूलकालफलदमस्ति॥ ताजिके तु वर्षमध्ये सर्वेषां ग्रहाणां दशाः समायांति ॥ अन्तर्दशा त्वल्प
दिनाद्या समायाति तत्र मासप्रवेशफलमत्यन्तसूक्ष्मतरं समायात्यतस्सदसत्फलज्ञानन्ताजिकशास्त्रादेव नितान्तकान्तम् । उक्तञ्च समरसिंहेन—"प्रायो
न जातकफले चिरकालप्रयोज्ये मतिस्स्फुरति पुंसाम् ॥ तेनात्र हायनफलम्प्रकाश्यते जातकप्रोक्तम्" इति ॥ ननु प्राचीनकर्मरूपस्य
दैवस्यावश्यम्भावित्वात्कथमुद्यमो वर्षफलविचारस्य ॥ यदाह शौनकः—"येन तु यत्प्राप्तव्यन्तस्य विधानं सुरेशसचिवोपि ॥ यस्साक्षान्नि
यतिज्ञस्सोपि न शक्तोऽन्यथा कर्तुम्" इति ॥ तथा दैवस्य बलवत्त्वे पुरुषकारो निरर्थकइति । अत्राहुः—किं यदि दैवमेव फलं तदा कृष्याद्युपायेन
पुरुषकाररूपा प्रवृत्तिर्न स्यात् । अथच श्रुतिस्मृत्याद्युदितविधिनिषेधाश्च निरर्थकाः स्युः ।तदाह केशवार्कः—"फले यदि प्राक्तनमेव तत्किं कृष्या
द्युपायेषु परः प्रयत्नः ॥ श्रुतिस्स्मृतिश्चापि नृणान्निषेधविध्यात्मकेकर्मणिकिन्निषेधति" इति ॥ अपिच्च । जन्मान्तरार्जितदैवमपि पुरु

षकारंविना न घटत इति पुरुषार्थस्यैव मुख्यत्वम् । तथा च वसन्तराजः—"पूर्वजन्मजनितं पुराविदः कर्म दैवमिति सम्प्रचक्षते ॥ उद्यमेन तदुपार्जितं सदा वांछितं फलति नैव केवलम्" इति ॥ अथ पुरुषार्थस्यैव मुख्यत्वाङ्गीकारे। "अवश्यंभाविभावानाम्प्रतीकारो भवेद्यदि ॥ तदा दुःखैर्न बाध्येरन्नलरामयुधिष्ठिराः ॥ नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि॥ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्"॥ इत्यादिवाक्यानां गतिरितिचेदत्रोच्यते।तत्र कर्मणां वैचित्र्यं कानिचिद्दृढमूलानि कानिचिच्छिथिलमूलानि॥ यत्र जन्मपत्रशकुनवर्षप्रश्नादिभिर्दशाफलरूपेण प्रतिबंधकेन संतानविद्याद्यभावो निर्णीतस्तत्र ग्रहशांत्यादिरूपेण प्रयत्नेनापि संतानादिप्रतिबंधकीभूतं दृढमूलत्वान्निवारयितुं न शक्यते । यत्र तु ग्रहचारवशेन गोचरादिना संतानादिप्रतिबंधो निर्णीतस्तच्छिथिलभूतत्वेन स्वस्त्ययनादिनोत्ताद्यम् ॥ उक्तंच स्मृतौ—"हन्यते दुर्बलं दैवं पौरुषेण विपश्चिता" इति ॥ एवं शुभसूचकदशापाककाले क्रियमाणा यात्राप्यनायासेन फलसाधिका ॥ अशुभदशायां हानिरित्यतोऽवश्यं ज्योतिश्शास्त्रगणनोपयोगः ॥ पूर्वोक्तशौनकादिवाक्यानि दृढमूलकर्मविषयकाणि । दैवपुरुषकारयोःसाचिव्यमुक्तं याज्ञवल्क्येन—"यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ॥ एवं पुरुषकारेण विना दैवं न सिद्ध्यति" इति ॥ संक्षेपाज्ज्योतिश्शास्त्राध्यापने फलमाह माण्डव्यः—"एवंविधस्य श्रुतिनेत्रशास्त्रस्वरूपभर्तुः खलु दर्शनं वै । निहंत्यशेषं कलुषं जनानां षडब्दतो धर्मसुखास्पदं स्यात् ॥ १ ॥" सूर्यसिद्धान्तेपि—"दिव्यं चक्षुर्ग्रहर्क्षाणां दर्शितं ज्ञानमुत्तमम् ॥ विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम्" इति ॥ ज्ञानविशेषेण ज्योतिर्विदःपूजातारतम्यं जीर्णैरभ्यधायि ॥ "दशदिनकृतपापं हंति सिद्धांतवेत्ता त्रिदिनजनितदोषं तंत्रविद्दृष्ट एव ॥ करणभगणवेत्ता हंत्यहोरात्रदोषं जनयति घनमंधस्तत्र नक्षत्रसूची" इति॥ नक्षत्रसूचिलक्षणं वराहसंहितायाम्—"अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते ॥ स पंक्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः ॥ तिथ्युत्पत्तिं न जानन्ति ग्रहाणां नैव साधनम् ॥ परवाक्येन वर्तन्ते ते वै नक्षत्रसूचकाः ॥" श्राद्धे गणकानामपांक्तेयत्वं धर्मशास्त्रे नक्षत्रसूचकाभिप्रायेण ज्ञेयम् ॥ उक्तञ्च वसिष्ठेन—"त्रिस्कन्धपारङ्गत एव पूज्यः श्राद्धे सदा भूसुरवृन्दमध्ये ॥ नक्षत्रसूची खलु पापरूपो हेयस्सदा सर्वसुधर्मकृत्ये" इति ॥ नन्वस्मिन् ग्रन्थे ग्रन्थबाहुल्यमेव दूषणमितिचेन्न । यतो ग्रंथसंक्षेपेऽन्यग्रन्थापेक्षा विचारसंशयश्च भवति ॥ ग्रन्थविस्तारे संशयापेक्षयोरभावो भवति तस्माद्ग्रन्थविस्तारो न दोषायेति ज्ञेयम् ।

उक्तञ्च यादवेन—"संक्षेपे संशयापेक्षे श्रोतुस्स्यातामसंशयः ॥ वरीयान्विस्तरस्तस्मादपेक्षासंशयापहः" इति ॥ अलमतिप्रसङ्गेन ॥ प्रकृतन्तावदनुसरामः॥ अथ राशिस्वरूपमुक्तं वामनताजिके—"फलं राशिग्रहाधीनं सर्वेषां प्राणिनां यतः॥अतो मेषादिराशीनां स्वरूपम्प्राङ्गिरूप्यते ॥ मेषोवृषोथ मिथुनं कर्कः सिंहोथ कन्यका ॥ तुला ततो वृश्चिकश्च धनुर्मकर एव च ॥ कुम्भो मीन इति प्रोक्ता बुधैर्द्वादश राशयः ॥ मेषोथ मिथुनं सिंहस्तुला धनुरथो घटः ॥ विज्ञेया विबुधैरेते क्रूराः षडपि राशयः ॥ २ ॥ वृषः कर्कस्तथा कन्या वृश्चिको मकरस्तथा ॥ मीन एते षडपि च विज्ञेयास्सौम्यराशयः ॥ मेषकर्कावथ तुला मकरश्चरराशयः ॥ वृषसिंहौ वृश्चिकोथ कुम्भश्च स्थिरराशयः ॥ मिथुनं कन्यका धन्वी मीनश्च द्विस्वभावकः ॥ मेषोथ वृषभस्सिंहोऽपरार्द्धश्च धनुस्तथा ॥ मकरश्च बुधैर्ज्ञेया राशयोऽमी चतुष्पदाः ॥ कर्कटो वृश्चिकश्चोभौ बहुपादौ प्रकीर्तितौ ॥ कुम्भमीनावुभौ राशी विज्ञेयौ पादवर्जितौ ॥ मिथुनश्च तुला कन्या पूर्वार्द्धो धनुषस्तथा ॥ राशयो द्विपदाः प्रोक्ता यवनाचार्यसूरिभिः ॥ मेषश्च सिंहधनुषौ विज्ञेया वह्निराशयः ॥ वृषः कन्याथ मकरस्स्युरेते भूमिराशयः ॥ मिथुनश्च तुला कुंभो राशयः पवनात्मकाः ॥ कर्कवृश्चिकमीनाश्च विज्ञेया जलराशयः ॥ अर्द्धशब्दो मृगः कुंभः कन्या एते च राशयः ॥ तुलालिकर्कमीनाश्च विज्ञेयाः शब्दवर्जिताः ॥ मेषो वृषोऽथ मिथुनः सिंहः शब्दान्वितो धनुः ॥ कर्कालिमीना बह्वपत्याजिन्मोक्षवटकाः स्मृताः ॥ मध्याः सिंहैणकन्याजतुलाः॥पास्तथाल्पकाः ॥ सूक्ष्माः सिंहधनुर्मेषाः पीतोष्णाः पित्तधातवः ॥ वृषकन्यामृगा रूक्षा उष्णशीताश्च वातुलाः ॥ युग्मकुंभतुला उष्णाः स्निग्धांगास्तुल्यधातवः ॥ कर्कमीनालयः स्निग्धाः शीताश्च श्लेष्मधातवः ॥ नृपविट्शूद्रभूदेवास्तथा पूर्वादिका दिशः ॥ मेषात्रिःपरिवर्तेन विज्ञेया विबुधैः सदा ॥पृष्ठोदयाः कर्कमृगधनुर्मेषवृषा अमी ॥ शेषाः शीर्षोदया ज्ञेया उभयश्च झषः स्मृतः ॥ शीर्षोदया दिनबलाः शेषा रात्रिबलाः स्मृताः ॥ राशेः स्वनंदभागो यः स तु वर्गोत्तमाह्वयः" इति ॥ अथ राशिवर्णानाह समरसिंहः—"अरुणसितहरितपाटलधूसरविट्पांडुरविचित्राः ॥ सितहेमद्युतिपिंगाः कर्बुरबभ्रुह्यजादिवर्णाः स्युः ॥" इति ॥ अथ राशिषु विषमोदयत्वसमोदयत्वमुक्तं समरसिंहेनैव । "विषमोदया मृगाद्याः षट् ह्रस्वत्वेन कालमानस्य ॥ कर्काद्याः षट् दीर्घत्वात्समोदया

अजतुलेच समाने" इति ॥ यद्यपि स्वल्पाक्षभेदेंशे कालस्य ह्रस्वदीर्घत्वं न संभवति तथापि बह्वक्षभेदेंशे तत्संभवत्येव । नद्यथा यत्राक्षभाद्वा दशांगुलास्तत्र मकरादीनामुदयपलानि म० २८३ कुं० २०३ मी० १५८ मे० १५८ वृ० २०३ मि० २८३ कर्कादीनामुदयपलानि च क० ३६३ सिं० ३९५ क० ३९८ तु० ३९८ वृ० ३९५ ध० ३६३ अत्र मकरादितः कर्कादीनामुदयपलानि बह्वधिकानीतिज्ञेयम् । एषां प्रयोजनमाह समरसिंह एव । "बृहतां समोदयानां राशीनां मध्यगो विधुर्वृद्धिम् ॥ यदि याति तदा वृद्धिर्वैषम्यं स्याद्व्यत्ययाद्धानिः" इति॥ मेषादिराशीनां संज्ञांतरमुक्तं वराहेण–"क्रियताबुरिजितुमकुलीरलेयपाथोनजूककौर्पाख्याः ॥ तौक्षिकआको केरोहृद्रोगश्चांत्यभंचेत्थम्" इति ॥ केंद्रादिसंज्ञा उक्तास्तेनैव–"कंटककेंद्रचतुष्टयसंज्ञा लग्नास्तदशमचतुर्थानाम् ॥ संज्ञा परतः पणफरमापोक्लिमसंज्ञितं च तत्परतः" इति ॥ ग्रहाणां मूलत्रिकोणगृहाणि तेनैवोक्तानि–'सिंहो वृषः प्रथमषष्ठहयांगतौलिकुंभास्त्रिकोणभवनानि भवंति सूर्यात्' इति राशिस्वरूपम् ॥ अथ राशिस्वरूपप्रयोजनम् । तत्र द्विपदचतुष्पददिनरात्रिसंज्ञाराशिस्वरूपप्रयोजनं वक्ष्यमाणभावफले ज्ञेयम् ॥ पुंस्त्रीराशिप्रयोजनम् ॥ पुंखेटाः पुंराशौ बलिनः स्त्रीग्रहाः स्त्रीराशौ बलिन इतिस्थानबलेज्ञेयम् ॥ पित्तोष्णशीतादिप्रयोजनम् ॥ रोगकर्त्ता यत्रराशावित्यादिष्वभावेविरोगास्थितिज्ञानार्थम्॥राशिदिक्प्रयोजनं यात्रायां दिग्ज्ञानार्थम्॥ चरराश्यादिप्रयोजनम्॥ 'चरोदये भोजनमेकवारम्' इत्यादिभोजनविचारे ज्ञेयम् ॥ राशीनाञ्जलादिचारित्वप्रयोजनन्त्वाखेटकेजलाखेटमाहुः । 'सवीर्य्यैर्ग्रहर्क्षैर्जलाख्यैः' इत्यत्र ज्ञेयम् । वह्न्यादिराशिप्रयोजनम्।अष्टमभावे शिखिराशौ वह्निभयम्।इत्यादिस्थले ज्ञेयम् । ब्राह्मणादिजातिक्रूरसौम्यत्वादिप्रयोजनम्।'लग्नानुमानवसतिवयःप्रमाणञ्च जातयो ज्ञेयाः'।इत्यादिसमरसिंहोक्तं ज्ञेयम्।।यथा ममास्मिन् वर्षे केन लाभो भविष्यति इति विचारे लाभभावलग्नसमवर्णेन तत्क्रूरसौम्यादिप्रकृतिसहितेन मत्समसन्तानेन तत्समबहुजन्मकेन तत्समवर्णादिकवस्तुलाभो वाच्यः। इति राशिस्वरूपप्रयोजनम् ॥अथ ग्रहस्वरूपमुक्तं च यादवेन–"रविविधुक्षितिजा बुधवाक्पती भृगुशनी च तमश्शिखिनौ ग्रहाः॥न च सदा भ्रमणाद्गणो नृणां ददति धातुसमम्फलमुक्तवत्" इति ॥ वामनोपि–"रव्यादयो ग्रहाःसप्त सदसत्फलदायकाः॥मुन्थाफलविशेषस्य ज्ञानार्थं राहुरष्टमः" इति॥ग्रहस्वरूपमुक्तं त्रैलोक्यप्रकाशे–" भार्गवेन्दूजलचरौज्ञजीवौ ग्रामचारिणौ ॥ राहुक्षितिजमन्दार्कान्ब्रुवतेऽरण्यचारिणः ॥ प्रभातमिन्दुजगुरू मध्याह्ने रविभू

मिजौ॥अपराह्नं भार्गवेन्दू सन्ध्याम्मन्दभुजङ्गमौ॥पित्तं प्रभाकरक्ष्माजौ श्लेष्माभार्गवशीतगू॥ज्ञगुरू समधातू च पवनौ राहुमंदगौ॥
कुजार्कौ कटुकौ जीवो मधुरस्तुवरो बुधः॥क्षाराम्लौ चंद्रभृगुजौ तीक्ष्णौ सूर्यार्कनंदनौ॥स्थूल इंदुः सितः खंडश्चतुरस्रौ कुजोष्णगू॥
वर्तुलौ सौम्यधिषणौ दीर्घौ शनिभुजंगमौ ॥ खण्डार्धचंद्राकारः ॥ विप्रौ शुक्रगुरू क्षत्री कुजार्कौ शूद्र इंदुजः ॥ इंदुर्वैश्यस्स्मृ
तो म्लेच्छौ सैंहिकेयशनैश्चरौ ॥ रक्तवर्णः कुजः प्रोक्तो धिषणः कनकद्युतिः ॥ शुकपिच्छसमस्सौम्यो गौरकांतिरनुष्णगुः ॥ मं
दार्कस्य पुष्पेण समद्युतिरथोष्णगुः॥ कविरत्यंतधवलः फणी कृष्णः शनिस्तथा ॥ अवनीशो दिनमणिस्तपस्वी रोहिणीप्रियः ॥
स्वर्णकारःक्षितेः पुत्रो ब्राह्मणो रोहिणीभवः॥वणिग्गुरुःकविर्वैश्यो वृषलः सूर्यनंदनः॥सैंहिकेयो निषादश्च सर्वकार्येषु संमतः ॥ युवा
कुजश्शिशुस्सौम्यश्शशिशुक्रौ च मध्यमौ ॥ मार्तण्डमन्ददेवेज्यफणिनः स्थविरा ग्रहाः ॥ जीवमंगलमार्तण्डानुश
न्ति पुरुषान्बुधाः ॥ सोमसोमजमंदाहिभृगुपुत्राह्वियोषितः ॥ शुक्रे चंद्रे भवद्रौप्यं बुधे स्वर्णमुदाहृतम् ॥ गुरौ रत्नयुतं
हेम सूर्ये मौक्तिकमुच्यते ॥ भौमे त्रपु शनौ लोहं राहावस्थीनि कीर्तयेत् ॥ ग्रहाणां क्रूरसौम्यत्वमुक्तं वामनेन ॥
जीवेंदुसौम्यशुक्राः स्युः सौम्याः क्रूरा ग्रहाः परे ॥ क्षीणेंदुः क्रूरयुक्तो ज्ञो राहुः क्रूराः प्रकीर्तिताः ॥ त्वग्मांसरक्तम्णां
मंदोथ मज्जास्थ्नां भास्करः प्रभुः ॥कुजो रक्तस्य शुक्रस्य भार्गवो मेदसः शशी॥रविः शुक्रो धरासूनुः स्वर्भानुः सूर्यनन्दनः ॥ चं
द्रो बुधः सुरगुरुः प्रागादिदिगधीश्वराः ॥ सूर्येंदुजीवाः सत्त्वाख्या ज्ञशुक्रौ च रजोगुणौ॥ स्वर्भानुभौमरविजास्तमोगुणमयाःस्मृ
ताः ॥ विनष्टादिग्रहलक्षणमाह चण्डेश्वरः ॥ क्रूरदृष्टोयुतोवापि क्रूराक्रांतो विरश्मिकः ॥ स विनष्टो भवेत्खेटो विस्तारोत्र निरूप्य
ते ॥ राहुणाक्रान्तदेहौ तौ दिवाकरनिशाकरौ ॥ जितः क्रूरेण यः खेटः समराशिस्थितोपि वा॥ पापाक्रान्तः स निर्दिष्टः समां
शे क्रूरसंयुतः॥अन्तरालविहीनो यो दृष्ट्या पश्यति पूर्णया ॥ स ज्ञेयः पापसंदृष्टो रश्मिहीनोर्कमध्यगः ॥ अथ ग्रहस्वरूपप्रयोजनं
म् ॥ तत्र ब्राह्मणादिजातिज्ञानं ॥ वृद्धत्वादिवयोज्ञानं ॥ ग्रामादिनिवासज्ञानं ॥ वातादिप्रकृतिज्ञानं ॥ चतुरस्रादिआकृतिज्ञानम् ॥ पुमान्स्त्रीचेतिज्ञानम्
॥ प्रयोजनं मम कार्यमस्मिन्वर्षे केन भविष्यतीतिप्रश्ने वर्षलग्नेशसमजात्यादिकेन वर्षेशसमजात्यादिकेन वा मनुष्येण वा कार्यं ज्ञेयम् ॥ कटुकादिरसज्ञान

म् ॥ तुर्य्यस्थखेटवसतिर्भोज्यान्ने रसमादिशेत्याद्युक्तम् ॥ स्वर्णादिद्रव्योक्तिर्वर्षे सबलग्रहस्य द्रव्यलाभो निर्बलग्रहस्य द्रव्यहानिरित्याद्यर्थं ॥ प्रभातादिका लोक्तेर्भोजनविचारे कालज्ञानार्थम् ॥ ग्रहवर्णप्रयोजनम् ॥ वर्षे सबलग्रहवर्णवस्तुलाभो निर्बलग्रहवर्णवस्तुहानिरेतज्ज्ञानार्थम् ॥ एवमन्यदपि ज्ञेयम् ॥ इति ग्रहस्वरूपम् ॥ अथवर्षप्रवेशवेलानयनम् ॥ तत्साधनमुक्तं यादवेन ॥ शको वर्तमानो जनुःशाकहीनो गताब्दा भवेयुश्चतुर्धा निधेयाः ॥ भुवा १ बाणचंद्रै १५ रिलारामतुल्यै ३१ र्नभःपावकै ३०स्ताडितास्ते विधेयाः ॥ जन्मवारघटिकापलयुक्ताः षट्‌चुपर्य्युपरिगं दिवसाद्यम् ॥ सप्तशेषकमिदं दिनपूर्वा स्वागता भवति हायनवेला ॥ अत्रैव सुगमोपाय उक्तो दैवज्ञचक्रचूडामणिभिरस्मद्गुरुज्येष्ठभ्रातृभिः श्रीमन्नीलकण्ठदैवज्ञैः ॥ गताःसमाः पादयुताः प्रकृतिघ्नसमागणात् ॥ खवेदाप्त ४० घटीयुक्ता जन्मवारादिसंयुताः॥अब्दप्रवेशे वारादि सप्ततष्टेत्र निर्दिशेत् ॥ प्रकारान्तरमुक्तं ग्रहज्ञाभरणे॥ इष्टः शको जन्मशकेन हीनस्त्रिधा सपादो दलितश्च सार्द्धम् ॥युक्तस्तथा जन्मगवारपूर्वैः स्फुटा भवेदब्दनिवेशवेला इति॥ एवं वर्षध्रुवकवशात्ताजिककर्तृभिरनेकप्रकाराअभिहितास्तेप्रयोजनाभावाद्ग्रंथबाहुल्यभयाच्च न लिख्यंते ॥ अथात्ररात्रिजन्मनीष्टकालयोगे विशेषउक्तस्ताजिकालंकारे ॥ निशि जन्म भवेद्यदा तदा गतवारादिकमत्रसंयुतम् ॥ दिनमानयुतक्षपाघटीपलपूर्वैरिहवासरोगत इति ॥ यद्वारात्रिजन्मनि वर्षसंघोत्थघटीषुरात्रिगतघटिकायोज्यास्तत्र वर्षलग्नस्पष्टीकरणं सषट्कसूर्यात्कर्तव्यं यतो गतघटिकाः सूर्यास्ताद्याताइति अथवा वर्षसंघोत्थघट्याद्यमिष्टकालं प्रकल्प्य सजन्मलग्नं रवौ प्रकल्प्य यल्लग्नं तद्वर्षप्रवेशलग्नं भवति ॥ एवं सकलगणकसार्वभौमश्रीमद्रामदैवज्ञात्तविधैर्माहेशैरनेके विशेषाः कर्तुं शक्यंते परंतु विस्तरभयादनुद्योगः॥ अत्रेदंध्येयम् ॥ यदि चैत्रादेरनंतरमपि मीनार्के जन्म तदा पूर्ववर्षशाक एव जन्मशकः प्रकल्प्यः ॥ एवं जन्मार्कसमभानुश्चैत्रादेरूर्ध्वं मेषादेः प्राग्भवति तदा प्रागब्दशक एवाभीष्टशकः प्रकल्प्यः ॥ मेषादेरूर्ध्वं त्वग्रिमशक एव ज्ञेयः॥अन्यथाधिमाससंभवे कदाचिदेव चंद्रवर्षमध्ये द्विवारं जन्मार्कसमभानोः संभवेन वर्षद्वयोत्थवारादिवैलक्षण्यमपेक्षितमपि गतसमासाम्यान्न स्यात् एवमधिमाससहितवर्षादग्रिमवर्षे कदाचिच्चांद्रवर्षमुल्लंघ्यापि जन्मार्कसभानौ जातसत्येकवर्षवारादिसमं वारादेरंतरं च स्यात् तस्मात्सौरवर्षादौ शकप्रवृत्तिर्ज्ञेयेति । अत्र जन्मार्कतुल्रो रविर्यस्मिन्मासे भवति तस्मिन्नेव मासे वर्षप्रवेशो ज्ञेयः ॥ उक्तंच ॥ तिथ्यादिपत्रे जननार्कतुल्यो रविर्भवेद्यत्र स एवमासः इति ॥ तत्र जन्मार्कसमो रविर्यदि जन्ममासे नायाति परे पूर्वे वा मासे आयाति तदा जन्ममास एकरहित एकयुक्तो वा कर्तव्य इति ॥ अथ वर्षध्रु

वक्रोपपत्तिः ॥ अत्र वर्षादिः साध्यस्सच सौरएव ॥ उक्तं च सिद्धांतशिरोमणौ ॥ वर्षायनर्तुयुगपूर्वकमत्रसौरादिति ॥ अथ रवेश्चक्रभोगो
र्कवर्षप्रदिष्टमिति । तेनैवोक्तत्वाद्रविभगणभोगेन सौरवर्षं भवति तस्य स्पष्टगतेश्चञ्चलत्वात्सौरवर्षादिः कदा भविष्यतीति जिज्ञासायां प्रत्यक्षोपलब्ध्या
जन्मकालीनसूर्यतुल्यस्सूर्योयस्मिन्दिने तत्र भगणभोगस्य जातत्वाद्वर्षादिर्जातस्तस्य ज्ञाने उपायः । यदि कल्पसौरवर्षैः कल्पसावनदिनानि लभ्यन्ते तदैकेन
किमितिप्राप्तौ एकस्मिन्वर्षे एते सावनाद्याः ३६५ । १५ । ३१ । ३० वारस्यैक्यापेक्षितत्वादुपरि सप्ततष्टाः जाताः ०१ । १५ । ३१ । ३० ।
अत्रानुपातः । यद्येकस्मिन्वर्षे एते सावनाद्याः तदा भुक्तायुर्वर्षैः किमिति । अत्र गतवर्षाणि अनेन ध्रुवकेण ०१ । १५ । ३१ । ३० । चतुर्षु
स्थानेषु गुण्यानि रूपेण भाज्यानि फलञ्जन्मसमयादारभ्य सावनदिनानीति । अस्मिन् जन्मवारादियोगस्तु वर्षप्रवेशीयदिवसघटीपलज्ञानार्थं कृतः ॥
अत्र पलघटीभ्यः षष्ट्या ऊर्ध्वोर्ध्वयोर्जन्यपलघटीनां षष्ट्याधिकत्वाभावात् कृतोवारस्सप्तभ्योतस्तत्सप्ततष्टमित्युक्तम् । एवं कृते तस्मिन् [illegible]
वर्षादिः स्फुटो भवतीत्युपपन्नम् । अथैकवर्षप्रवेशादग्रिमाब्दादिप्रवेशज्ञानम् भू १ बाणविधु १५ भूगुण ३१ ख्वाग्नि ३० [illegible]
दिकेन युक् ॥ वर्षमासदिनाविशोग्रिमस्स्यात्तिथिरीशयुगीति ॥ ननु सौरवर्षात्सावनचान्द्रनाक्षत्रबार्हस्पत्यवर्षाणां सम्भवे कथं सौरमानेन
वर्षप्रवेशोभिहितः ॥ तत्रोच्यते ॥ चान्द्रसावनवर्षयोस्तु सूर्यस्य वा साम्याभावात्त्यागः ॥ बार्हस्पत्यमानेन जन्मकालिकराश्यादिमध्यमगुरुणा बार्ह
स्पत्यवर्षे यद्यपि गुरोरंशसाम्यं भवति तथापि राशिसाम्याभावात्त्यागः॥ नाक्षत्रवर्षांते यद्यपि चंद्रसाम्यं भवति तथापि ग्रहाग्रेसरस्य ग्रहाणां तेजोधातुश्च
रवेः सौरवर्षे राश्यंशकलाविकलासाम्यात् ॥ अथवर्षायनर्तुयुगपूर्वकमत्रसौरादितिसिद्धांतोक्तेर्यावान् जन्मनि भानुरित्यादिजीर्णताजिकोक्तेश्च सौर
मानेनैवाब्दप्रवेशकरणं युक्तम् । अथ च मासैर्द्वादशभिर्वर्षमिति सूर्यसिद्धांतोक्तेः वर्षभास्करलवेनसमावत्साष्टमासफलमादिशेत्सुधीः ॥
इतिजीर्णताजिकोक्तेश्च सौरमानेनैव मासप्रवेशोपि विधेयः ॥ ननु मासास्तथाच तिथयस्तुहिनांशुमानादिति सिद्धांतोक्तेर्मासप्रवेशे चांद्रमासस्यैव
मुख्यत्वमितिचेत् । न । यथा सौरमासप्रवेशे सूर्यांशसाम्यं ज्ञापकं न तथा चांद्रमासप्रवेशे किंचिदस्ति ॥ अथवा ॥ अधिमाससंभवे त्रयोदशमा
सानां सत्त्वात्पूर्वोक्तं सूर्यसिद्धांतवचो लोकप्रसिद्धं च व्याहन्येत ॥ तस्मात्सौरमानेनैव मासदिनप्रवेशादिकं विधेयमितिसिद्धांतः ॥ अथ वर्षप्रवेश
समये स्वस्वाधीतसिद्धांतकरणादिरीत्या साधितार्कौ जन्मकालीनार्केणावश्यं समो भवति ॥ इदमेव वर्षप्रवेशसमये प्रमाणम् ॥ उक्तंच समर

सिंहेन ॥ यावान् जन्मनि भानुस्तावान् वर्षे स्फुटस्तथैवमपि ॥ श्रीमन्नीलकंठज्योतिर्विद्भिरप्युक्तम् ॥ तत्कालार्को जन्मकालर
विणा स्याद्यतस्समः इति ॥ एवं निष्पन्नस्याब्दप्रवेशकालस्य स्पष्टीकरणमुक्तं हरिभट्टेन ताजिकसारे ॥ सूर्यो वर्षसमुद्भवो नहि भवे
ज्जन्मार्कतुल्यो यदा तद्भुक्त्याविहृतं तयोस्तु विवरं लब्धं च हीनान्वितम् ॥ वर्षावेशघटीपलेषु सततं वर्षार्कहीनाधिके
जन्मोत्थे द्युमणौहि वर्षसमयस्त्वेवम्भवेत्प्रस्फुटम् इति ॥ पार्थपुरनिवासिगणेशदैवज्ञेनाप्युक्तंताजिकभूषणे ॥ जन्मकालनलिनी
विलासिना नैव याति तुलताङ्कलासु चेत् ॥ वर्षकालनलिनीपतिस्तयोरन्तरङ्गतिहृतं युतोनितम् ॥ कार्य्यवर्षघुवे
तस्मादसौ स्पष्टः प्रजायते इति ॥ अत्र वर्षार्कजन्मार्कसाम्याभावात् कालस्पष्टीकरणमुक्तम् ॥ तत्र स्वाधीनकरणात्स्वेष्टया
परयाम्योत्तरादिकर्मसंस्कृतो जन्मकालीनस्पष्टार्कस्तत्करणजातदेशान्तरादिसंस्कृतो वार्षिकस्पष्टार्को जन्मार्कसमोवश्यं भवति ॥ तत्साम्यम
खपुष्पायमाणम् ॥ अत्र धूलीकर्मणाप्यज्ञानमात्मनो दूरीकरोत्वायुष्मान् ॥ एतद्गणितपूर्वकं सकलभूपालमूर्द्धमणिनीराजितचरणकमलानां
लाखण्डलानां श्रीसाहिसुजायहाप्रभूणां मासप्रवेशानयनं लिख्यते ॥ अतः कालस्पष्टीकरणमयुक्तम् ॥ अथ यद्येवमुच्यतेपूर्वोक्तानुपातसाधितत्वात् कल्प
मध्यमभगणोत्थसायनध्रुवेपि ग्रहवन्मध्यमस्तत्साधितवर्षकालस्यापि मध्यमत्वंमध्यमस्पष्टीकरणंयुक्तमेवेति ॥ तदपि न । यतः सौरवर्षान्ते समुपचयाप
यसाम्येन मध्यमध्यमस्पष्टसायनयोस्तुल्यत्वात् सौरवर्षान्तःपातिसमतष्टसायनध्रुवः स्पष्ट एव ॥ तत्साधितोब्दादिः सुतरां स्पष्ट एव ॥ स्पष्टस्य पुनस्स्प
ष्टीकरणं न युज्यते ॥ अतएव यावान् जन्मनि भानुरिति पद्येन ताजिककर्तृषु ऋषिस्थानाभिषिक्तेन समरसिंहेन वर्षकालस्पष्टीकृतिं विनैव स्पष्टार्कसा
म्यमुक्तं नतु मध्यमार्कसाम्यम् ॥ अतएव हरिभट्टगणेशदैवज्ञकृतं कालस्पष्टीकरणमयुक्तम् ॥ इदं पुनरिहावधेयम् । प्रतिवर्षमेकाकलायनांशगतिरिति
जन्मनो भूयसि कालेगतेऽयनांशवशेनोदयांतरचरांतरयोर्वैलक्षण्यात्तत्संस्कृतस्तत्करणात्तत्तद्देशांतरादिसंस्कृतोपि वर्षार्को जन्मार्कसमो न भवति तदर्थमनु
पातेनांतरं साध्यम् ॥ तद्यथा ॥ यदि सूर्यस्पष्टगतिकलाभिः षष्टिघटिकास्तदार्कांतरकलाभिः किमिति लब्धभाज्याद्येन वर्षावेशकालः संस्कार्य इति तस्मा
त्तत्करणजतद्देशांतरभुजांतरसंस्कृतोभीष्टायनांशवशादुत्पन्नोदयांतरेण तद्देशजपलभोत्थतात्कालिकचरेणच संस्कृतो वर्षार्को जन्मार्कसमो यदि न स्यात्तदै
व कालस्पष्टत्वमन्यथा नेति सिद्धांतः ॥ श्रीमन्नीलकंठदैवज्ञैस्तु स्वल्पांतरत्वान्नोक्तमतो न कोपि दोषः॥अथ वर्षप्रवेशे तिथ्यानयनमुक्तं पद्धतिभूषणे॥सम्रा

समाजः शितिकण्ठ११ निघ्नः समाष्ट १६ भागेन समन्वितोस्यै ॥ स्वजन्मतिथ्या च खराम ३० तष्टस्तिथिर्भवद्भू १ नयुता कदाचिदिति ॥ नक्षत्रयोगानयनमुक्तं ताजिकसारे ॥ व्योमेंदुभिः १० संगुणिता गताब्दाः खशून्यवेदाश्वि२४०लवैर्विहीनाः ॥ जन्मर्क्षयोगैः सहिताः पृथक्स्था नक्षत्रयोगौ भवतो भ२७तष्टौ॥लग्नानयनमुक्तं पद्धतौ॥समाससमाजस्त्रिगुणस्समानां दशां१०शयुक्तो जनिलग्नयुक्तः॥ सूर्यौ १२ द्धृतः शेषसमं विलग्नं सामान्यतो भानतमैरगादीति ॥ अत्र तिथिनक्षत्रयोगावर्षप्रवेशदिवसस्य प्रायो नैकटयेनायाति ॥ उक्तं च सुधानिधौ ॥ निश्चयोत्रसदा ज्ञेयो वारात्सर्वत्र हायने ॥ तिथीभयोगतो ज्ञेयमनुमानं भयोगयोरिति ॥ लग्नमपि कालनैकट्ये गणयाज्ञेयम् ॥ तत्रसंक्रांतिज्ञानार्थं दैवज्ञमुकुटालंकाराणां सकलगणकसार्वभौमानामस्मद्गुरुचरणानां श्रीरामज्योतिर्विदां पद्यानि शाकेऽङ्कदस्रेषुमहीं १५२९विहीने त्रिस्थे सपादे दलिते च साक्षे ॥ खे० नागवेदैः ४८ कृतिभिः २० क्रमेणयुक्ते द्विरष्टक्रियसंक्रमः स्यात् ॥ अथैकस्मिन्संपरसंक्रान्तौ ज्ञातायां तदग्रिमसङ्क्रान्तिज्ञानार्थं सूत्रम् ॥ दस्रौ २ शैलशरा ५७ रसा ६ गुणयमा २३ स्त्रीणि ३ द्वयं२ पट् ६ वियद्रामा ३०द्वौ२खगुणाः३०कृता ४ रसशराः ५६ पट् ६ नागवेदाः४८ क्रमात् ॥ भूमिः १ सप्तदश१७द्वयं २ रसगुणा ३६वेदाः४ख्यं ३मार्गणा५रुयक्षा २३ वासरनाडिकास्त्वजादिनाद्ये योजिताः स्युर्बुधात् ॥ अथ संक्रांतितिथिज्ञानोपायः ॥ शाके नवाश्विति १५२९ थ्यूने रुद्रै ११ गमैर्गुणपुभिः ५३॥ [illegible] ११ न्वितः खाग्नि ३० तष्टोभपादजातिथिः ॥ १ ॥ द्वि २ वेदां ४ गा ६ ए ८ दि १० रुद्रा ११ युता स्यादन्यसंक्रमे ॥ द्वि २ द्वि २ द्वि २ द्वि २ द्वि २ भूमि १ वां युक्ता बुद्ध्या क्रमात्पग इति ॥ अथ वर्षप्रवेशे संक्षिप्तपञ्चाङ्गफलमुक्तं त्रैलोक्यप्रकाशे ॥ नन्दाभद्राजयापूर्णाशुभदास्तिथयो मताः ॥ द्वादश्याद्याश्च रिक्ता च न शुभा वर्षवेशने ॥ १ ॥ सोमो बुधो गुरुः शुक्रो वाराश्चत्वार उत्तमाः ॥ भौमार्कशनिवाराश्च वर्षे हानिभयप्रदाः॥२॥अश्विनीमृगशीर्षञ्च हस्तः पुष्यः पुनर्वसुः ॥स्वातिश्च रेवती चैव वर्षवेशे शुभावहाः॥३॥ कृत्तिका रोहिणी चार्द्रा ज्येष्ठा मूलारुयतारका॥श्रवणश्चानुराधा च मध्यं पूर्वोत्तरात्रयम्॥भरणी च मघा चित्रा विशाखा शततारका॥

संक्रान्तिनिथ्यादिज्ञानचक्रम् ।

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी | राशि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | ०२ | ०६ | ०३ | ०६ | ०२ | ०४ | ०६ | ०१ | ०२ | ०४ | ०१ | घटि |
| ० ० | ५७ | २३ | ०२ | ३० | ३० | ५६ | ४८ | १७ | ३६ | ०३ | २३ | [illegible] |
| ० ० | २ | ४ | ६ | ० | १० | ११ | ११ | ११ | ११ | ११ | ११ | तिथि |

धनिष्ठा श्लेषिकाप्रोक्ता वर्षवेशेऽतिनिंदिताः ॥ विरुद्धयोगे विष्ट्यां च वर्षवेशो न शोभनः इति ॥ अत्र विशेष उक्तो दीपिकायाम् ॥ जन्मर्क्षे युक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेच्च॥भवन्ति तद्वारतएव नित्यं नैरुज्यसौभाग्यसुखानि तस्य॥ कृतान्तकुजयोर्वारे यस्य जन्मदिनं भवेत् ॥ अनृक्षयोगसम्प्राप्तौ विघ्नस्तस्य पदे पदे ॥ न ऋक्षमनृक्षं कृतान्तःशनिः ॥ लग्नशुभाशुभफलमुक्तं हायनसुन्दरे ॥ शुभग्रहयुते सौम्ये वर्षस्वामिदृशायुते ॥ रोगोद्वेगापदां नाशस्सुतदारादिसम्पदः ॥ देशभूम्यर्थलाभस्स्याद्दाता भोक्ता नृपप्रियः ॥ सौम्यश्च विपुलाबुद्धिर्वर्षलग्ने शुभे शुभम् ॥ क्रूरवर्षे क्रूरयुक्ते क्रूरस्वामिदृशायुते ॥ रागोद्वेगो भयं दुःखं ज्वरो हानिर्दरिद्रता ॥ राज्यभङ्गं तथौदास्यं स्वबन्धुकलहं कुले ॥ स्थानभ्रंशमवाप्नोति वर्षलग्ने शुभे शुभमिति ॥ अथ वर्षप्रवेशे शुभाशुभफलज्ञानार्थं समुद्रचक्रमुक्तं

| | | | | |
|---|---|---|---|---|
| पर्वत. पु. पु. | तीर. आ. | सागर. मृ.रो.कृ. | तीर. भर. | पर्वत. अ. रे. |
| तीर. आश्ले. | | | | तीर. उत्तरा. |
| सागर. म. पू. उ. | | समुद्रचक्रम् । | | सागर. ध. श. पू. |
| तीर. हस्त. | | | | तीर. श्रव. |
| पर्वत. चि.स्वा. | तीर. विशा. | सागर. अ.ज्ये.मू. | तीर. पूर्वा. | पर्वत. उ.अभि. |

विष्णुयामले ॥ तिर्यगूर्ध्वगतारे खाश्चतस्रस्तत्र संलिखेत् ॥ कृत्तिकादीनि ऋक्षाणि पूर्वाद्यैः सव्यमार्गतः ॥ मध्याश्च सागराःख्यातास्तीरेसागरपार्श्वयोः॥चत्वारः पर्वताः कोणाः पूर्वादि विदिशि क्रमात् ॥ त्रित्रिभं सागरे देयमेकैकं तीरकोष्ठके॥कोणे द्विभं द्विभं मध्यादष्टाविंशति तारकाः ॥ यत्र स्याज्जन्मनक्षत्रं ततो वर्षफलं लभेत्॥मासास्तु वर्षान्मासाच्च दिनानि हि भवंति वै ॥ दुःखं समुद्रे सुखमेव तीरे शैले श्रियं संलभते मनुष्यः॥ जन्मर्क्षगे चेद्भवतीह वर्षे तत्रापि दुःखं किल विष्णुतंत्रे इति ॥ अथ वर्षप्रवेशे शुभाशुभफलज्ञानार्थं त्रिपताकचक्रमुक्तं मुक्तावल्याम् ॥ रेखात्रयं तिर्यगथोर्ध्वसंस्थमन्योन्यविद्धाग्रगमेककोणात् ॥ स्मृतंबुधैस्तत्त्रिपताकचक्रं प्राङ्मध्यरखाग्रगवर्षलग्नात् ॥ १ ॥ न्यसेद्धचक्रंकिल तत्र सैकां याताब्दसंख्यां विभजेन्नभोगैः ॥ शेषोन्मिते जन्मगचन्द्रराशेस्तुल्ये च राशौ विलिखेच्छशाङ्कम् ॥ २ ॥ परे चतुर्भाजितशेषतुल्ये स्थाने स्वराशौ खचरास्तु लेख्याः ॥ स्वर्भानुविद्धे हिमगौ तु कष्टंतापोर्कविद्धेरुगिनात्मजेन ॥ ३ ॥

पूर्वोक्तत्रिपताकचक्रम्।




॥ ६

महीजविद्धे तु शरीरपीडा शुभैश्च विद्धे जयसौख्यलाभः ॥ शुभाशुभव्योमगवीर्यतोत्रफलं च वर्षस्य वदेत्सुधीमान् ॥ ४ ॥ इति ॥ चक्रेमेषराशिरुपलक्षणम् ॥ मेषस्थाने वर्षलग्नं ज्ञेयम् ॥ अथात्र प्रसंगाद्वर्षशुभाशुभफलज्ञानार्थं स्वजन्मलग्नान्मेषसंक्रमणलग्नफलं प्रश्नवैष्णवोक्तं लिख्यते ॥

जन्मोदयाद्भास्वदजप्रवेशलग्नं हि यद्भावगतं शुभान्वितम् ॥ तद्भाववृद्धिं प्रकरोति तस्मिन् वर्षे नृणां पापयुतं तदन्यथा ॥ जन्मोदये देहसुखन्धनेथ लाभस्तृतीये च कुटुम्बवृद्धिः ॥ तुर्ये सुहृत्सौख्यमथात्मजाप्तिः पुत्रेचषष्ठेरिपराजयः स्यात् ॥१॥ स्त्रीसौख्याप्तिर्भवति मदने मृत्युरुग्भिश्चरंध्रे धर्मार्थाप्तिस्तपसि दशमे वित्तसौख्यास्पदाप्तिः ॥ लाभे लाभस्सुखधनचयो दुःखदारिद्र्यमन्ते पुंसां मेषे प्रविशति रवौजन्मलग्नाद्विलग्ने ॥२॥ इति ॥ एतत्फलं सौम्ययुते ज्ञेयं पापयुते सर्वं विपरीतम् । मिश्रयुते मिश्रं ज्ञेयमिति ॥ मेषप्रवेशलग्नस्य जगल्लग्नेति नाम यवना वदन्ति । वर्षलग्नादपि जगल्लग्नविचारोयमुक्तोयंत्राधिकारे ॥ जन्मलग्नाद्वर्षलग्नाज्जगल्लग्नं यदा भवेत् ॥ अष्टमे द्वादशे वापि स वर्षो न शुभावहः ॥१॥ अन्योपि विशेषस्तत्रैव ॥ अष्टमे द्वादशे वापि भवेद्यत्पुरराशितः ॥ जगल्लग्नं तदा हानिस्तत्पुरस्य न संशयइति ॥ अथजन्मकाले येन सिद्धान्तेन करणेन वा मकरन्दरामविनोदादिसारणीग्रंथेन वा ग्रहाः पट्कर्मसंस्कृताः साधितास्तेनैव वर्षप्रवेशेपि उदयांतरादिषट्कर्मसंस्कृतास्स्पष्टाग्रहास्सगतिकाः साधनीयाः ॥ उक्तञ्चपद्धतौ ॥ अब्दप्रवेशे खचरास्सचाराः करणान्निजात् ॥ साधनीयाविलग्नञ्चस्पष्टं कार्यं निजोदयैः ॥१॥ ते ग्रहास्स्पष्टा एव ॥ उक्तंच भास्कराचार्यैः ॥ यात्राविवाहोत्सवजातकादौ खेटैःस्फुटैरेव फलस्फुटत्वमिति ॥ अत्रादिशब्देन वर्षप्रवेशादौ ज्ञेयम् । ताजिकसारेपि विना ग्रहैस्स्पष्टतरैर्न किंचित्फलं प्रवक्तुं नितरां क्षमस्स्यादिति ॥ अथ ब्रह्मसौरार्यादिपक्षाणां सत्त्वात्कस्मिन् पक्षे ग्रहाः साध्या इत्युक्तं दामोदरपद्धतौ ॥ यान्ति संसाधिताः खेटा येन दृग्गणितैक्यताम् ॥ तेन पक्षेण ते कार्याः स्फुटास्तत्समयोद्भवा इति ॥ ननु ग्रहानयनमार्षशास्त्रादेव कर्तुं युज्यते नतु मानुष्यात् ॥ तस्यायथार्थत्वादिति चेत्सत्यं ग्रहानयनं मुनिकृतशास्त्रादेव कर्तुमुचितम् ॥ परन्तु तत्रापि कालवशेनान्तरं पतति । उक्तञ्च सूर्यसिद्धान्ते ॥ शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह भास्करः ॥ युगानां परिवर्तेन कालभेदोत्र केवलमिति ॥ वसिष्ठसिद्धांतेपि ॥ इत्थं माण्डव्य संक्षेपादुक्तं शास्त्रं मयोदितम् ॥ विस्रस्ती रविचन्द्राद्यैर्भविष्यति युगे युगे ॥ विस्रंसनं विस्रस्तिः । शिथिलत्वमिति यावत् ॥ सिद्धान्तसुन्दरेपि ॥ मुनिप्रणीते मनुजैः क्वचिच्च दृश्यते

ऽन्तरम् ॥ तदा तदेव संसाध्यं न कार्यं सर्वमन्यथेति ॥ तदन्तरं बीजसंज्ञब्रह्मगुप्तमकरंदमिश्रादिभिःस्वसत्तादिकाले लक्षयित्वा मुनिशास्त्रजनितेषु ग्रहेषु संस्कृतं तद्युक्तमेव ॥ तथाच ब्रह्मसिद्धांते ॥ संसाध्यं स्पष्टतरं बीजं नलिकादि यंत्रेभ्यः ॥ ततसंस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशावित्यलम् ॥ अथ पञ्चाङ्गयंत्रादेव तात्कालिकीकरणेन स्पष्टग्रहानयनमुक्तं श्रीमन्नीलकण्ठदैवज्ञैः । गतैष्यदिवसाद्येन गतिर्निघ्नी खषड्६० हृता ॥ लब्धमंशादिकं शोध्यं योज्यं स्पष्टो भवेद्ग्रह इति ॥ अथ पञ्चांगीयनक्षत्रादेव चंद्रस्पष्टीकरणमुक्तं तैरेव ॥ इतर्क्षनाड्यः खरसेषु ६० शुद्धाः सूर्योदयादिष्टघटीषु युक्ताः ॥ भयातसंज्ञा भवतीह चैवं निजर्क्षनाड्या सहितो भभोगः ॥ खषड्घ्नं भयातं भभोगोद्धृतं तत्खतर्क ६० घ्नधिष्ण्येषु युक्तं २ द्विनिघ्नम् ॥ नवाप्तं शशीभागपूर्वस्तु भुक्तिः खखाभ्राष्टवेदा ४८००० भभोगेन भक्ता इति ॥ अत्रेदं ध्येयम् ॥ पंचांगीयग्रहाः किंदेशीया उत्पन्नश्च मनुष्यः किंदेशीयः । नहि सर्वदेशीयमनुष्याणामेकदेशनिष्पन्नपञ्चांगेन स्पष्टा ग्रहाः कर्तुं युज्यन्ते ॥ देशभेदेन ॥ देशांतरभुजांतरोदयांतरचरपलादि संस्कारसद्भावात्सूर्यादिसर्वग्रहाणामन्यथादर्शनात् ॥ तस्मात्स्पष्टग्रहसहितैस्तद्देशीयपञ्चांगैःकृत्वा तद्देशीयमनुष्याणां स्पष्टा ग्रहाः कर्तुमिष्यन्ते नत्वन्यत्रेति ज्ञेयम् ॥ अथ लग्नादिद्वादशभावसाधनम् । उक्तं च जातकसुधानिधौ ॥ जन्माब्दपृच्छादिशुभाशुभेषु भावा विधेयाः सुधिया यतोत्र ॥ तत्तद्दर्शनैव दिशंति नित्यं शुभाशुभं भावभवं नभोगा इति ॥ ताजिकतिलकेपि ॥ भावसाधनमथाभिधीयते हायनोत्थफलनिर्णयहेतोः ॥ प्रश्नयानजनिवर्षवेशने भावसाधनमथादिकारणमिति ॥ भावानां नामान्युक्तानि ताजिकमुक्तावल्याम् ॥ तनुधनभ्रातृसुहृत्सुतारिस्त्रीरंध्रधर्माः क्रमशो विलग्नात् ॥ व्यापारलाभव्ययसंज्ञकाश्च संहारगत्या स्युरिमेर्कतुल्या इति ॥ अत्रलग्नादिभावा अन्वर्थसंज्ञा ज्ञेयाः ॥ यथादेहविचारोलग्नात् द्रव्यविचारो द्वितीयादेवं सर्वत्र ॥ एतत्सविशेषभावविचारे वक्ष्यामः ॥ तत्र भावानयनोपायउक्तः ॥ अथ चरखंडदिनार्द्धानयनं । स्यात्सायनेर्केऽजतुलादियातेशक १२ प्रभास्वद्युदलेक्षभासां ॥ त्रिधाक्षभादिग्गजदिग्विनिघ्नीत्वंत्यात्रिहृत्स्युश्चरखंडकानि ॥ स्यात्सायनोष्णांशुभुजर्क्षसंख्यचरार्द्धयोगो लवभोग्यघातात् ॥ खाग्न्याप्तियुक्तस्तुचरं पलादि षष्ट्या विभक्तं घटिकादिकं स्यात् ॥ चरेण संयुतोनाश्च कर्तव्यास्तिथिनाडिकाः ॥ मेषजूकादिषड्भक्ते सायनेस्ते दिवादले ॥ दिनार्द्धं त्रिंशतः शुद्धं शेषं रात्रिदलं भवेत् ॥ अथनतादीनमानयनमुक्तं सकलसिद्धांतमंडली

सरोविहरणराजहंसगणितविद्याचातुरीतांत्रिकपंचाननाहिगवीप्रवीणैः पद्धतिचिंतामणौ । तत्रादौ नतोन्नतानयनं । दिनार्द्धयुग्रात्रिगतावशेषनाड्योनतं पश्चिमपूर्वकं स्यात् ॥ द्युयातहीनं द्युदलं नतं प्राग् द्युखंडहीने द्युगतं परं तत् ॥ अथायनांशानयनं ॥ भूनेत्रवेदो ४२१ नशको दशांश हीनःखषड्भिर्विहृतोयनांशाः ॥ त्रिघ्नोर्कराशिः स्वदलेन युक्तस्तावन्मिताभिर्विकलाभिराढ्यः ॥ अथ स्पष्टलग्नानयनं । तत्र स्पष्टलग्ना नयनोपयुक्तं स्वोदयसाधनं ग्रहलाघवे ॥ लंकोदया नागतुरंगदस्रा गोंकाश्विनो रामरदा विनाड्याः ॥ क्रमात्क्रमस्था २७८। २९९। ३२३। ३२३। २९९। २७८ श्चरखण्डकैः स्वैः क्रमात् क्रमस्थैश्च विहीनयुक्ताः ॥ मेषादिषण्णामुदयाः स्वदेशे तुलादितोमीच विलोमसंस्थाः ॥ अथलग्नसाधनम् ॥ यत्कालार्कस्सायनस्तस्य भोग्यैर्भागैर्निघ्नः स्वोदयः खाग्निभक्तः ॥ भोग्यं जह्यादिष्टनाडी पलेभ्यः शेषादग्र्यान्स्वोदयांश्चावशेषम् ॥ त्रिंशन्निघ्नमशुद्धात्तभागाद्यं मेषपूर्वकैः ॥ अशुद्धात्प्राग्ग्रहैर्युक्तं लग्नं स्याद्व्ययनांशकम् १ भोग्यालपकालात्खात्रिघ्नात्स्वोदयात्तलवादियुक् ॥ रविरेव भवेल्लग्नं सषड्भार्कोन्निशातनुः ॥ अत्र जन्मदेशीयमेषादिलग्नमानैर्लग्नस्पष्टी करणं कर्तव्यं न त्वन्यदेशोदयैरिति ॥ अथ धनर्णे लग्ननयने विशेषः ॥ सूर्योदयाद्यातघटीषु भोग्यैर्दिवावशेषे रसभार्कभुक्तैः ॥ निशागते व्यङ्गयुतार्कभोग्यैर्निशावशेषे रविभुक्तभागैः ॥ गतागतैराश्युदयैः खभोक्त्या लग्नं धनर्णं सममेव भूयादिति ॥ अथ दशमलग्नानयनम् ॥ युक्तायनांशार्कगतैष्यभागा लंकोदयघ्नाः खगुणोद्धृतास्तत् ॥ स्याद्भुक्तभोग्यं तपनस्य जह्यात्पलीकृतात् प्रागपरान्नता त्तत् ॥ क्रमाद्गतैष्यानुदयांश्च शेषमशुद्धहृत्खाग्निगुणं लवाद्यम् ॥ विशुद्धपूर्वापरभे विहीनयुतं खभं स्यादयनांशहीनम् ॥ लग्नं सषड्भं मदनाभिधानं तुर्याभिधं स्याद्दशमात्सषड्भात् ॥ अथ पूर्वनतेपि धनलग्नानयनार्थं मदीयं वृत्तम् । प्राङ्नतस्योन्नतंकृत्वा रविं कृत्वा सषड्भकम् ॥ लंकोदयैर्धनाख्येन कर्मणास्यात्खभं स्फुटम् ॥ अथ नतं विनैव लग्नादेव दशमलग्नसाधनमुक्तं विवाहवृन्दावने ॥ कृत्वा लग्नादर्कवद्रात्रिखण्डं भूयो व्यक्षैस्तद्घटीभिर्विलग्नम् ॥ चक्रार्द्धौ ६ नं ते च तत्कालमेवं जायेयातामस्तमध्याह्नलग्ने इति ॥ अयमर्थः। प्रथमं स्वाभीष्टकाले स्वदेशीयोदयैर्लग्नं कार्यं ततस्तदेव लग्नं दशमलग्नार्थं सूर्यं कल्पयित्वा अयनांशाढ्यभानोरिति चरदलमानेयम् । तत श्चरपलयुतहीना नाडिकाः पंचचंद्रा द्युदलमथनिशार्द्धं याम्यगोले विलोमामितिरात्रिदलमानेयं ॥ ततोरात्रिदलमेवेष्टकालं प्रकल्प्य प्रागा

नीतं लग्नमर्कं कल्पयित्वा व्यक्षैर्लंकोदयैरुक्तप्रकारेणानीतं लग्नं चतुर्थलग्नं भवति । अथ ते प्राग्लग्नचतुर्थे षड्राश्यूने क्रमेण सप्तमदशमलग्ने भवेताम् । अथ लग्नचतुर्थयोः सिद्धौ ससंधिसर्वभावानयने मत्कृतपद्यानि ॥ लग्नं चतुर्थात्संशोध्यशेषं षड्भि ६ र्विभाजितम् ॥ राश्यादि योजयेल्लग्ने संधिस्स्याल्लग्नवित्तयोः ॥ सन्धिः षडंशसंयुक्तो धनभावो भवेत्स्फुटः ॥ धनभावः षडंशाढ्यः सन्धिर्द्धनतृतीययोः ॥ षडंशसंयुतः सन्धिस्तृतीयो भाव उच्यते ॥ षडंशाढ्यस्तृतीयः स्यात्सन्धिर्भ्रातृचतुर्थयोः ॥ तृतीयसन्धिरेकाढ्यस्तुर्यसंधिर्भवेदिह ॥ द्व्याढ्यस्तृतीयभावोऽपि पुत्रभावो भवेत्स्फुटः ॥ आढ्यो द्वितीयसंधिः स्यात्संधिः पञ्चमभावजः॥ धनभावो वेदयुतो रिपुभावः प्रजायते ॥ लग्नसंधिः पञ्चयुतः सन्धिः स्याद्रिपुभावजः ॥ लग्नाद्याः संधिसहिता भावाः षड्राशिसंयुताः ॥ सप्तमाद्या भवंतीह भावाः सर्वे ससंधयइति ॥ अथ केवललग्नज्ञानादेव सकलभावराशिसाधनार्थं सुगमोपायो मत्कृतस्वेष्टलग्नाद्वक्ष्यमाणविधिना चरमानयेत् ॥ लग्ने मेषादिषट्कस्थे तेनोनास्तिथिनाडिकाः ॥ १ ॥ तुलादिषट्के सहिताः प्रकल्प्यास्तेंशकाः पुनः ॥ तैरंशैः सहितं लग्नं लग्नसन्धिः प्रजायते ॥ तैर्युतो लग्नसंधिश्च धनभावो भवेदिह ॥ तैर्युक्तो धनभावश्च धनसन्धिः प्रजायते ॥ तैर्युक्तोधनसन्धिश्च भ्रातृभावो भवेत्स्फुटम् ॥ तैस्संयुतो भ्रातृभावः सन्धिस्स्यात्सहजाभिधः ॥ तृयीयसन्धिस्तैर्युक्तस्तुर्यभावः प्रजायते ॥ पूर्वोक्तवत्प्रसंसाध्याः शेषा भावाः ससन्धयइति ॥ भावविचारफलमुक्तंश्रीमन्नीलकण्ठदैवज्ञैः ॥ खेटे संधिद्वयानास्थे फलं तद्भावजंभवेत् ॥ हीनेधिके द्विसन्धिभ्यां भावे पूर्वापरे फलम् ॥ अन्यत्रापि ॥ आरम्भसन्धेर्द्युचरोयदोनः फलं ददात्यादिमभावजातम् ॥ विरामसन्धेरधिकस्तदानीमागामिभावोत्थफलप्रदः स्यादिति ॥ अत्रेदमवगन्तव्यम् ॥ यदा कदाचिदेकराशिर्भावद्वये समायाति ॥ अथवा एकराशिं परित्यज्य वा याति ॥ तदा भावकुंडल्यां तादृशा एव राशयः स्थाप्याः ॥ सन्धिराश्यादितुल्यो ग्रहः पूर्वापरभावसन्धिस्थरेखायामेव स्थाप्यः ॥ अथ च भावकुण्डली केवलंभावफलार्थैव अन्यस्सर्वोऽपि ताजिकविचारो ग्रहकुण्डल्यैव विधेय इति प्राञ्चः ॥ अथ भावविंशोपकानयनमुक्तं मुक्तावल्याम् ॥ ग्रहसन्ध्यन्तरं भावसन्ध्यंतराविभाजितम् ॥ लब्धं भावफलं ज्ञेयं तत्त्रिभागो विंशोपकाः ॥ ॥ अत्रान्तकरणे विशेष उक्तः पद्धतौ । आद्यसन्धिर्ग्रहाद्भावाच्छोध्यो भावोनके ग्रहे ॥ भावस्थसन्धिमच्छोध्योग्रहो भावस्तथाधिके ॥ भाव

तस्तु फलं सर्वं जन्मवर्षव्रतादिषु ॥ विंशोपकानुमानेन गमनप्रश्नवास्तुषु ॥ अथ कीदृशो भावो ग्रहसंयोगेन शुभाशुभं वा फलं प्रयच्छतीत्युक्तं ताजिकतिलके ॥ निजपतिगुरुवित्सुरारिपूज्यैर्यदि सहितश्च विलोकितः स भावः ॥ अतिशयफलदो न शेषखेटैरथ सहितस्त्ववलोकितोवशेषैः ॥ अत्र वक्ष्यमाणभावबले सबलभावस्य फलदातृत्वं निर्बलस्य नैवेतिज्ञेयं ॥ अथास्माद्ग्रहादयंग्रहःकस्मिन्स्थानेस्तीतिज्ञानार्थंयवनमतेनेतरेतरसंख्या उक्ता चिंतामणौ ॥ अर्कादिभ्यश्चंद्रपूर्वान्सलग्नांस्त्यक्त्वाशेषाधोलवाः पञ्चभूम्यः ॥ चेन्न्यूनास्तच्छोधिताश्शुद्धिमान्स्यात्तस्मिन् राशावन्यथा भे परस्मिन्निति ॥ इति दैवज्ञवर्यपण्डितदामोदरात्मजबलभद्रविरचिते हायनरत्ने ग्रहराशिस्वरूपवर्षप्रवेशाद्यानयनाधिकारः प्रथमः ॥ १ ॥ अथग्रहाणां दृगध्यायो निरूप्यते ॥ तत्रदृष्टिप्रयोजनमुक्तं ताजिकालंकारे ॥ नभश्चराणां न प्रोक्तं यावद्वीक्षणलक्षणम् ॥ तावन्न शक्यते वक्तुं फलं वर्षे शुभाशुभमिति ॥ योगसुधानिधावपि ॥ प्राप्ते करेणाप्यखिलेर्थजाते पुरोगते भ्राम्यति दृष्टिहीनः ॥ तथोपदिष्टेष्टफलेविनेक्षणं वदामि दृष्ट्यानयनं ततोहमिति ॥ तत्र ग्रहाणां चतुर्द्धा दृष्टिः । एका प्रत्यक्षस्नेहा समस्तलोकसमक्षं स्नेहदा ॥ द्वितीया गुप्तस्नेहाअप्रत्यक्षस्नेहकारिका अकथितमेवेष्टकार्यसंसिद्धिदा ॥ तृतीया गुप्तवैरा अप्रकाशितशत्रुभावकारिका ॥ चतुर्थी प्रत्यक्षवैरा ॥ आसां लक्षणं दृष्टिपारिमाणंचाह समरसिंहः ॥ नवपंचयो ९। ५ दृष्टिः पादोना ४५ सर्वदृष्टितः सबला ॥ मेलापकदृष्टिरियं प्रत्यक्षस्नेहदृष्टिश्च ॥ तार्तीयैकादशयो ३। ११ दृष्टौ यो वीक्षते तृतीयदृशा ॥ तद्दृष्टिरूयंशोना४०ऽन्यस्य तु षड्भाग १० दृष्टिश्च ॥ अनयोर्गुप्तस्नेहा दृष्टिः सर्वत्र कार्य्यसिद्धिकरी ॥ अन्यस्यैकादशस्थानद्रष्टुः ॥ दशमचतुर्थे१०।४ दृष्टिः पाद १५ दृगिह गुप्तदुर्जनाख्या तु ॥ या चोभयसप्तमके सकला ६० प्रत्यक्षदुर्जना दृष्टिः ॥ एकर्क्षस्थितयोरप्युभयोर्दृष्टिर्मता सकला ६० ॥ दृष्टिश्च सा उभयसप्तखाम्बुनितिस्रोरिदृशः क्षुताख्यास्स्युरिति ॥ विशदंदृष्टिफलमाह वामनः ॥ पञ्चमे नवमे दृष्टिःसर्वसौख्यफलप्रदा ॥ प्रकटीकुरुते ह्येषा मित्राणि स्वजनांस्तथा ॥ तृतीयैकादशे दृष्टिः सदास्नेहप्रवार्द्धिनी ॥ सुतसन्तोषदा भव्या ह्यायुर्वृद्धिधनप्रदा ॥ चतुर्थे दशमे दृष्टिर्गुप्तदुर्जनभेदिका ॥ मित्रघातकरी दुष्टा शोकसन्तापवर्द्धिनी ॥ उभयोः सप्तमा दृष्टिः प्रकटा रिपुभेदिनी ॥ विवादं विग्रहं युद्धं संकटं च करोति हि ॥ एकर्क्षे बलिनी दृष्टिः प्राधान्यात्कार्य्यसाधिनी ॥ स्वस्थाने फलदा ज्ञेया मित्रपक्षात्तथैव च ॥ तृतीयैकादशे पाद १५ दलं व्योमचतुर्थे

योः ॥ ३० त्रिकोणेऽप्यंघ्रि ४५ मूर्तिस्थे पूर्णं पश्यंति खेचरा इति ॥ वामनेन तृतीये त्र्यंशोना ४० एकादशे षड्भाः १० गमिता चतुर्थदशमे पादमिता १५ दृष्टिरुक्ता ॥ तत्र मूलभूतस्य समरसिंहस्य विरुद्धाद्वानेकताजिकग्रंथादौ मूलंमृग्यमिति ॥ ताजिकसारेपि । पादं त्रिरुद्रे स्वदलं स्वतुर्ये पादत्रयं स्यान्नवपञ्चमेपि ॥ पश्यन्ति पूर्णं समसप्तके च ग्रहा न चान्यत्रविलोकयन्तीति ॥ अत्रैकर्क्षे समरसिंहेनाशुभा दृष्टिरुक्ता ॥ वामनेन शुभा दृष्टिरुक्ता ॥ अनयोर्वाक्ययोर्व्यवस्था । यौग्रहावेकस्थानगतौ उच्चस्वगृहगतौ वक्ष्यमाणमैत्रीचक्रेण प्रकारान्तरेण वा मित्रगृहगौ १० वा स्याताम् ॥ तदा तयोर्दृष्टिश्शुभफलदात्री ॥ यदा तु समशत्रुनीचक्षेत्रादिगौ स्यातां तदा तयोर्दृष्टिरशुभेति ॥ अथ यवननामांकिता दृष्टिः ॥ मुकारिणा स्यादेकर्क्षे सप्तमे स्यान्मुकाविला ॥ तरवीदिक चतुर्थे तु तिस्रः प्रोक्ता भयप्रदाः ॥ तृतीयैकादशे दृष्टिस्तदा प्रोक्ता महोत्तमा ॥ नवपञ्चमयोर्दृष्टिर्वली प्रोक्ता महाशुभेति ॥ अथ द्रष्टृदृश्ययोराशिभेदे सत्यपि द्वादशांशमध्ये तयोरेव स्थाने दृष्टयो यथोक्तफलदात्र्यो द्वादशांशातिक्रमे तु साधारणफलदात्र्यः स्युरित्युक्तं समरसिंहेन ॥ सर्वाश्चैता हि दृशो १२ द्वादशभागांतरे भवेयुश्चेत् ॥ तत्सविशेषा ज्ञेया दृष्ट्यनुसारात्सर्वमिति ॥ वामनोपि ॥ दृष्टिस्थानेषु सर्वेषु द्वादशांशांतरे स्थितः ॥ शीघ्रग्रहाद्ग्रहो मन्दः शुभा सा दृष्टिरुच्यत इति ॥ अत्र ग्रहाणां दीप्तांशमध्ये दृष्टिफलं पूर्णमित्युक्तं ताजिकरत्नमालायां ॥ दीप्तभागस्थिताः संतो दृष्टिस्थानेषु चेत्स्थिताः ॥ तदा दृष्टिफलं पूर्णं प्रोक्तं यच्छंति खेचरा इति ॥ संज्ञातंत्रे । पुरःपृष्ठे स्वदीप्तांशैर्विशिष्टं दृक्फलं ग्रहः ॥ दद्यादतिक्रमे तेषां मध्यमं दृक्फलं विदुरिति ॥ विशेषो मुक्तावल्यां ॥ शीघ्रखेचरपुरःस्थिरगामी तस्य दृग् निगदिता विफला सा ॥ अन्यथा भवति भाविफलाप्त्यै वर्तमानफलदा समगत्येति ॥ अन्यो विशेषस्ताजिकसारे ॥ क्रूरग्रहाश्चेत्खलदृष्टिसंस्थाः पापेतराःसौम्यदृशिस्थिताश्च ॥ यच्छंति ते दृष्टिफलं यथोक्तं फलं तदर्द्धं च विलोमसंस्था इति ॥ यदा तु क्रूराः सौम्यदृष्टिविषये सौम्याः क्रूरदृष्टिविषये तदार्द्धफलदातारःस्युः । क्रूरसौम्ययोर्योगेचरणत्रयं फलं ज्ञेयं ॥ यदाह वामनः॥दुष्टदृष्टिस्थिताः क्रूराः सौम्याः सौम्यदृगाश्रिताः ॥ दृष्ट्युद्भवं फलं पूर्णं नृणां यच्छंति खेचराः ॥व्यत्ययस्थाः फलस्यार्द्धं यच्छंति ग्रहदृष्टिजम् ॥ पादोनं सौम्यपापैश्च फलं ज्ञेयं विचक्षणैरिति विशेषांतरमाह समरसिंहः ॥ चक्रस्य वामदृष्टेर्दक्षिणदृष्टिर्बलीयसी ज्ञेयेति अत्र चक्रस्य वामदक्षिणलक्षणमुक्तं हिल्लाजेन ॥ द्यूनाच्च राशि

षष्ठं वाह्याख्यं चांतरं लग्नात् ॥ बाह्याभ्यंतरयोरपि संज्ञोक्ता वामदक्षिणाख्या तु ॥ वामनोपि ॥ चक्रार्धानांदले दृष्टिर्ग्रहाणां वामदक्षिणा ॥ ज्ञेया ताभ्यां वले प्रौढा वामदृष्टैस्तु दक्षिणेति ॥ अयमर्थः ॥ लग्नस्थग्रहस्य भोग्यभागादारभ्य सप्तमभुक्तभागपर्यन्तं यावद्दृष्टिः सा दक्षिणा । एवं सप्तमाच्च लग्नं यावद्वामदृष्टिस्सादक्षिणदृष्ट्यऽपेक्षया सबला ज्ञेयेति ॥ उदाहरणमाह समरसिंहः ॥ भूकेन्द्रोपरि दृष्टिर्मध्यात्सवले तिसर्वत्रेति ॥ अस्यार्थः दशमदृष्टेस्तकाशाद्धकेन्द्रोपरि या दृष्टिस्सा सबला एवं सर्वत्र ज्ञेयम् ॥ यथा सप्तमस्थग्रहस्य लग्नाद्दशमे चतुर्थे च पादमिता दृष्टिरस्ति ॥ परन्तु चतुर्थदृष्टिर्वामदृष्टित्वाद्दशमदक्षिणदृष्ट्यपेक्षया इत्थशालादियोगेष्वन्ययोगेष्वपि वा सबलाज्ञेयेति अथस्थानविशेषोक्तदृष्टेर्विशेषफलनिर्णयार्थैस्पष्टदृष्टिकलानयनमुक्तंसंज्ञातंत्रे ॥ अपास्य पश्यन्निजदृश्यखेटादेकादिशेषे ध्रुवलिप्तिकास्स्युः ॥ पूर्णं खवेदास्तिथयोक्षवेदाः खेपाष्टिरभ्रंशखवेदसंख्याः ॥ तिथ्यःखचन्द्रावियदभ्रतर्काइशेषांशयातैष्यविशेषघातात् ॥ लब्धं खराभैरधिकोनकैष्येस्वर्णध्रुवे ताः स्फुटदृष्टिलिप्ताइति ॥ अथात्रसुगमोपायोमत्कृतः ॥ दृष्ट्याविहीनदृश्यस्य शेषतो दृष्टिरुच्यते ॥ एकशेषे विनाराशिमंशार्धा दृष्टिरुच्यते ॥ द्विभे पञ्चदशोपेतं भागार्द्धञ्च त्रिशेषके ॥ भागार्द्धात्रिंशता ३० युक्तश्चतुर्थे स्वार्द्धसंयुतम् ॥ भोग्यांशा पञ्चमे द्विघ्ना भुक्तांशा दृष्टिरुच्यते ॥ षष्ठे द्विघ्ना भोग्यभागाः सप्तमे स्वार्द्धसंयुताः ॥ भुक्तभागा भवेद्दृष्टिः कलाद्या ताजिकोदिता ॥ अष्टमाभ्याधिकंप्रोह्यराश्याद्यंभवराशितः ॥ शेषमंशीकृतं द्वाभ्यां हृतं दृष्टिस्तु ॥ जायते नवमे दशमेप्येवं शिवभे भुक्तभागका ॥ द्विनिघ्ना शून्यभेद्विघ्ना भोग्यांशा दृष्टिरुच्यते ॥ अथास्मिन्दृष्टिगणिते स्थानदृष्टिंविनापि ग्रहाणां दृष्टिरायाति तद्यथा ॥

स्पष्टदृष्टिकलानयनकोष्ठकम् ।

| राशयः | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ध्रुविक | ० ६० | ० | ४ | १५ | ४५ | ० | ६० | ० | ४५ | १५ | ० | ० |
| अंतराणि | ६० | ४० | २५ | ३० | ४५ | ६० | ६० | ४५ | ३० | ५ | १० | ६० |
| | ऋ | ध | ऋ | ध | ऋ | ध | ऋ | ध | ऋ | ध | ऋ | ध |

सुगमं ग्रंथकर्तुस्तत्कोष्ठकम् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अंशार्द्धम् | भुक्तमंशार्द्धम् | ३० अंशार्द्धयुताः | भोग्यार्द्धत्वागताः | भुक्तांशाद्विगुणाः | भोग्यांशाद्विगुणाः | भुक्तांशाःस्वार्द्धेगताः ? | राश्याद्यराशिशुद्धमंशीकृतंद्विहृतम् ? | अष्टमवत् ० ० ० | अष्टमवत् ० ० ० | भुक्तांशाद्विगुणः | भोग्यांशाद्विगुणः |

दृश्यो भौमः ५ । १५ द्रष्टा चन्द्रः ० । १५ अत्रोभयोर्यद्यपि षष्ठाष्टमस्थानदृष्टिर्नास्ति तथापि पूर्वोक्तगणितेनागता दृष्टिकलाः

२० तत्र वक्ष्यमाणेत्थशालादियोगे वर्षेशविचारे च ॥ अथ च यो भावस्स्वामिसौम्याभ्यांदृष्टोयुक्तोयमेधतइत्यादि ॥
भावविचारे च स्थानदृष्टेः प्रामाण्यङ्गणितागतदृष्टेर्वा इति संशयनिवारणार्थं यथोभयोरैक्य म्भवति तथा दृष्टिगणितमुक्तं मुक्तावल्याम् ॥ द्रष्टॄनदृश्ये दशदृग्भतुल्ये १० । २ भागाद्यधोनेत्र २ हृतन्तिथि १५ भ्यः ॥ त्र्यङ्के ३।९ खरामे ३० भ्य इभाऽब्धिभे तु ८।४ त्रिघ्नन्द्वि २ हृत्याप्तमिषुश्रुतिभ्यः ४५ ॥ खतर्क ६० राशिप्रमिते द्वि २ निघ्नं वियद्रसेभ्यो ६० भवतीह दृष्टिः ॥ श्रुतीन्दु ४ । १ निघ्नत्रिलवोद्विदिग्भे २।१० खाब्धी ४० रके १० भ्यः स्मरसिंहशास्त्रादिति ॥ अत्र तृतीयैकादशायुक्तदृष्टिस्थानेष्वेव दृष्टिगणितमुक्तन्नान्यस्थानेषु ॥ तत्रापि राश्यादावुक्तदृष्टेः प्रारंभः राश्यंते च क्षयः एवं स्थानदृष्टिगणितागतदृष्ट्योरैक्यादिकंज्योतिर्विदोक्तमेव दृष्टिगणितं युक्तिसहितमालोचयामः ॥ अथ दृक्खेचरानयनमुक्तं ताजिकालंकारे ॥ खेटाधिष्ठितभोदयावधिधियानक्रादिलंकोदयान् संयोज्याप्तमितः फलं खशशि १० भिः सों शादिदृक्खेचरः ॥ युक्तोभैर्नवभिस्तथेष्टखचरं मेषात्स्वदेशोदयानेकीकृत्य पुनस्तथैव खचरः साध्योंशपूर्वो बुधैः ॥ यः स्याद्योग दलं तयोः स भवति स्पष्टोथ दृष्टिग्रहः स्युस्तद्भागमिता लवा यदि तदा दृष्टिः स्फुटा सोच्यते ॥ ज्ञेयं दृग्जनितं शुभाशुभफलं पूर्णं ततो धीमतां केषांचिन्मतमीदृशं दृशि मया खेचारिणां भाषितम् ॥ यादवः ॥ एवं तयोरंशकभागकाश्च दीप्तांशतुल्या यदि योगकार्ये ॥ योगोत्थमिष्टं यदि बाह्यनिष्टं ग्रहोत्र दत्ते किल वक्ष्यमाणमिति ॥ अथ दृष्टिगणिते विशेषांतरो मिश्रोक्तः ॥ दृश्य स्य द्रष्टा रहितस्य भागा गजेंदुत १८ श्चेदधिकाः खरामा ३० त् ॥ शोध्याः पुनस्ते रवितो १२ विशोध्याः स्वदीप्तभागादथवा विशोध्याः ॥ न चेद्विशुध्यंति तदा न दृक् स्याद्यथोक्तदृक् तेन कला विनिघ्नाः ॥ दिवाकरै १२ दीप्तलवैः क्रमेण भक्ताः स्फुटा दृष्टिकला भवंतीति ॥ ग्रहदृष्टिप्रयोजनमाह वामनः ॥ फलं दृष्टिप्रमाणेन स्वयं यच्छंति खेचराः ॥ तत्फलं बलमानेन ज्ञात्वा देइयं शुभाशुभमिति ॥ अथ दृष्टिप्रधानत्वान्मैत्रीचक्रस्य पूर्वं दृष्टयोभिहितास्तत्रावसरप्राप्तं मैत्रीचक्रमुच्यते ॥ तत्र मैत्रीचक्रं चतुर्विधम् ॥ एकं दृष्टि

स्थानगणितागतदृष्ट्यैक्यगणितचक्रम् ।

| दिष्टावर्जितदृशः | १० | २ | ३ | ९ | ४ | ८ | ० | ६ | २ | |
|---|---|---|---|---|---|---|---|---|---|---|
| शेषभागः ग्रहांकाः | १ | १ | १ | १ | ३ | ३ | २ | २ | ४ | १ |
| भाजकाः | २ | २ | १ | १ | २ | २ | १ | १ | ३ | ३ |
| पावाकला (?) | १५ | १५ | ३० | ३० | ४५ | ४५ | ६० | ६० | ४० | |

वशेन मित्रसमशत्रुरूपं ॥ द्वितीयं दृष्टिवशेनाधिमित्रसमशत्रुआधिशत्रुरूपं ॥ तृतीयं दृष्टिवशेन मित्रशत्रुरूपम् ॥ चतुर्थं दृष्टिं विनैव नियतमित्रशत्रुरूपम् ॥ तत्र प्रथमं त्रिधामैत्र्यादिसाहितं मैत्रीचक्रमुक्तं रोमकताजिके ॥ मित्रं तृतीयपंचमनवमैकादश ३ । ५ । ९ । ११ गतोपियोयस्य ॥ धनरिपुमृतिरिष्फेषु च २ । ६ । ८ । १२ समो ग्रहस्स्यादिति ज्ञेयम् ॥ शत्रुस्तथैकतुर्य्यें जायास्थाने तथा दशमे १ । ४ । ७ । १० ताजिकहिल्लाजमतेनैताद्दक्कथितमस्माभिरिति द्वितीयं विशेषबलोपयुक्तम्पञ्चधामैत्रीचक्रमुक्तम्मुक्तावल्याम् ॥ यः प्रत्यक्षसमत्वदृष्टि ९ । ५ फलदो ज्ञेयोऽधिमित्राभिधो गुप्तस्नेहदृशा ३ । ११ थ पश्यति च यो यं मित्रमस्य स्मृतम् ॥ नैवालोकयतीह २ । ६ । ८ यस्स तु समो यो गुप्तदौर्जन्यदृक् ४ । १० दृष्ट्या शत्रुरथाधिशत्रुरपि यः प्रत्यक्षदौर्जन्यदृक् ७ । १ इति ॥ तृतीयमित्रशत्रुरूपमैत्रीचक्रमुक्तं तत्रैव ॥ इष्टानिष्टेक्षकौ खेटौ नेक्षकौ च शुभाशुभम् ॥ यद्वा मित्ररिपू ज्ञेयौ स्वदृङ्ज्ञानानुमानत इति ॥ चतुर्थं नियतमित्रशत्रुरूपन्द्विविधम्मैत्रीचक्रमुक्तन्ताजिकसारे ॥ मित्रारायारशशाङ्कशक्रसचिवा भौमार्कदेवार्चिताजीवार्कक्षणदाधिपाऽशनिसितौ चन्द्रार्कभूनन्दनाः ॥ सौम्यादित्यभवौ शशाङ्कजसितौ मन्दज्ञशुक्रा इमे सूर्यात्स्यू रिपवस्तु ताजिकमते ज्ञेयाबुधैश्चोदिता इति ॥एषां सर्वेषाञ्चक्राणां यथासम्प्रदायंव्यवस्थाद्रष्टव्येति मैत्रीचक्रप्रयोजनंवक्ष्यमाणपञ्चवर्गीबले ज्ञेयम् ॥ तदग्रे सर्वम्प्रकटीभविष्यति ॥ अथपञ्चवर्गीबलन्तत्प्रयोजनं चाह यादवसूरिः ॥ बलं विंशोपकज्ञानम्पञ्चवर्गीबलंविना ॥ नभवेदथवक्ष्यामि पञ्चवर्गीप्रसाधनामिति ॥ ताजिकालंकारेपि ॥ वीर्य्यज्ञाने वर्षनाथःप्रसिद्धः कर्तुं शक्यो नैव यस्मात् समासु ॥ ज्ञातुंवीर्य्यं सूर्य्यतः खेचराणान्तस्माद्वक्ष्ये पञ्चवर्गीविधानमिति ॥ पञ्चवर्गानाह समरसिंहः ॥ स्वगृहं स्वोच्चहद्दत्रैराशिकमथमुसल्लहं चेति ॥ पञ्च ग्रहाधिकारा विनाधिकारं ग्रहो न बलीति ॥ तदर्थंग्रहेशानाह वामनः ॥ भौमशुक्रज्ञचंद्रार्कबुधशुक्राऽऽरमंत्रिणः ॥ शौरिः शनिस्तथाजीवो मेषादीनामधीश्वराइति ॥ अथ ग्रहाणामुच्चनीचराशीन् तत्परमोच्चानाहयादवः ॥ मेषोवृषोथ मकरो मृगदृक्कु

मित्रामित्रकोष्ठकंसूर्यादीनाम् ।

| ग्रह | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| मि. | चं. मं. बृ. | सू. मं. बृ. | सू. चं. बृ. | श. शु. | चं. सू. मं. | बु. श. | बु. शु. |
| शत्रु | शु श | बु शु श | बु शु श | सू चं मं बृ | बु शु श | सू चं मं बृ | सू चं मं बृ |

लीरो मीनस्तुलादिनवपूर्वखगोच्चकानि ॥ अंशा १० ग्नि ३ पिंड २४ तिथि १५ वायु ५ भ २७ विंश २० तुल्यास्तुंगालवाः स्वनगगास्तु भवंति नीचा इति ॥ राशिषुहद्देशाःसंज्ञातंत्रे ॥ मेषेगतर्काष्टशरेषु भागाजीवास्फुजिज्ज्ञारशनैश्चराणाम् ॥ वृषेष्टषण्नागशरानलांशाः शुक्रज्ञ जीवार्किकुजेशहद्दाः ॥ युग्मे षडंगेषु नगांगभागाः सौम्यास्फुजिज्जीवकुजार्किहद्दाः ॥ कर्कोद्रि तर्कांगनगाब्धिभागाः कुजास्फुजिज्ज्ञेष्यशनैश्वराणाम् ॥ सिंहेंगभूताद्रिरसांगभागादेवेज्यशुक्रा र्किबुधारहद्दाः ॥ स्त्रियांनगाशाब्धिनगाक्षभागाः सौम्योशनोजीवकुजा र्किनाथाः ॥ तुलेरसाष्टाद्रिनगद्रिभागाः कोणज्ञजीवास्फुजिदारहद्दाः ॥ कीटेनगाब्ध्यष्टशरांगभागा भौमास्फुजिज्ज्ञेज्यशनैश्वराणाम् ॥ चापे रवीष्वंबुधिपञ्चवेदा जीवास्फुजिज्ज्ञारशनैश्वराणाम् ॥ मृगेनगांब्ध्य ष्टयुगश्रुतीनां सोमेज्यशुक्रार्किकुजेशहद्दाः ॥ कुम्भे नगांगाद्रिशरेषु भागा ज्ञशुक्रजीवारशनैश्चराणाम् ॥ मीनेर्कवेदानलनंदपक्षाः सितेज्यसौम्यारशनैश्वराणाम् ॥ अथ त्रैराशिकेशाउक्तास्ताजिकालंकारे ॥ मेषे भौमार्कशुक्रा बुधविधुशनयः स्युर्वृषे युग्मराशौ देवेज्यक्ष्माजसूर्याः सितबुधशशिनः कर्कटे संप्रदिष्टाः ॥ सिंहे मंदेज्यभौमा रविसितशशिजाः स्युर्युवत्यान्तुलायाश्चन्द्रार्कौज्यास्तथालौकुजरविकवयो ज्ञेन्दुमन्दाश्च चापे ॥ मकरे गुरुभौमपद्मिनीशास्सितविच्चन्द्रमसोघटे निरुक्ताः ॥ शनिवाक्पतिभूमि जास्तु मीने कथितास्सद्गणकैर्द्रकाणनाथाः ॥ इति त्रैराशिकेश्वरा लाघवेनोक्तास्संज्ञातन्त्रे ॥ आद्याः कुजाद्या रवितोपिमध्यमास्सितात्तृतीयाः क्रियतो द्रकाणपाइति ॥ अतिलाघवेनत्रैराशि:

ग्रहाणामुच्चपरमोच्चनीचपरमनीच राश्यंशकोष्ठकम्।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|
| ० | १ | ९ | ५ | ३ | ११ | ६ |
| १० | ३ | २४ | १५ | ५ | २७ | २० |
| ६ | ७ | ३ | ११ | ९ | ५ | ० |
| १० | ३ | २४ | १५ | ५ | २७ | २० |

राशीनां हद्देशकोष्ठकम्।

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| बृ ६ | शु ८ | बु ६ | मं ७ | बृ ६ | बु ७ | श ६ | मं ७ | बृ १२ | बु ७ | बु ७ | शु १२ |
| शु ७ | बु ६ | शु ६ | शु ७ | शु ६ | शु १० | बु ८ | शु ४ | शु ५ | बृ ७ | शु ६ | बृ ४ |
| बु ८ | बृ ८ | बृ ५ | बु ६ | श ७ | बृ ४ | बृ ७ | बु ८ | बु ४ | शु ८ | बृ ७ | बु ३ |
| मं ५ | श ५ | मं ७ | बृ ७ | बु ६ | मं ७ | बु ७ | बृ ५ | मं ५ | श ४ | मं ५ | मं ९ |
| श ५ | मं ३ | श ६ | श ४ | मं ६ | श २ | मं २ | श ६ | श ४ | मं ४ | श ५ | श २ |

त्रैराशिकेशचक्रम्।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | रा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मं | बु | बृ | शु | श | सू | चं | मं | बु | बृ | शु | श | अ १० |
| सू | चं | मं | बु | बृ | शु | श | सू | चं | मं | बु | बृ | अ २० |
| शु | श | सू | चं | मं | बु | बृ | शु | श | सू | चं | मं | अ ३० |

केश्वराउक्ताहारिभट्टदैवज्ञैः ॥ द्विशून्यपञ्चयुग्राशिस्सततष्टे दृकाणपाः ॥ अत्र वर्तमानो राशिर्ज्ञेयः वर्तमानराशिः प्रथमद्रेष्काणे द्वियुतो द्वितीय द्रेष्काणे शून्ययुतस्तृतीयद्रेष्काणे पञ्चयुक् कर्तव्यस्सततष्टेसूर्यात् द्रेष्काणस्वामी भवतीत्यर्थः ॥ मुसल्लहाउक्तास्ताजिकरत्नमालायाम् ॥ मुसल्लहाः स्युः क्रियनक्रजूककुलीरपूर्वाक्रियपूर्वकाणामिति ॥ एतत्स्पष्टेनहशा आहयादवसूरिः ॥ अजधनुर्हरयोजमुखात्स्मृतास्त्वलिकुलीरझषाश्चकुलीरतः ॥ घटमुखा घटयुग्मघटामता ? मृगवृषमकरादयइति ॥ अत्रताजिकभूषणताजिकालंकारादौ मुसल्लहेशा अन्यथैवोक्ताः ॥ रवीज्यमंदास्सितचन्द्रभौमाः शनिज्ञजीवाः कविभौमचन्द्राः॥मुसल्लहेशा अजतो मृगेन्द्राद्धनुर्द्धरादह्नि निशि द्वयोर्वेति॥नैतद्रम्यम्॥यतस्समरसिंहे नैते वर्षेशनिर्णयार्थं त्रैराशिकेश्वरा उक्ता नतु मुसल्लहेशाः ॥ मेषादिचतुस्त्रैराशिकेश्वरा रविसिताकिंभृगवो हि गुरुशशिबुधभौमा निशि शनिकुजगुर्विन्दवःशततमिति ॥ एते दिनरात्रिविभागोक्तास्त्रैराशिकेश्वरा वर्षेशार्थमेवेत्युक्तं संज्ञातंत्रे ॥ वर्षेशार्थं दिननिशोर्विभागोक्तास्त्रिराशिपा इति ॥ तस्मादत्र पूर्वोक्ता नवांशेशा एव मुसल्लहेशाः ॥ उक्तंचसुधानिधौ ॥ मुसल्लहं नवांशश्च कथितं ताजिके मतेइति ॥ ताजिकतिलकेपि ॥ मुशल्लहशाश्च नवांशनाथाः प्रोक्तास्सदा खिन्दकरोमकाद्यैरिति ॥ ताजिकमुक्तावल्यामपि ॥ मुसल्लहेशान्नवमांशपान् ये जगुर्न ते खिदकशास्त्रविज्ञा इति ॥ अथ पञ्चवर्गीफलमुक्तं यादवेन ॥ स्वकीयगेहादिभवा शुभा स्यात्पापारिजाता विपरीतभावा ॥ मित्रादिजा मध्यफलेषुवर्गी ५ विशेषवीर्यानयनं ब्रुवेऽहम् ॥ अथ पूर्वं ग्रहबलज्ञानार्थं स्थानान्युक्तानि ॥ इदानीं कस्मिन्स्थाने कियद्बलमित्युक्तं ग्रहज्ञाभरणे॥ त्रिंशत् ३० स्वभे विंशतिरुच्चगे स्यात्तिथिः १५ स्वहद्दे दशकं दृकाणे १० नवांशके पञ्च ५ भवन्त्यशीतिरेवं युगाप्ताश्च विशोपकाः स्युरिति ॥ अथ मित्रसमशत्रुरूपे मैत्रीचक्रे बलविभाग उक्तः संज्ञातंत्रे ॥ स्वस्वाधिकारोक्तबलं सुहृद्भे पादोनमर्द्धं समभेरिभेंघ्रिः ॥ एवं समानीय बलं तदैक्ये वेदोद्धृते हीनबलः शरोनइति॥उच्चबलानयनमुक्तं वामनेन ॥ नीचोनितो ग्रहः षड्भाधिकोमण्डल १२ शोधितः॥ शेषस्यांशा नंद ९ भक्ता बलमुच्चस्य जायतइति ॥ अथात्रमामकंपद्यम् ॥ नीचग्रहान्तरं कार्यंषड्भादल्पं यथा भवेत् ॥ तदांशांक ९ लब्धः स्वोच्चबलं स्यात्ताजिके स्फुटमिति ॥ नीचे ग्रहः शोध्यो नीचं वा ग्रहे शोध्यं शोधिते सति यथा षड्भादल्पं भवति तथा कार्यम् ॥ तस्यांशा

नवभक्ता उच्चबलं स्यादिति ॥ अथाधिमित्रमित्रसमशत्र्वधिशत्रुरूपे मैत्रीचक्रे. बलविभाग उक्तस्ताजिकतिलके ॥ उक्ताः कलाः स्वर्क्षगते ग्रहेंद्रे प्रत्येकवर्गे त्वधिमित्रगेहे ॥ स्वांघ्र्यंशहीनाहितगेहसंस्थे स्वार्द्धोनिताःस्वांघ्रिलवत्रयोनाः ॥ समर्क्षगे शत्रुगृहोपयाते निजाष्टमांश प्रमितं बलं स्यात् ॥ अधिद्विषड्भोपगते स्वकीये नृपांशलिप्ताइति वर्गवीर्यम् ॥ यथागतं तुंगबलं तु तेन समन्वितं वर्गबलं बलं स्यादिति ॥ मित्रशत्रुरूपे मैत्रीचक्रे बलमुक्तं पद्धतौ ॥ निजमित्रारिभेत्रिंशत्ति ३० थ्य १५ स्साद्धोद्रयो ७। ३० बलम् ॥ हद्दे तत्तद्दलं त्र्यंशे द्रेष्काणेंशे रसांशकं इति ॥ अंशेनवांशे ॥ एतत्स्पष्टमुक्तंताजिकसारे ॥ त्रिंशांशा निजभे स्वमित्रभवने घस्रांशकाः १५ शत्रुभे साद्धोस्सप्तलवाः ७। ३० स्वखाग्निलवके भागास्तु पञ्चेन्दवः १५ ॥ त्रिंशांशे निजमित्रभे नगलवाः साद्धोः ७। ३० कृताः शत्रुभे पादोनाः ३। ४५ स्वगुणांशके दललवा १० बाणांशका मित्रभे ॥ द्रेष्काणे सदला यमा २। ३० स्त्वरिगते नंदांशके स्वे शरा ५ नंदांशे निजमित्रगे यमलवाः साद्धों २। ३० स्त्वरौ तद्दल १। १५ मिति ॥ तदैक्यतुर्यभागगप्रमाणिकाबलोन्मितो दशाधिके बलो बली शराल्पकेल्पवीर्यक इति अत्र वामनेन लग्नस्यापि पंचवर्गीकार्यमित्युक्तम् ॥ स्वोच्चं नवांशकं हद्दा गृहं द्रेष्काण एवच ॥ सहमं खेचराणां तु प्रोक्तेयं पंचवर्गिकेति ॥ अथ वर्षेशदशाधीशबलादिनिर्णयार्थं विंशोपकातिभागेन नष्टबलादिलक्षणमुक्तन्ता जिकसारे ॥ बाणाल्पैर्नष्टबलोग्रहोदश १० मितैर्मध्योविशोपैस्ततः श्रेष्ठो वस्र १५ मितैस्सुखार्थजनकः प्रोक्तः खदस्रै २० र्भवे दिति ॥ ननु विंशतिविंशोपकात्मकम्बलङ्कस्यापि ग्रहस्य नायाति तथाहि मेषस्थसूर्यस्य उच्चबलादि यद्यपि समायाति यथापि स्वगृह त्वान्मित्रसमशत्रुगृहादिभेदकृतबलतारतम्येनावश्यं न्यूनतासार्द्धद्वयविंशोपकामिता भवत्येव एवंसति सार्द्धास्सप्तदशविंशोपकाबलं सिंहस्थसूर्यस्य स्वगृहबलं यद्यपि समायाति तथाप्युच्चराशेरभावादुच्चबलस्य न्यूनतायां षोडशविंशोपका बलं स्यान्नतु विंशतिविंशोपकात्मकम् ॥ अथ बुधस्य कन्यायां पञ्चदशांशे स्वगृहबलं स्वोच्चबलञ्च पूर्णं यद्यपि समायाति तथापि हद्दाद्रेष्काणनवांशबलानि पूर्णानि न सम्भवंति ॥

पञ्चवर्गिकाचक्रम् ।

| ०० | स्व | मि | स | श |
|---|---|---|---|---|
| गृ० | ३०।० | २२।३० | १५।० | ७।३० |
| हद्दा | १५।० | ११।१५ | ७।३ | ३।४५ |
| द्रे. | १०।० | ७।३० | ५।० | २।३० |
| न. | ५।० | ३।४५ | २।३० | १।१५ |

| पंचधामैत्रीचक्रबलचक्रम्। | | | | | |
|---|---|---|---|---|---|
| | स्व | मि | मि | स | श |
| गृ. | ३० ० | २२ ३१ | १५ ० | ७ ३० | ० १५ |
| ह्र. | १५ ० | १२ १५ | ७ ३० | ३ ४९ | ० ५६ |
| द्रे. | १० ० | ७ ३ | ५ ० | २ ३० | ० ३७ |
| न. | ५ ० | ३ ४५ | २ ३० | १ १५ | ० १८ |

यतः ॥ आदिमाः षडंशाःकन्यायाम्बुधहद्दाअन्तिमस्त्रिभागो बुधद्रेष्काणः अंतिममंशत्रयंविंशतिकलाधिकम्बु धनवांशः यदि कन्यान्तिमनवांशो गृह्यते तदा स्वगृहे द्रेष्काणस्वनवांशबलानि सम्पूर्णान्यायान्ति परन्त्वेकं सन्धिवत्सतोऽपरंप्रच्यवत इति न्यायादुच्चबलं किञ्चिदूनं हद्दादिबलमपिमित्रादिगेहसत्त्वान्न्यूनमतः परमं बलं यथाकथञ्चिदष्टादशविंशोपकात्मकंस्यान्नविंशतिविंशोपकात्मकम्बलमन्येषान्तुग्रहोच्चयोर्भेदाद्विंशतिविंशोपकन्न्यून मेवबलं स्यात् ॥ अत्र केचित्पंचवर्गीद्वादशवर्गीहर्षस्थानबलानामैक्यं त्रिभक्तं यदि विंशतिविंशोपकामितं स्यात्तदा पूर्णबलोग्रहो ज्ञेयः ॥ उक्तंच यादवेन ॥ श्रीसूर्यवर्गीशरवर्गिकासु स्थानोत्थवीर्यैक्यमथाग्निभक्तम् ॥ चेद्विंशतिः पूर्णबलो ग्रहः स्याद्बलानुमानेन च मध्यमादिरिति। अलमतिप्रसंगेन॥ अथ दशाफलज्ञानार्थं पंचविंशोपकान्न्यूनबलो नष्ट बलः पंचविंशोपकात्मकबलः स्वल्पबलः पंचाधिकबलो मध्यबलोदशाधिकबलः पूर्णबलः वर्षेशफलज्ञानार्थं तु षड्विंशोपकात्मकबलो हीनबलःषड्विं शोपकाधिकबलो मध्यबलो द्वादशविंशोपकाधिकबलः पूर्णबलः ॥ एतत्स्पष्टमुक्तंहिल्लाजेन ॥ पंचविंशोपकान्न्यूनबलो नष्टबलो ग्रहः ॥ पंचविं शोपकबलोहीनवीर्यः प्रकीर्तितः ॥ पंचाधिकबलो मध्यबलः संपूर्णवीर्यकः ॥ दशाधिकबलोऽब्देशफलं ज्ञेयं त्रिभागतः ॥ इतिमासा न्यपंचवर्गीबलसाधनम् ॥ अथ खत्तखुत्तखिंदकादिसंमतं स्थानादिकालनिसर्गचेष्टादृग्बलं निरूप्यते॥उक्तंच समरसिंहेन ॥ सामान्यबलमित्रोक्तं विशेषमवलोक्य फलमूह्यमिति ॥ तत्रादौ स्थानबले सविशेषपंचवर्गीचक्रसूचनमुक्तम् ॥ कुत्थयोगे समरसिंहेन ॥ सबलीस्वगृहत्रैराशिकहद्दा च्चमुसल्लहेषुवरिष्ठइति ॥ एतत्स्पष्टंगणितपूर्वकमुक्तंताजिकमुक्तावल्याम् ॥ स्वाधीष्टादौ तर्कवेदाग्निनेत्रे रूपार्द्धानि स्युर्गृहेको १२ द्रुतानि ॥ तुंगे वेदास्त्यश्विनस्तत्तदर्द्धं हद्दे रामा द्वौ तदर्द्धान्यतः स्युः ॥ त्रैराश्युत्थेद्वौ तदर्द्धार्द्धकानि त्रैराश्यर्द्धः स्यान्मुसल्लाहसंज्ञे ॥ यद्वा स्वे ष्टारातिषु द्वादशांशो गेहादंगाऽध्यग्नयोऽध्याग्निदस्राः ॥ रामाऽव्यब्जानेत्रचन्द्रार्द्धकानि चन्द्रार्द्धांशा रूपपूर्वाः क्रमेण ॥ खेटे शुद्धे सप्तमात् स्वादिगेहाच्छेषे भार्द्धेन्यत्रकल्प्योनुपातः ॥ अभीष्टादिगृहादिभ्यो बलं यदिह साधितम् ॥ तत्तद्वज्ञानानिघ्नन्तत्षष्टिभक्तं

| मित्रशत्रुरूपमैत्रीचक्रम्। | | | | |
|---|---|---|---|---|
| १८ | द्रे | ह | न. | ० |
| ३० | १५ | १० | ५ | स्वगृह |
| १५ | ७ ३० | ५ ० | २ ३० | मित्र |
| ७ ३० | ३ ४७ | २ ३० | १ १५ | शत्रो |

स्फुटम्भवादात ॥ अथ तर्कवंदायकानां द्वादशाद्धृतानि रूपकलादिकम्बलम्भवति ॥ अथात्र स्वगृहे पूर्णम्बलन्तुतच्छ स्वगृहनगभागइत्युक्तेः

| पंचधामैक्यांबलविभाग:एतेअंकाद्द दशोद्धृता:रूपकलादिबलम्। | | | | | |
|---|---|---|---|---|---|
| स्वीयवर्गे | ६ | ४ | ३ | २ | १ |
| अधिमित्रवर्गे | ४ | ३ | २ | १ | ॥ |
| मित्रवर्गे | ३ | २ | १ | ॥ | । |
| समस्यवर्गे | २ | १ | ॥ | । | = |
| शत्रुवर्गे | १ | ॥ | । | = | |
| अधिशत्रुवर्गे | ॥ | । | = | – | ॥। |
| ००००० | गृह | उच्च | हद्दा | त्रैरा | मुस |

स्वगृहात्सप्तमे राशौ ग्रहो निर्बलः अन्तरे त्रैराशिकमुच्चबलवज्ज्ञेयं तत्रार्कचंद्रयोरेकमेव स्वगृहमतोनसंदिग्धम्भौमादीनां तु स्वगृहद्वयसद्भावात् तत्सप्तमस्यापि द्वैविध्यात् ॥ कथमत्रबलानयनोपायउच्यते ॥ भौमादिषु चारवशान्निकटास्थितमेव स्वगृहं नतु दूरस्थितमिति सम्प्रदाययुक्तिरिति ॥ अथ गृहं स्वगृहसप्तमाद्विशोध्य शेषं षडधिकश्चेद्द्वादशशुद्धं नोचेद्यथास्थितमेव स्थाप्यन्ततस्तस्यांशाः षड्भक्ताः कलादिबलं स्यादिति ॥ अत्रोपपत्तिः ॥ स्वगृहमारम्भे पूर्णन्त्रिंशत्कलात्मकम्बलन्तत्सप्तमारम्भे शून्यमन्तरेनुपातः । यदिराशिषट्कांशैः १८० पूर्णम्बलं ३० लभ्यते तदेष्टेन किमिति ॥ अत्र गुणहरयोस्त्रिंशतापवर्तेकृते गुणस्थाने रूपम्भाजकस्थानेषडित्युपपन्नमेवमधिमित्रगृहस्य ग्रहेपूर्णम्बलम् २० अधिमित्रगृहात्सप्तमे शून्यन्तत्राधिमित्रगृहस्थं ग्रहं अधिमित्रसप्तमगृहाद्विशोध्य शेषं षडधिकन्द्वादशशुद्धन्नोचेत्तथास्थितमेव स्थाप्यं तस्यांशानवभक्ताः कलादिस्वाधिमित्रगृहबलं स्यात् ॥ अत्रोपपत्तिरनुपातेन यदि राशि षट्कांशैः १८० पूर्ण २० बलं तदेष्टेन किमिति ॥ अत्र गुणहरयोर्विंशतिभिरपवर्ते कृते गुणस्थाने रूपं भाजके नव इत्युपपन्नमेवं ग्रहबलेन स्वस्वपरमबलेन स्वस्वसप्तमगृहेण पूर्ववदनुपातयुक्त्या सोपपत्तिकं बलंस्यात् स्वोच्चबलं त्वनुपातेन प्रागानीतमेव अधिमित्रागुच्चे उक्तवदनुपातेन बलं साध्यंउच्चराश्यभावे स्वोच्चबलमेव कर्तव्यम् ॥ अथ हद्दाद्रेष्काणनवांशानां सप्तमे नैर्बल्यमिति वचनाभावादंशैरेवानुपातस्तद्यथा ग्रहस्य वर्तमानहद्दारंभे बलारंभः हद्दामध्ये परमं बलं १५ हद्दासमाप्तौ बलं शून्यं तत्र ग्रहहद्दाभुक्तभोग्ययोरल्पहद्दांशाः पंचदशगुणावर्तमानहद्दार्द्धांशभक्ताःस्वहद्दाबलं स्यात अत्रोपपत्तिरनुपातेन यदि वर्तमानहद्दार्द्धांशैः पंचदश कला लभ्यंते तदा ग्रहहद्दाभुक्तभोग्ययोरल्पांशैः किमिति उपपन्नम् । अथ स्वद्रेष्काणप्रारंभे फलोपचयः पंचमांशसमाप्तौ पूर्णं बलं १० दशांशसमाप्तौ शून्यं बलं तत्र ग्रहविद्यमानद्रेष्काणभुक्तभोग्ययोरल्पमंशादिद्विगुणं कलादिबलं स्यात अत्रोपपत्तिः यदि पंचभिरंशैर्दशकलामितं बलं तदेष्टेन किमत्र पंचाभिरपवर्ते कृते हरस्थाने रूपं गुणस्थाने द्वयमित्युपपन्नं अथ मुशल्लहारंभे बलारंभः मध्ये

पूर्णं बलं ५ अंते शून्यं तत्र ग्रहविद्यमानमुशल्लहभुक्तभोग्ययोरल्पमंशादित्रिगुणितं स्वमुशल्लहबलं स्यात् अत्रोपपत्तिः यदि मुशल्लहार्द्धेन चत्वारिंशत्कलाधिकेनैकांशमितेन पंचकलामितं बलं तदेष्टेन किमिति ॥ अत्र भाजकात्त्रिगुणो गुणकः अतोंशादित्रिगुणीकृतमित्युपपन्नमेवमनुपाते नाधिमित्रादिद्रेष्काणबलं पूर्वोक्तपरमबलेन ग्रहस्य हद्दाद्रेष्काणमुशल्लहबलं साध्यमेवं स्वादिनवांशे स्वादिहद्दायान्तत्तदंशैरनुपातात्फलं ज्ञेयम् तत्र हद्दाग्राम्परमम्बलङ्कलाः १५ मुशल्लहेपरमकलाः ५ अथ एवं सर्वबलैक्यंग्रहोपरि अन्येषाङ्ग्रहाणां या दृष्टयस्समागतास्तदैक्येन गुणितं षष्टिभक्तं स्फुटं स्यात् ॥ एवं सविशेषपञ्चवर्गीचक्रनिरूपणानन्तरमन्यत् स्थानबलमुक्तं तत्रैव समरसिंहेन ॥ योलग्ने केन्द्रे वा तन्निकटे वाथ वीक्षतेलग्नम् ॥ पुरुषागगनाद्यावत्तृतीयभवनेस्त्रियोपि नवमान्तम् ॥ पुंखेटाः पुंराशौ स्त्रीराशौ स्त्रीग्रहा बलिनः । सर्वेषां स्त्रीपुंसां स्थिरराशौ वा भवन्ति ते बलिनइति ॥ एतत्स्पष्टङ्गणितपूर्वकमुक्तम्मुक्तावल्याम् ॥ लग्नकेन्द्रतदुपस्थितग्रहे रूप १ कार्द्ध ½ चर णोन्मितं ¼ बलम् ॥ स्त्रीषु रूपमवने ४ नवमान्तःपुंसु भावफलतोपरगेषु ॥ स्थिरराशौ सर्वेषाम्पुंस्त्रीराशौ पुमङ्गनाख्यानामिति अत्र लग्ने ग्रहः पूर्णवीर्य्यः केन्द्रेऽर्द्धवीर्य्यः पणफरापोक्लिमयोश्चरणवीर्य्यस्तत्र पूर्णम्बलं षष्टिकलात्मकम् ॥ अर्द्धन्त्रिंशतकलाः चरणःपञ्च दशकलाः अथ लग्नसमे ग्रहे पूर्णम्बलन्द्वादशसन्धिविरामविकलातो लग्नभावप्रारम्भस्ततस्तद्विरामं यावत्फलोपचयः प्रथमभावविरामविकलातः प्रथमस न्धिविरामं यावद्भावफलोपचयः अन्तरस्थे ग्रहेनुपातः स चानुपातः पूर्वङ्ग्रहसन्ध्यन्तरं कार्यमित्यादिना भावफलानयनार्थं कृतमेव अतो लग्नस्थग्रहस्य भावफलमेवबलं केंद्रस्थग्रहस्य भावफलार्द्धमेव बलम्पणफरापोक्लिमस्थग्रहस्य भावफलचतुर्थांशो बलमिति । अथ स्त्रीग्रहाणाञ्चतुर्थादिषड्भावेषु बलत्वोक्तेः पूर्वयुक्त्या चतुर्थादिषड्भावस्थानां स्त्रीग्रहाणाम्भावफलमेव तत्रत्यं बलम् एवम्पुरुषग्रहाणामपि दशमादिषड्भावेषु स्थितानां भावफलमेव बलमिति अथ स्थिरराशिस्थग्रहबलं तत्र राश्यारंभे बलोपचयः पंचदशांशैः पूर्णबलं राश्यंते शून्यं बलमतो ग्रहस्य राशिपूर्वार्द्धे स्थितस्य भुक्तांशा राश्युत्तरार्द्धे स्थितस्य ग्रहस्य भोग्यांशाश्चतुर्गुणाबलं अत्रोपपत्तिः यदि पंचदशांशैः पूर्णं बलं ६० लभ्यते तदा स्थिरराशिस्थितभुक्तभोग्यैरंशैः किमत्रोभयोः पंच दशभिरपवर्ते कृतेत्र्यंशाश्चतुर्गुणाः कार्या इत्युपपन्नम् एवं विषमसमराशिगानां पुंस्त्रीग्रहाणां स्त्रीराशिसंस्थग्रहबलवद्बलं ज्ञेयम् ॥ इतिस्थानबलम् ॥ अथ दिग्बलमुक्तन्तत्रैव ॥ नवमसहजषष्ठांगायपुत्रान्त्यभस्था द्युमणितइह खेटा दिग्बलाढ्या भवेयुरिति ॥ अत्र सूर्यादीनां नवमादिस्थाने

पूर्वोक्तयुक्त्याभावफलतुल्यमेव बलं ज्ञेयं इदमेव प्रथमं हर्षबलं समरसिंहेनोक्तम्। इतिदिग्बलम् ॥ अथकालबलम् ॥ तत्रसमरसिंहः ॥ गुरुमंदौ यदि पश्चिमरात्रौ शुक्रेंदुभूसुताः सायम् ॥ उदयंति तदा बलिनो नरग्रहाश्चाह्नि नक्तमपरे च ॥ अत्रार्कात्सप्तमलग्नोदयः काऌः सायंशब्दवाच्यस्तत्र चंद्रभौमौ पूर्ण ६० बलौ अत्रार्काच्छुक्रः सप्तमः कदापि न संभवत्यतोत्र सप्तमशब्दः परमांतरवाची ज्ञेयः अतः सूर्यशुक्रयोः परमांतराशैः पंचाशत्संख्यैर्बलं साध्यं उक्तंच मुक्तावल्यां ॥ रवेः सप्तमे चंद्रभौमौ बलाढ्यौ खपंचांश ५० तूलांतरे दैत्य मंत्रीति ॥ सूर्यतुल्यत्वे सर्वेपि निर्बलाः ॥ अथबलानयनं ॥ सूर्यस्य चंद्रभौमयोश्चांतरं षड्डूनं स्थाप्यं तदंशास्त्रिभक्ता बलं भवेत् अत्रोपपत्तिरुच्चबलवत् सूर्यशुक्रयोश्चांतरं पंचाशदंशमध्ये स्थाप्यं तदनंतरमेव तदंशाः षड्गुणाःपंचभक्ताः शुक्रबलं स्यात् अत्रोपपत्तिः यदि पंचाशदंशैः षष्टिकला लभ्यंते तदेष्टेन किमित्युभयोर्दशभिरपवर्ते कृते गुणकषड्भाजकः पंचेत्युपपन्नं अथ जीवशन्योरर्द्धरात्रानंतरबलारंभस्तृतीयप्रहरान्ते बलम्पूर्णञ्चतुर्थप्रहरान्ते बलं शून्यं अथ सूर्याद्रात्रिमानमानीय यद्यर्द्धरात्रानंतरमिष्टकालस्तदा तस्मिन्नर्द्धरात्रः शोध्यः यदि तृतीयप्रहरोत्तरमिष्टकालस्स रात्रिमानमध्ये शोध्यः शेषं षष्टिगुणम्प्रहरमानेन भक्तं लब्धङ्गुरुशनिबलम् ॥ अथ॥दिवसादिग्रहबलम्। तत्र लग्नमध्ये रविं विशोध्य यद्यवशेषं त्र्यूनन्तदा तद्राश्यादिकं विंशद्गुणम्बलम् अधिकं षट्च्युतं विधेयंशेषं राश्यादिविंशद्गुणम्पुङ्ग्रहाणाम्बलम्भवति पुङ्ग्रहाणां रव्यूनलग्ने षडधिके तु न बलमेवं रव्यूने लग्ने षड्डूने सति स्त्रीगृहेषु न बलं षडधिके षड्डूनं वाधिकं द्वादशत्यक्तमवशेषं विंशतिगुणं स्त्रीग्रहवीर्य्यं भवति यतो दिननिशोः पुंस्त्रीप्राबल्यमुक्तं सन्धौ तु विरामः एतत्स्पष्टमुक्तम्मुक्तावल्याम् ॥ अर्कोनलग्ने चयतस्त्रिराशिं यावत्परत्रापचयेन रूपम् ॥ पुंस्त्वेन्यखेटेषु च यत्नवांस्तं षड्भात्परत्रापचयेनविद्यात् ॥ अयमर्थः। अर्कोनलग्ने त्रिराशिं यावच्चयतो वृद्धितो रूपम्बलं त्रिराशितोग्रे अपचयेन रूपं पुंखेटेषु बलम् अन्यखेटेषु स्त्रीग्रहेषु सप्तमान्नवान्तं यावद्रूपम्बलम् अपरत्र दशमात् द्वादशान्तं अपचयेन रूपं बलं ज्ञेयमित्यर्थः ॥ इतिकालबलम्॥ अथनिसर्गबलम्॥तत्रनिसर्गबलमुक्तन्ताजिकप्रदीपे ॥ रूपस्य सप्तमांशो ८। ३४ बलम्भवेत्सूर्यपुत्रस्य ॥ तद्द्व्यादिगुणं भौमज्ञगुरुसितेंद्वर्कजं निसर्गस्यात् ॥ इति निसर्गबलम् ॥ अथ चेष्टाबलम् ॥ समरसिंहः ॥ मन्दगतिरशीघ्रगतिश्चावक्रः क्रूरदृग्राहितः॥ क्रूरायुक्तो बलवान्शुभयुतदृष्टः कृताभ्युदयः ॥ सूर्यस्य चैकभागे इति एतत्स्पष्टमुक्तन्ताजिकमुक्तावल्याम् ॥ द्विगुणांशा रूपोनवीर्यमथार्कांशगानाञ्च ॥ शुभसमालितस्य बलं क्रूरासहितस्य रूपं

स्यात् ॥ मार्गोदयार्द्धभागस्थितस्य वाऽशीघ्रगस्य मध्यगतेरिति अत्र सूर्यो यद्राशिनवांशे तस्मिन्नेव नवांशे स्थितस्य ग्रहस्य भागाद्यं द्विगुणं षष्टिभक्तमवशेषं बलं भवति अथ शुभग्रहेण समानलिप्तस्य षष्टिकलाबलं न्यूनाधिकत्वेतु द्वयोरंतरं त्रिंशदंशन्यूनं विधेयं तदंशाद्द्विगुणं बलम् अत्र शुभसमलिप्तो यदा क्रूरग्रहसहितो भवति तदा न बलमित्यपि ज्ञेयं अथ ग्रहस्य मार्गदिनमारभ्य वक्रपर्यंतं तथोदयदिवसमारभ्यास्तपर्यंतं या दिन संख्या तदर्द्धं विधाय तावत्संख्येह्नि षष्टिकलात्मकं बलं वक्रदिने अस्तदिने च बलं शून्यम् अन्तरेऽनुपातः यदि मध्यदिनैः पूर्णं शुभबलं लभ्यते तदा

उदयास्तवक्रमार्गदिनज्ञानचक्रम् ।

| श्री | मं | बृ | श |
|---|---|---|---|
| अस्तादुदयः | ४ | १ | ४१७ १३० |
| उदयाद्वक्रम् | १० | ४१७ १३० | ३ |
| वक्रान्मार्गः | २ | ४ | ४ |
| मार्गादस्तः | १० | ४१७ ३० | ३ १५ |

मार्गदिनाद्गतैर्गम्यैर्वा दिवसैस्तथा ग्रहोदयदिनाद्गतैर्गम्यैर्वा दिवसैः किमिति अथोदयास्तवक्रमार्गदिनानां ज्ञानं सुगमोपायेन मद्गुरुचरणैस्सिद्धान्तचिन्तामणावुक्तम् ॥ पूर्वास्ततः पश्चिमउद्गमोस्माद्वक्रन्ततोऽस्तःपर उद्गमः प्राक् ॥ मार्गी पुरास्तात्खलु दन्त ३२ दन्तै ३२ र्वेदै ४ र्नृपै १६ र्वेद ४ रदै ३२ र्बुधः स्यात् ॥ भृगो

उदयास्तवक्रमार्गदिनज्ञानचक्रं ग्रन्थकर्तुः ।

| ० | पूर्वास्तात्प श्चिमे० | पश्चिमो दयाद्व क्रम् | वक्रात्प श्चिमे ऽस्तः | पश्चिमा स्तात्प्रा गुदयः | प्राग् दया न्मार्गः | मार्गात् पूर्वास्तः |
|---|---|---|---|---|---|---|
| बु | दि. ३२ | दि. ३२ | दि. ४ | दि. १६ | दि. ४ | दि. ३२ |
| शु | दि. ७५ | दि. २४० | दि. २३ | दि. ९ | दि. २३ | दि. २४० |

स्साद्धर्द्विमासाष्टमासैरुयश्विदिनैः क्रमात् ॥ नवभिरुयश्विदिवसैर्मासैरष्टमितैस्तथा ॥ भौमास्तादुदयस्तस्माद्वक्रन्तदनुमार्गता ॥ ततोस्त एवं क्रमतो वेद ४ काष्ठाद्रि २ पंक्ति १० भिः ॥ मासैर्भुवासांघ्रिवेदैर्युगैस्सांघ्रियुगैर्गुरोः ॥ शनेस्सांघ्रिभुवारामैर्वेदैस्साद्धैश्च वह्निभिः ॥ इत्युदयास्तादिदिनज्ञानम् ॥ अथ ग्रहगतिबलम् ॥ तत्र अशीघ्रगस्य कोर्थः मन्दगते र्मध्यमगतिन्यूनस्पष्टगतेर्ग्रहस्य सबलत्वन्तथा मध्यमगतेर्मध्यमगतितुल्यस्पष्टगतेर्ग्रहस्य च सबलत्वं मध्यमगतितोधिकस्पष्टगतेर्ग्रहस्य बलाभावो ज्ञेयः अत्र भौमस्य गतितुल्याः कला द्विगुणा बलम्भवति बुधस्य गतिकलाः षड्गुणा एकोनाशीति ७९ हृता बलं भवति ॥ गुरोर्द्वादशगुणाश्शुक्रस्य स्वत्र्यंशरहिताश्शनेस्त्रिंशद्गुणा इति मथितार्थो गुरुसम्प्रदायाज्ज्ञेयः ॥ इति चेष्टाबलम् ॥ अथ दृग्बलम् ॥ तत्रैव लग्नं पश्यति यावत्तावत्तस्य वीर्यं स्यात् ॥ शुभदृष्टस्य च पापग्रहतुर्य्यदृशोनितस्य पादोनम् ॥ अत्र यस्य ग्रहस्य यावती लग्नस्योपरि दृष्टिस्तावदेव तस्य दृग्बलं ॥

अथ शुभदृष्टस्य ग्रहस्य यावती शुभदृष्टिस्सा पादोना बलं स्यात्परंतु क्रूरतुर्यदृष्टिरहितो ग्रहोपेक्षितः ॥ तत्सम्भवे न बलमिति वीक्षते लब्धं सबलीइति समरसिंहः ॥ इतिदृग्बलम् ॥ अथ लग्नादिद्वादशभावसहमानां बलानयनमुक्तम्मुक्तावल्याम् ॥ तन्वादिकानामिहसद्मनान्तु पत्युर्बलञ्चैव बलम्प्रदिष्टम् ॥ स्वनाथजीवज्ञदृशासमेतन्नृभेषु रूपान्वितमाप्यभेषु ॥ चतुष्पदाख्येष्वपि चार्द्धयुक्तं न कीटभे किञ्चन योजनीयम् ॥ शुभाशुभव्योमगदृग्वियोगयुगांशयुक्तोनमितिस्फुटंस्यात् इति॥विशेषमाहवामनः ॥ स्वस्वस्वामिबलत्वेन ज्ञेयो राशिर्बलाधिकः ॥ जीवज्ञयुक्तो दृष्टो वा स्वस्वस्वामियुतेक्षितः ॥ पृष्ठोदयाः कर्किमृगधनुर्मेषवृषा अमी ॥ शेषाः शीर्षोदयाज्ञेया मीनस्तूभयतस्स्मृतः ॥ शीर्षोदयादिनबलाःशेषारात्रिबलास्स्मृताः॥नृराशयोथलग्नस्थादशमस्थाश्चतुष्पदाः॥वृश्चिकस्सप्तमस्थाने चतुर्थे जलराशयः ॥ संध्यायां वृश्चिको राशिर्दिवसे नरराशयः॥रात्रौ बलाढ्याःशेषाःस्युरित्थं राशिबलं स्मृतं ॥ इतिराशिबलं प्रोक्तं पुराणाचार्यसम्मतम्॥८॥ अथाष्टधा ग्रहाणां बलफलमुक्तं पद्मनाभेन ॥अत्र एकैकंप्रति सार्द्धविंशोपकं बलं ज्ञेयं॥संपूर्णबलं षड्विंशोपकात्मकं मध्यमं बलं त्रिविंशोपकात्मकं न्यूनं मध्यमबलं ज्ञेयं तद्यथा । शून्येहानिस्तथाक्लेशो ह्यर्द्धे शोको महद्भयम् ॥ वैमनस्यं तथोद्वेगो रूपे प्रोक्तमिदं फलम्॥सार्द्धरूपे तनोः पीडा द्वाभ्यां दुःखं सुखं समम् ॥ सार्द्धद्वाभ्यां सुखावाप्तिस्त्रिभिर्भोगः सुखं धनम् ॥ सार्द्धत्रये सर्वसिद्धिश्चतुर्भिः सर्वतो यश इति ॥ नष्टबलानां सूर्यादीनां फलमुक्तं तेजःसिंहेन ॥ त्वग्दृष्टिरुक्परिभवादिरवौ विनष्टेऽजेऽर्थक्षयोरतिरुजोवानिजेलघुत्वम् ॥ ज्ञेज्ञानहानिरणुवृत्त्यपपुण्यतेज्ये शुक्रे त्वभोगसुखतानुगभीः शनौ चेति ॥ अणुवृत्तिरल्पवृत्तिः अपपुण्यता पुण्यराहित्यं अनुगभीः स्वसेवकाद्भयं ॥ अथ प्रसंगादिष्टकष्टविचारो लिख्यते ॥ तत्प्रयोजनमुक्तं रत्नावल्याम् ॥ ताजिकोक्तफलादेशः प्रकर्तुं शक्यते यतः॥इष्टकष्टफलज्ञानान्निर्णयस्तदथोच्यते॥ स्वोच्च १ मित्रोच्चगो २ मार्गी ३ सुहृत् ४ सौम्या ५ वलोकितः ॥ उदितः ६ सौम्यचारी च ७ त्रित्रिकोणाय ३ । ५ । ९ । ११ गोथ वा ॥ वर्गोत्तमे ९ मित्रवर्गे १० स्वगेहे ११ सूर्यभागगः १२ ॥मूसरिःफो १३मूथाशिलः सौम्यैः १४सौम्यांतगो १५युतः १६ ॥ एवं बलयुतः खेटो ज्ञेयः षोडशधा बुधैः ॥ नीचे १ शत्रूच्चगो २ वक्री ३ रिपु ४ पापावलोकितः ५॥ अस्तगो ६ याम्यभागस्थो ७ लग्नाद्रिःफारिषु स्थितः ८ ॥ वर्गोत्तमविहीनो यः ९ शत्रुवर्गे १० गृहेपि च ११ ॥ सूर्यभागोभितः १२ क्रूरैरिःफो १३ मूथाशिलो

पिच १४ ॥ पापयुक्तो १५ मध्यगतो १६ ज्ञेयः खेटो बलोभित इति ॥ अथ शुभस्थानगे ग्रहे शुभफलं रूपमितं स्थाप्यम् ॥ अशुभस्थानगे ग्रहे अशुभफलं रूपमितं स्थाप्यं पुनश्शुभाऽशुभफलयोरंतरेकृते सति यच्छुभमशुभंवा अवशिष्टन्तदेव ग्रहस्य इष्टं कष्टंवा फलन्दशाफलादिषु ज्ञेयम् ॥ एतत्स्पष्टमुक्तम्मणित्थेन ॥ सर्वत्र कल्प्यम्पृथगेव रूपम्फलं शुभाख्यम्फलनिर्णयाय ॥ इहापि रूपं परिकल्प्य साध्यम्फलञ्च कष्टाभिधमत्र तज्ज्ञैः ॥ पृथक्स्थितस्यास्य यदन्तरालम्फलं तदेवाभिधमत्र ज्ञेयम् ॥ दशादि १० के श्रेष्टफले च पूर्णम्फलन्दशो १० ने कथितञ्च मध्यम् ॥ कष्टाधिके पूर्णशशाङ्क १० हीने शुभे च कष्टे दशतो वरिष्टे ॥ कष्टात्तथा कष्टतरं निरुक्तम्फलन्दशायां यवनैः पुराणैरिति ॥ अथपञ्चवर्गेष्य इष्टकष्टमुक्तन्ताजिकमुक्तावल्याम् ॥ दलन्दलार्द्धञ्च तदर्द्धकञ्च स्वकीयमित्रारिगृहे स्वभे स्यात् ॥ तथैव हक्केन्द्रलवस्तदर्द्धन्ततखण्डकन्नन्दलवेर्कभागः ॥ तदर्द्धकन्तद्दलमेवत्रिंशे तिथ्यंशकोर्द्धञ्चदलन्तथोच्चे ॥ नवांशकोर्द्धञ्च दलञ्च नीचे शून्यङ्गवेदांशनखांशकौ चेति ॥ एतदूनं यद्वा स्वेष्टारातिषु द्वादशांशा इत्यायुक्तबलविभागांशाङ्कष्टफलं साध्यम् ॥ इतिइष्टकष्टविचारः ॥ अत्र केचन सामान्येनैव अष्टधा बलङ्कल्पयन्ति । उक्तञ्च हिल्लाजेन ॥ समगति १ रुदितो यः २ सौम्यदृष्टोथ ३ युक्तः ४सशुभमुथशिली स्यात्सौम्यभावे ६ र्कभागे ७ ॥ विचरति शुभमध्ये ८ चातिवीर्य्यः प्रदिष्टः कथितबलविरोधी हीनवीर्यः खगेन्द्रः ॥ उभयबलसमासे चाप्यभावेतयोर्वा विचरति यदि खेटो मध्यवीर्यो मुनीन्द्रैरिति ॥ अत्र समगतिविरोधःशीघ्रगत्युदितविरोधोस्तगः एवं सर्वत्रापि ज्ञेयम् ॥ अत्र प्रत्येकं सार्द्धविंशोपकद्वयमितं बलं ज्ञेयम् । अथात्र विशेषफलजिज्ञासुना पूर्वोक्तं षड्विधमपि बलं विचार्य्यन्तदभावे सामान्यपञ्चवर्गीबलं विचार्य तदभावेप्यष्टधा बलं विचार्य्यमिति सिद्धान्तः ॥ अथ द्वादशवर्गीचक्रम् तत्रवामनः ॥ गृहहोराद्रेष्काणाः पादांशः पंचांश षष्ठांशौ ॥ सप्ताष्टनवदशांशा रुद्रांशा द्वादशांशाश्च ॥ भौमशुक्रज्ञचंद्रार्कबुधशुक्रारमंत्रिणः शौरिश्शनिस्तथाजीवो मेषादीनामधीश्वराः ॥ लग्नार्द्धं जायते होरा सर्वलग्नेषु सर्वदा ॥ ओजराशिभवार्केन्द्वोः समे चंद्रार्कजा मताः ॥ मेषादिसर्वराशीनां त्रिभागेषु यथा

इष्टकष्टज्ञानचक्रम् ।

| गृह. | | | द्रेष्काण | | | नवांश. | | | त्रिंशांश. | | | उच्च. | | | नीच. | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स्व | मि | श | स्व | मि | श | स्व | मि | श | स्व | मि | श | स्व | मि | श | स्व | मि | श |
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | ० | १ | १ |
| २ | ४ | ८ | ६ | १२ | २४ | १२ | २४ | ४८ | १५ | ३० | ६० | २० | ४० | ८० | ० | ४० | २० |

क्रमम् ॥ आद्यपंचनवेशानां द्रेष्काणा भणिता बुधैः ॥ एकद्वित्रिचतुर्थेषु लग्नपादेषु च क्रमात् ॥ स्वस्वराश्यादिकेंद्रेशाः पादांश
नायका मताः ॥ ४ ॥ कुजार्कीज्यबुधाः शुक्रः पंचमांशेषु नायकाः ॥ ओजराशिषु युग्मेषु ग्रहा व्यत्ययतः स्मृताः ॥
मेषाद्या विषमे राशौ समराशौ तुलादिकाः ॥ विज्ञेया विबुधैरेव राशिषष्ठांशनायकाः ॥ ६ ॥ ओजराशौ स्वराश्याद्यास्समे सप्तमरा
शितः ॥ सप्तांशनायकास्सर्वे विज्ञेया विबुधैस्स्फुटाः ॥ ७ ॥ मेषाद्याश्चरराशीनाञ्चापाद्यास्स्थिरराशिषु ॥ द्विस्वभावेषु
सिंहाद्या ज्ञेयाश्चाष्टांशनायकाः ॥ ८ ॥ मेषमृगतुलाकर्कमुख्याःस्युर्नवमांशकाः ॥ मेषकेसरिधन्वादिराशिचक्रे व्यवस्थिताः ॥ ९ ॥
अजकुम्भधनुस्तौलिसिंहयुग्मक्रमेण तु ॥ दशांशनायका लग्ने ग्रहानेवंविदुर्बुधाः ॥ १० ॥ मेषमीनघटानक्रचापालितुलकन्यकाः
सिंहकर्कटका प्रोक्षादिकारुद्रांशनायकाः ॥ ११ ॥ स्वस्वराश्यादिका ज्ञेया द्वादशांशकनायकाः ॥ १२ ॥ एवंलग्नेन विज्ञेया
बुधैर्द्वादशवर्गिकाः ॥ सूर्यादीनान्तु खेटानां वीक्ष्या द्वादशवर्गिका ॥ शुभास्वमित्रसौम्योच्चानिन्द्या नीचारिपापजा ॥ एवम्फलद्वयं
वीक्ष्यतद्विशोध्यम्परस्परम् ॥ तच्छेषन्तत्फलं ज्ञेयं ग्रहे द्वादशवर्गजम् ॥ वर्गे शुभाधिके क्रूरः शुभसौम्योतिशोभनः ॥ निंद्याधिके
शुभः क्रूरः क्रूरोतिक्रूरतां व्रजेत् ॥ स्वगृहाद्यद्ग्रहो दत्ते तन्वादिभावजम्फलम् ॥ निजवीर्यानुमानेन स्थितं राशीशभावजम् ॥ एकै
कराशिमध्यस्थं विज्ञेयं राशिमण्डलम् ॥ तन्वादिभावरूपेण स्वगृहादिक्रमेण च ॥ ते च द्वादशवर्गस्य स्थूलसूक्ष्मप्रभेदतः ॥ स्थूलं
सूक्ष्मं फलं ज्ञेयं ग्रहाणां सर्वभावजमिति ॥ अत्रैकैकराशिमध्यस्थमित्यनेन तन्वादिसर्वभावानां द्वादशवर्गिका विधेया ॥ तस्माद्भावानां स्थूल
सूक्ष्मफलविचारः कार्य्य इत्यर्थः ॥ एतत्स्पष्टमुक्तंसंज्ञातन्त्रे ॥ भावेषु सर्वेष्वपिवर्गचक्रं विलोक्य तत्तत्फलमूहनीयमिति ॥ द्वादशवर्गीचक्रे
विंशोपकानयनमुक्तं योगसुधानिधौ ॥ शतं कलाः १०० स्वे भवनादिके च मैत्रे तदर्द्धञ्च ५० रिपौ तदर्द्धं २५ ॥ तदैक्यमभ्राङ्ग ६०
हृदर्कवर्ग्यां विंशोपका वीर्य्ययुतौ भवन्तीति ॥ अत्रकेचन द्वादशवर्गीचक्रन्न कुर्वंति ॥ पठन्ति च ॥ वामनेन ग्रहाणां वा प्रोक्ता द्वा
दशवर्गिका ॥ पुराचार्य्यैरनुक्तत्वात् कृत्रिमा सा प्रकीर्त्यतइति ॥ एतन्नरमणीयम् ॥ यतोतिप्राचीनाचार्येणभणितत्वेन ॥ भौमः सितोज्ञ
इत्यादिश्लोकदशकेन द्वादशवर्गीचक्रमभिहितम् ॥ अतएवसंज्ञातंत्रेश्रीमन्नीलकंठदैवज्ञैर्द्वादशवर्गीचक्रमुक्तमिति ॥ इतिद्वादशवर्गीचक्रम् ॥ अथ

ग्रहाणां वर्षबलं तत्र चत्वारि हर्षदानि स्थानान्युक्तानि तेजःसिंहेन ॥ निधि ९ हुताश ३ षडे ६ क १ शिवा ११ तमज ५ व्यय १२
इनात्प्रथमं खलु हर्षदम् ॥ स्वगृहमुच्चमथो द्वितयं स्मृतं निखिलखेटगणेषु तृतीयकम् ॥ अथ दिने नृखगस्य तु योषितो भवति
रात्रिषु हर्षपदं तथा ॥ उदयतास्त्रितयं त्रितयं क्रमाद्युवति १ । २ । ३ । ७ । ८ । ९ नृद्युपदां च ४ । ५ । ६ । १० । ११ । १२
चतुर्थकम् ॥ अत्र समरसिंहेन द्वितीयकं निजगृहं सर्वेषां हर्षपदं भवतीत्यनेन श्लोकार्द्धेन स्वगृहमेव हर्षस्थानमुक्तं न तु स्वोच्चमिति ज्ञेयम् ॥ अत्र
विंशोपका उक्ताः पद्धतिभूषणे ॥ हर्षान्विता हर्षपदे पंच विंशोपका मताः ॥ हर्षस्थानचतुष्कस्थः खेटः स्यात्पूर्णहर्षितः ॥ इति ॥
अथ समरसिंहटीकायां तुकज्योतिर्विद्भिरेकैककहर्षस्थाने रूपमितं बलमुक्तम् ॥ तत्रापि नवमादिस्थानेषु लग्नात्त्रित्रिभेषु च पूर्वोक्तयुक्त्या ग्रहाणां भाव
फलमेव बलम् । स्वगृहोच्चबलं तु राश्यंते परमोच्चं तु प्रोचुर्ग्रहविदो जनाः ॥ राश्यंते पूर्णफलदं स्वगृहं च तथा विदुः ॥ इतिजीर्णता
जिकवचनात् ॥ स्वगृहस्वोच्चस्थग्रहस्यांशादिकं द्विगुणं स्वगृहस्वोच्चं बलं भवति ॥ दिनरात्रिबलं तु पूर्वोक्तं ग्रहदिनबलमेव पुनर्ग्रहाणां विशेषबले
प्रथमहर्षबलं दिनरात्रिबलं च योजितमेवातोहर्षस्थानद्वयबलं विशेषबलेषु योज्यमिति तत्वम् सर्वेषां बलानामैक्यं स्फुटबलं भवति ॥ स्फुटबलेनैव वर्षे
शफलं दशाफलादिकं च ज्ञेयमिति विमलम् ॥ अथमहर्षबलेऽधिकहर्षस्थानानि केषांचिद्ग्रहाणामुक्तानि प्रश्नवैष्णवे ॥ कर्मबंधुधनं चेंदोस्तुर्यं
ज्ञस्योदयं रवेः ॥ द्यूनम्भौमस्य धर्मर्क्षं शनेः प्राहुस्सहर्षपदमिति ॥ यादवेन तु पञ्चहर्षस्थानान्युक्तानि ॥ नन्दाऽग्नितर्केन्दुशिवेऽष्य
नाख्यास्सूर्य्यादिकानां स्वगृहान्निजोच्चम् ॥ पुंस्त्रीखगानान्तनुतस्त्रयश्च निशादिनं स्त्रीनरसंज्ञितानाम् ॥ पुंभानि पुंसां वनितागृहाणि
स्त्रीव्योमगानाश्च यदास्पदानि ॥ हर्षास्पदेष्वब्धि ४ विशोपकाश्च पृथक्पृथक्पञ्चसु संवदन्ति ॥ इतिश्रीदैवज्ञवर्य्यपण्डितदामोदरात्म
जबलभद्रविरचिते हायनरत्ने दृष्टिसाङ्ग्बलेष्टकष्टाद्यानयनाधिकारो द्वितीयः ॥ २ ॥ अथषोडशयोगाध्यायोव्याख्यायते ॥ यत्रेक्कवालादिषोडशयोगानां
नामान्युक्तानि ताजिकभूषणे ॥ इक्कवाले १ न्दुवाराख्या २ वित्थशालस्ततः परम् ३ ॥ ईसराफ ४ श्चनक्त ५ श्च यमया ६ मणऊ
७ ततः ॥ कम्बूल ८ ङ्गैरिकम्बूलं ९ खल्लासरक १० रद्दके ११ ॥ ततो दुःफालिकुत्थश्च १२ दुत्थदव्वीर १३ तम्बिरो १४ ॥
कुत्थश्च १५ दुरुफश्चै १६ ते योगाः षोडश कीर्तिताः ॥ ताजिकाचार्यवर्य्यैश्च फलविज्ञानहेतवे ॥ अथेत्थशालादियोगोपयुक्ताः सूर्या

दीनान्दीप्तांशा उक्तास्तेजस्सिंसहेन ॥ ईक्षतेर्के इह पञ्चदशांशैर्दीप्तकैश्च रविभि १२ र्विधुरारः ॥ अष्टभि ८ र्भृगुमृगाङ्कतनूजौ सप्त ७ भिर्गुरुशनी नवभि ९ श्चेति ॥ ताजिकसारेपि ॥ रविरिशराजै १५ स्तपनैः १२ शशांको लवैर्महीजो वसुभिश्च भागैः ॥ ज्ञभार्गवौ सप्तलवैर्नभोगे ९ र्देवेज्यमन्दौ प्रयुतिंकरोति ॥ अत्र पञ्चदशभिरंशैः रविः प्रयुतिंवक्ष्यमाणेत्थशालादियोगङ्करोतीत्यर्थः ॥ एवं सर्वत्र प्रश्नवैष्णवे राहोरपिद्वादश दीप्तभागा उक्ताः ॥ अथेक्कवालेन्दुवारौ ॥ तत्रेक्कवालेन्दुवारयोर्लक्षणमुक्तं संज्ञातन्त्रे ॥ चेत्कण्टके १।४।७।१० पणफरे च २।५।८। ११ खगाः समस्तास्स्यादिक्कवाल इति राज्यसुखाप्तिहेतुः ॥ आपोक्लिमे ३। ६ ।९।१२ यदि खगाः स किलेंदुवारो न स्याच्छुभः क्वचन ताजिकशास्त्रगीत इति ॥ अत्र वर्षप्रवेशे इक्कवालयोगोत्पत्तौ राज्यसुखयोर्लब्धिः कुलानुमानेन वाच्या वर्षारिष्टेप्यरिष्टभंगो वाच्यः क्वचन वर्षप्रवेशमासप्रवेशादौ यदाकेंद्रापोक्लिमस्थाग्रहाः पणफरापोक्लिमस्था वा स्युस्तदा कोपि योगो न संभवेत् ॥ सर्वे ग्रहा द्वित्रिष्वपि केंद्रादिषु स्थिता योगकर्तारो ज्ञेया इतिजीर्णटीकाकृत् ॥ यादवेनैतौ योगौ अन्यथैव कथितौ ॥ केंद्रस्थितद्वितयराशिगयोः स्वधाम्नोर्दृष्टिस्तदा निगदितोत्र स इक्कवालः ॥ आपोक्लिमोपगतकेंद्रगयोर्यदि स्याद्योगस्तदा मुनिवरैश्च स इंदुवार इति ॥ द्वयोरेवग्रहयोःकेंद्रपणफरसंस्थयो र्दृष्टौ सत्यामिक्कवालयोगः । दृष्टौ सत्यां केंद्रापोक्लिमस्थयोर्द्वयोरेव ग्रहयोरिंदुवारयोग इतियादवमतम् । अत्रदीप्तांशैर्दृष्टौ योगाः संभवंत्यतोयादवोक्त एव पक्षः साधीयानिति चेन्न यतो यमयायोगे सर्वैस्ताजिककर्तृभिर्दृष्ट्यभाव उदाहृतोस्ति ॥ इतीक्कवालेंदुवारौ ॥ अथेत्थशालः ॥

इक्कवालयोगः ।




इंदुवारयोगः ।




तच्च वर्तमानपरिपूर्णभाविष्यमुथशिलभेदेन त्रिधेत्थशालयोगः तत्र वर्तमानमुथशिलयोगलक्षणमुक्तं ताजिकालंकारे ॥ दृष्टौ सत्यां प्रोक्तदीप्ताख्यभागैर्मंदात् खेटाच्छीघ्रखेटो यदाल्पः॥अंशैस्तुल्यः किंचिदूनस्तदेत्थशालो योगो मूथशीलः स एवेति ॥ अत्रेत्थशालादियोगेषु ग्रहाणां शीघ्रगत्वं मंदगत्वं च स्पष्टगत्या ज्ञेयम्। अत्र केचिच्छीघ्रमंदग्रहयोरेकराशिस्थयोरेव मुथशिलयोगः नवमपंचमादि भिन्नराशौ यतः समरसिंहेन मध्यमाधमकम्बूललक्षणे मेषस्थेब्जे शनिना कर्कस्थे भूसुवास्त्रियाङ्क विना ॥ मकरस्थे गुरुणा सह मीनस्थे ज्ञे न शुभश्चेतिपद्येनैकराशौ मुथशिलयोगोभिहितो न भिन्नराशाविति चेन्न यतस्तेन तत्रैवनीचगयोर्ग्र

ह्योरित्थशालः कार्यनाशकः प्रोक्तस्तद्यथा॥ यदि नीचो नीचेन च मुथशिलकारी यथा रिपुर्द्वेषिता॥तद्वत्तत्कंबूलश्चन्द्रोपि विनाशकोसुष्मि
न्निति॥अत्र मुथशिलकारिणोर्ग्रहयोरेकं नीचं न सम्भवति त्रयाणां लग्नेशकार्येशचन्द्राणान्तु सुतरान्न सम्भवति तस्मादेकगृहगयोरेव मुथशीलयोग इति
व्याप्तिर्गतैव॥उक्तञ्च तेजसिंहेन ॥ उक्तांशकान्तरहगुत्थमपीत्थशालः कम्बूलकञ्च पृथगर्क्षगयोर्द्वयोः स्यादिति॥अन्येपुनराहुः ॥ राशिचक्रे
शीघ्रग्रहस्याग्रे यदा मन्दग्रहो भवति तदेत्थशालयोगो नेतरथा ॥ एतदविचारितरमणीयम् ॥ यतस्समरसिंहेन उत्तमोत्तमकम्बूलोदाहरणे रविभौमाभ्यां
यथा मेषइत्यनेन चन्द्रपरौ यदि मिथस्स्वगृहोच्चसंस्थौ मेषे यथा कुजरवी तदतीव शस्तमित्यनेन च तेजसिंहेनापि मेषस्थयोरर्कभौमयोः
कर्कस्थेन चन्द्रेण सहेत्थशालयोग उक्तस्तत्र मेषस्थयोरर्कभौमयोर्मन्दगयोश्शीघ्रगश्चन्द्रोऽग्रेभवतिनतुपृष्ठे तस्माच्छीघ्रमन्दग्रहयोर्मध्ये अग्रस्थत्वम्पृष्ठ
स्थत्वञ्च राशिचक्रे यथासम्भवं ज्ञेयम् ॥ एतदेव मणऊयोगे ॥ यदि वक्रस्सौरिर्वा शीघ्रस्याग्रे स्थितोथवा पृष्ठे ॥ पश्यंश्चतुर्थसप्तमदृष्ट्या
तथैकराशिस्थः ॥ इत्यनेन पद्येन समरसिंहेन शीघ्रमन्दयोरग्रपृष्ठस्थत्वं यथासम्भवमेव प्रदर्शितं सर्वयोगेष्वपि मुथशीलविचारो ग्रहाणामेकराशिगानां
भिन्नराशिगानामपि भवत्येवेति स्पष्टमभिहितं च ॥ अत्र स्वदीप्तांशैर्द्वादशांशैर्वा मुथशीलयोगादयो विचारणीया इत्युक्तं ताजिकतिलके ॥ स्वदीप्तभा
गैरविभागकैर्वा योगा विचार्या मुथशीलमुख्याः इति ॥ अथ परिपूर्णमुथशीललक्षणमुक्तं योगसुधानिधौ ॥ विकलिकाकलिकादलहीन
कश्चरखगोलपजवादथवा समः ॥ मुथशिलं सकलं सफलं तदा फलति तद्यवनो मुनिराड् जगौ ॥ भविष्यन्मुथशीलयोगलक्षणमुक्तं
वामनेन ॥ राश्यंतगः शीघ्रगतिः स्थिरस्य भागान्विवक्षुः परराशिगस्य ॥ यदा भवेत्तं प्रवदंति योगमेष्यं भविष्यत्फलदं सदैव ॥
समरसिंहमते वर्तमानमुथशीलयोगोयं भविष्यन्मुथशीलयोगोयंभविष्यन्मुथशिललक्षणमुक्तं तेनैव ॥ यद्युक्तभागतोसौ हीनांशैर्मंदपृष्ठतोभवति ॥
तन्मुथशीलभविष्यद्गणनीयं कार्यसंसिद्ध्यै ॥ अत्रेत्थशालयोगे पृष्ठस्थे शीघ्रे वक्रिणिसतीत्थशालफलाभावः अग्रस्थे मंदे वक्रिणि
सतीत्थशालफलविशेष इतिसंप्रदाययुक्तिः ॥ वर्तमानमुथशिलोदाहरणमाहयादवः ॥ वृश्चिके भवति भूसुतस्तनौ भागषोडश १६ इनो
हरौ द्वयम् ॥ वा समांशकमितौ तदालिपका राज्यलब्धिरपरेखिला त्वयम् ॥ अथ पूर्णमुथशिलोदाहरणं जीर्णताजिके स्त्रीला
भस्य प्रश्ने कर्कविलग्नं शशी वृषे द्विभागगः ॥ साष्टादशकलिकाढ्यः कार्ये मंदो द्विभागमितः ॥ एकोनविंशति कलासहितोयं

पूर्णफलदः स्यात् ॥ अथवर्षप्रवेशे यदिकोपिपृच्छति ममास्मिन्वर्षे स्त्रीलाभो भविष्यति नवेति ॥ एवंविधे प्रश्ने लग्नेशकार्येशयोः परिपूर्णेत्थशाले स्त्रीलाभोवश्यं वक्तव्यः ॥ एवमग्रे सर्वत्र ज्ञेयम् ॥ अथ राश्यन्तराश्यादिस्थितग्रहेत्थशालोदाहरणम् ॥वृषलग्नं लाभस्य प्रश्ने कुम्भेन्त्यभाग २९ गश्शुक्रः ॥ वेदाशमितो मीने गुरुरेव मुत्थशिलयोगः ॥ अथ भविष्यन्मुथशिलोदाहरणम् ॥ तुलाविलग्ने भृगुजश्शरांशैः कर्केद्रिचन्द्रैः क्षितिजोन्त्यराशौ ॥ धनस्य लाभे कथितो भविष्ययोगस्सखे भाविफलप्रदाता ॥ अथेत्थशाले फलानिर्देशप्रकारं उक्तस्संज्ञातन्त्रे ॥



पूर्णमुथशिलयोगः स्त्रीलाभप्रश्नः । भविष्यन्मुथशिलयोगः धनलाभप्रश्नः ।

लग्नेशकार्याधिपतत्सहायायत्र स्युरस्मिन् पतिसौम्य दृष्टे तदा बलाढ्यं कथयन्ति योगं विशेषतः स्नेहदृशोति सन्तः सहायोनाम मित्रम् ॥ लग्नेशः लग्नेशमित्रार्येशः ३तन्मित्रं एते चत्वारो यत्र भावे स्युस्तस्मिन्भावे पतिसौम्यदृष्टे सति बली योगः ॥ अथ भाव दशा सहमतसीरमुथहाब्देशादयोपि यत्र भावे स्युस्तास्मिन्भावे पाति सौम्यदृष्टे सति तेषां सबलःस्यादिति समरसिंहटीकाकृत् ॥



वर्तमानमुथशिलोदाहरणं राज्यल.भप्रश्नः ।



प्रकारांतरेणमुथशिल-योगलाभयोगप्रश्नः ।

स्वर्क्षादिसत्स्थानगतः शुभैश्चेद्युतेक्षितोभूद्भविताप्यथास्ते ॥ तदा शुभं प्रागभवत्सुपूर्णमग्रे भविष्यत्यथ वर्तते च ॥ व्यत्ययस्ततस्माद्विपरीतभावेऽथप्रक्षितोऽनिष्टगृहम्प्रपन्नः ॥ अभूच्छुभम्प्रागशुभन्त्विदानीं संयातुकामेन च भावि वाच्यम् ॥ अयमर्थः लग्नाधीशो वा विपरीतभावे शत्रुनीचादिदुष्टस्थानेषु गतःसन् पापैर्युक्तः ईक्षितो वाभूत्तदा प्रागशुभमभवत् ॥ एवं सर्वत्र संयातुकामेन राश्यंतरस्थेन शीघ्रेण पापग्रहराशौ संयातुकामेन कृत्वा भविष्यदनिष्टं वाच्यमित्यर्थः भावदशादावित्यर्थः ॥ अथेत्थशाले विंशोपकानयनम् ॥ पृष्ठस्थशीघ्रग्रहहीनमंदग्रहस्य भागै रहिता विधेयाः॥पृष्ठस्थशीघ्रग्रहदीप्तभागाः पृष्ठस्थशीघ्रद्युतिभागभक्ताः॥फलं यदाप्तं नखसं२०गुणं तद्विंशोपकाः स्युर्मुथशीलमुख्ये ॥ इति उदाहरणम् ॥ मंदग्रहो भौमो राश्यादिः ७ । १६ शीघ्रः सूर्यो राश्यादिः ४ । २ अत्र सूर्यस्यांशैः २ भौमस्यांशाः १६ हीनाः १४ एभिः सूर्यस्य दीप्तांशा १५ हीनाः शेषे १ सूर्यस्य दीप्तांशा १५ भक्ते लब्धं ० । ४ नख २० गुणं जाता इत्थशाले विंशोपकाः १ । २० ॥

अथ षोडशयोगप्रांत्ये लिखितं यादववृत्तेनावधिदिनानयनम् ॥ तत्र भौमार्कयोरंशांतरं १४ द्वादशगुणं १६८ जातान्यवधिदिनानि ॥ एवं सर्वत्र ज्ञेयं ॥ वर्षलग्ने सौम्यग्रहेत्थशालफलमुक्तं ताजिकसारे ॥ यदीत्थशालः खचरैस्तु सौम्यैः कृतोऽब्दलग्ने परिपूर्णकश्च ॥ दत्ते तदासौ विविधं विलासं धनागमं कांतिविवर्द्धनं चेति ॥ इत्थशालादीनां फलं जीर्णताजिके इत्थशालस्स्वयं कर्त्ता यमया नक्तमन्यतः ॥ ईसराफः स्वयं हर्त्ता मणऊ चान्यहस्ततः ॥ खल्लासरैः फलाभाव इति वर्षे विचिंतयेत् ॥ अत्र लग्नेकार्यभावेशयोरित्थशालादियोगोत्पत्तौ एतत्फलं वाच्यमिति ॥ इतीत्थशालः ॥ अथेसराफयोगः ॥ तत्रेसराफयोगलक्षणं ताजिकभूषणे ॥ शीघ्रग्रहो मंदगतेर्ग्रहाच्च यदैकभागं पुरतः प्रयाति ॥ तदेसराफस्स तु मूसरीफः पुरातनैर्दुष्टफलः प्रदिष्टः॥अथ शीघ्रग्रहस्य मन्दग्रहस्यैकांशातिक्रमणे ईसराफयोगः॥ एकांशापूर्त्तौ कलानामतिक्रमणे पीत्थशालयोग इति जीर्णटीकाकृत ॥ अत्रेसराफयोगस्सौम्यग्रहजनितश्शुभ इत्युक्तं हिल्लाजे॥ ईसराफे सौम्यजाते कार्यभङ्गो न जायत इति ॥ अथ शीघ्रग्रहोमन्दमतिक्रम्य द्वादशांशाभ्यधिकोभवेत्तदापि मूसरिफः शुभफलदएवेत्युक्तं यादवेन ॥ चरोचराच्चरेलवम्पुरस्सईसराफकः ॥ शुभो न मूसरीफकश्शुभोऽर्क १२ भागगस्तु चेत् ॥ अत्रोदाहरणमाह स एव ॥ धनुर्विलग्ने गुरुरष्टि १६ भागैर्बुधोद्रिचन्द्रै १७ र्मिथुनङ्गतोत्र ॥ न कन्यकाया वरलाभसिद्धिस्स्यात्पिण्डतुल्ये २८ त्र बुधे तदाप्तिरिति ॥ अथेसराफयोगेविंशोपकानयनम् ॥ पृष्ठस्थमन्दग्रहहीनशीघ्रग्रहस्य भागा नखसङ्गुणाश्च ॥ अग्रस्थशीघ्रग्रहदीप्तभागैर्भक्ता विंशोपास्स्युरिहेसराफे ॥ इतीसराफयोगः अथ नक्तयोगः ॥ तत्र नक्तयोगलक्षणं संज्ञातन्त्रे ॥ लग्नेशकार्याधिपयोर्न दृष्टिर्मिथोथ तन्मध्यगतोथ शीघ्रः ॥ आदाय तेजो यदि पृष्ठसंस्थाद्न्यसेदथान्यत्र हि नक्तमेतत् ॥ अन्यत्र मन्दग्रहे पृष्ठसंस्थाच्छीघ्रग्रहादित्यर्थः ॥ अत्र सर्वत्र स्वदीप्तांशमध्ये यदि शीघ्रग्रहान्मन्दग्रहोऽधिको भवति तदा शीघ्रो मन्दस्य तेजोदाता मन्दश्शीघ्रस्य तेजोहरो ज्ञेयः ॥ दीप्तांशमध्ये शीघ्रग्रहान्न्यूनांशे मन्दग्रहे शीघ्रो मंदस्य तेजोहरः ॥ मंदश्शीघ्रस्य तेजोदाता ज्ञेयः ॥ वक्ष्यमाणमणऊयोगे विशेषवाक्याच्छीघ्रादधिकांशो न्यूनांशोपिमन्दश्शीघ्रस्य तेजोहर्ता भवतीति तत्त्वम् ॥ अत्रोदाहरणं संज्ञातन्त्रे ॥ स्त्रीलाभपृच्छा तनुरस्ति कन्यास्वामी बुधः सिंहगतो दशांशैः ॥ सूर्यांशकैर्देवगुरुः कलत्रं दृष्टिस्तयोर्नास्ति मिथोथ चंद्रः॥ चापे वृषे चोभयदृश्यमूर्तिः शीघ्रोर्कभा १२ गैरथवा भवांशैः ११ ॥ आदाय तेजो बुधतो

ददौ यज्जीवाय लाभः परतस्त्रियास्स्यात्॥अयमर्थः॥ अत्र लग्नेशकार्येशयोः परस्परं षडष्टगतत्वात् दृष्टिर्नास्ति अथ शीघ्रश्चंद्रोन्योन्यं बुधं गुरुं च पश्यन्स्वस्मादल्पांशाद्बुधात्तेजो गृहीत्वा स्वस्मादधिकांशाय गुरवे ददौ तस्मात्परहस्तात्स्त्रीलाभः ॥ अत्र स्थानदृष्टिसद्भावेपि दीप्तांशातिक्रमेण नक्त योगो भवतीत्युक्तं यादवेन ॥ लग्नेशकार्यपखगौ निजभागदृष्ट्या हीनावुभौ चरखगोंतरगः प्रपश्यन् ॥ नीत्वा महश्चरगतेरचलाय दद्यान्नक्तं भवेदपरहस्तविलंबसिद्ध्यै ॥ अत्रोदाहरणमाह स एव । मीने विलग्ने गुरुरर्कभागः स्त्रियाम्बुधो नेत्रलवोनदृष्टिः ॥ तयोश्च

अथनक्तयोगः । मध्येऽद्रि ७ लवः कुलीरे चंद्रस्तदान्येन सखेंगनातिरिति ॥ इति नक्तयोगः॥अथ यमयायोगः ॥ तत्र यमयायोगलक्षण




मुक्तं ताजिकभूषणे ॥ परस्परालोकनवर्जितं यत्खेटद्वयं पश्यति मंदखेटः ॥ दीप्तांशकैर्धामचराद्गृहीत्वा स्थिराय दत्ते यमयाभिधानः ॥ अयमर्थः । परस्परालोकनवर्जितं खेटद्वयं लग्नेशकार्येशाभिधं तृतीयो मंदग्रहः स्वदीप्तांशैर्लग्नाधीशकार्याधीशौ स्थानदृष्ट्या पश्यन् पुनरुभयोर्मध्ये शीघ्रतेजो नीत्वा मंदगाय दत्ते यमयाख्यो योगः स्यात् ॥ अत्रोदाहरणं संज्ञातन्त्रे ॥ राज्याप्तिपृच्छातुललग्ननाथो मेषे सितस्त्वष्टि १६ लवैर्वृषस्थः ॥ चंद्रो रसांशे ६ यदि राज्यनाथो दृष्टिस्तयोर्नास्ति गुरुस्तु मन्दः ॥ दिगंशतः कर्कगतस्तु पश्यन्भौममहोदीप्तलवैस्सचान्द्रम् ॥ ददौ सितायेतिपदस्य लाभो मात्येन भावीतिविमृश्य वाच्यम् ॥ अत्र लग्नेशकार्येशयोर्द्विर्द्वादशकत्वादन्योन्यदृष्टिर्नास्ति तृतीयो गुरुर्मन्दगामी कर्कस्थो दशांशः लग्नाधीशकार्याधीशौ स्थानदृष्ट्या पश्यन् सन् स्वल्पांशाद्भौमांशोस्स्वदीप्तभागैस्तेजो गृहीत्वा बह्वंशाय शुक्राय ददौ त स्मान्मंत्रद्वारया राज्यलाभोमात्येन वाच्यः॥इति यमयायोगः॥अथ मणऊयोगः॥तत्र मणऊयोगलक्षणमाह यादवः॥ भौमो वा

यमयायोगः ।




रविजश्चरस्य पुरतः पृष्ठेथवा संस्थितः पश्यन् शत्रुदृशा १ । ४ । ७ । १० स्वदीप्तलवकैर्हीनैरहीनैरपि ॥ ॥१९॥
यत्कार्यार्थमथो कृतम्मुथशिलं तत्र स्थितो वा ग्रहो गृह्णातीह महोमणुर्निगदितो योगोर्थनाशे पटुः ॥ मनुष्यताजिके समरसिंहोपि ॥ जातेपि योगे रविजोऽथ भौमश्शीघ्रस्य पृष्ठेऽथ पुरोरिदृष्ट्या ॥ स्वांशैर्महस्त्वेकगतस्तु हीनाधिकैश्चस

स्यान्मणऊनशस्त इति ॥ पूर्वपद्यस्यायमर्थः ॥ भौमश्शनिर्वालग्नेशकार्य्येशयोर्मध्ये शीघ्रग्रहस्याग्रे पृष्ठे वा स्थित्वा चतुर्थसप्तमैकराशिदृष्ट्या पश्यन् सन् स्वदीप्तांशैर्हीनैरधिकैर्वा शीघ्रस्य तेजो गृह्णाति तत्र लग्नेशकार्येशयोरित्थशालेऽपि कार्यनाशको मणऊयोगः । अथवा यत्कार्यनिमित्तं लग्नेशकार्येशाभ्यां यस्मिन् स्थाने मुथशिलंकृतं तत्र द्वयोरेकस्थानगो भौमः शनिर्वा हीनैरधिकैर्वा स्वदीप्तभागैर्द्वयोरेकस्य वा तेजो गृह्णाति स मणऊयोगः कार्यनाशको ज्ञेयः ॥ अत्र श्रीहरिभट्टदैवज्ञकृतस्संग्रहश्लोकः ॥ भौमः शनिर्वा मुथशिलीसराफवान् शीघ्रारिपुग्रहेण ॥ लग्नेशकार्योऽधिपतीत्थशालफलप्रणाशी मणऊ शुभो न ॥ अत्रोदाहरणमाह यादवः ॥ कन्याविलग्नेऽस्ति बुधोऽस्तनाथो दशांशकैरंगिरसाद्रिचंद्रैः ॥ मीने च युग्मेऽवनिजो भवांशैः पृष्ठो बुधस्तेन न चाङ्गनाप्तिः ॥ पृष्ठेऽपि भौमे नवभिस्तथैव मीने कविर्हास्ति ८ मितोऽत्र पूज्यः ॥ नृपैश्च

पुनर्नक्तयोगः। तत्रार्कसुतो नवांशैर्नगै ७ श्च पृष्ठे न हि कार्यसिद्धिः ॥ कर्के विलग्नेऽस्ति कविर्दिनांशै १९ र्वृषेभ्रचंद्रे १० र्हिमगुः




कुजोऽत्र ॥ भूपैर्ल वै १६ र्भूमिसुतेन चंद्रो हतस्ततो नात्र सखेर्थलाभ इति ॥ अत्रप्रथमोदाहरणे दशमस्थो भौमो लग्नगं बुधं तुर्यदृष्ट्या पश्यन् बुधादल्पांशादेकेनांशेनाधिको भूत्वा बुधतेजोहरो जातः ॥ अत्र स्त्रीलाभप्रश्ने कार्येशलग्नेशयोर्गुरुबुधयोरित्थशालेऽपि बुधस्य तेजोहीनत्वात् स्त्रीलाभो न च वक्तव्यः ॥ अथ ॥ हरते तेजः स्वांशै रहीनैरधिकैश्च मणऊयोगोसाविति विशेषसमरसिंहवाक्येन शीघ्रग्रहाद्बुधादल्पांशो मन्दग्रहो भौमो नवांशमितोऽपि बुधतेजोहरो जातस्तस्मान्नवांशमिते भौमे मणऊयोगत्वात्स्त्रीलाभो न वाच्यः ॥ द्वितीयोदाहरणे शुक्रशन्योर्योगो ज्ञेयः॥ अथ तृतीयोदाहरणे लाभप्रश्ने कर्केलग्नं तद्दीशश्चंद्रो

वृषे दशांशस्तत्र कुजः षोडशांशः॥ अत्र मंदो भौमः शीघ्राच्चंद्रादधिकांशस्तस्माच्चन्द्रतेजोहरो जातः ॥ अत्र यद्यपि लग्नेशकार्येशयोरित्थशालयोगोऽस्ति तथापि भौमकृतमणऊयोगत्वाल्लाभो न वाच्यः॥ एवमेकराशिस्थानेऽप्युदाहरणं ज्ञेयम्॥ इति मणऊयोगः॥ अथकम्बूलयोगः तत्रानेकभेदसहितकम्बूलयोग उक्तस्संज्ञातन्त्रे॥ लग्नकार्येशयोरित्थशालेऽत्रेन्द्वित्थशालतः॥कम्बूलं चेष्टमध्यादिभेदैर्नानाविधं स्मृतम् ॥ अत्र लग्नेशकार्येशयोरित्थशाले सति चेदत्र लग्नेशेन कार्येशेनोभाभ्यां वा चंद्रो मुथशिलं करोति तत्कम्बूलम् ॥ अत्र कम्बूलयोगे भेदोपपत्तौ स्वगृहोच्चावस्थितिरुत्तमोऽधिकारः स्वहद्दाद्रेष्काणनवांशावस्थितिर्मध्यमोऽधिकारश्शत्रुनीचगृहावस्थितिरधमोऽधिकार एतत्त्रितयाधिकाराराहित्यं समोऽधिकारः ॥ यदाह यादवः ॥ स्वोच्चस्वाल

यशालिनोर्यदि शशी स्वोच्चे स्वगेहे स्थितःसुश्रेष्ठं निजतुङ्गगेहरहितो योगे तदा श्रेष्ठकम्॥स्वत्रैराशिकहद्द भागगतयोर्मध्यं विनैभिस्त तो हीनं हीनतरञ्च नीचरिपुभे योगङ्करोतीह चेत् ॥ हीनं समं हीनतरं मध्यममेवञ्चन्द्रस्य लग्नेश कार्येशयोश्चाधिकारगवेषणया कम्बूलमुत्तमोत्तमा दिषोडशभेदाभिन्नम्भवतीति ज्ञेयम्॥अथोत्तमकम्बूललक्षणं संज्ञातंत्रे॥यदीन्दुःस्वगृहोच्चस्थस्तादृशौलग्न कार्यपौ ॥इत्थशाली ककम्बूलमुत्तमो त्तममुच्यते॥अत्रोदाहरणन्तत्रैव॥मेषे रविः कुजो वापि कर्कराशिगतश्शशी॥तत्रेत्थशालात्कम्बूलमुत्तमोत्तम कार्यङ्कुर्यादिति॥अत्र सन्तानप्रश्ने मेषलग्ने लग्नेशो भौमः स्वगृहे मेषलग्ने विंशत्यंशं पंचमभावाधीशो रविः स्वोच्चे मेषे सप्तदशांशश्चन्द्रः कर्के स्वगृहे चतुर्दशांशः ॥ अत्रार्कभौमयोः कार्ये शलग्नेशयोरित्थशालयोगोस्ति । चन्द्रोऽपि द्वाभ्यां सहेत्थशालङ्करोति तेन उत्तमोत्तमकम्बूलञ्जातम् ॥ उत्तमोत्तमकार्यङ्करोति सन्तानप्राप्त्याख्यं कार्य्य मवश्यङ्करोतीत्यर्थः ॥ अत्र लग्नाधीशकार्येशयोर्मुथशिलसत्त्वे चन्द्रो द्वयोरन्यतरेण मुथशिलञ्चेत्करोति तदाप्युत्तमोत्तमकम्बूलं स्यादिति यादवः॥अत्रो दाहरण माह स एव ॥ मेषेऽङ्गेऽवनिजो नवांशक इनः सिंहे कुभागः ७ शशी कर्के पिण्ड२८लवो हि चोत्तममतःकंबूलयोगः शुभ इति ॥ अत्र लग्नेशकार्येशाभ्यां चंद्रो मुथशिलं करोतीति मुख्यः पक्षः॥अथान्येषां कम्बूलयोगानां संज्ञातंत्रोक्तलक्षणानि स्वकृतोदाहरणसहितानि लिख्यंते ॥

मणऊयोगः । मणऊयोगः ।



तत्रोत्तममध्योत्तमसमयोर्लक्षणे ॥ स्वीयहद्दाद्दकाणाकभाग स्थेनेत्थशालतः ॥ मध्यमोत्तमकंबूलं हीनाधिकृतिनो त्तमम् ॥ अत्र यदींदुःस्वगृहोच्चस्थ इत्यनुवर्त्ततेहीनाधिकृति ना त्रिविधाधिकाररहितेन कोर्थः समस्य गृहहद्दाद्रेष्काणनवांश स्थेन लग्नपेन कार्यपेन ॥ अत्रोदाहरणे ॥ भागप्रश्ने तुला लग्नं स्वहद्दायां दशांशकः १०॥ दशमे संस्थितः शुक्रो

मणऊयोगः । उत्तमोत्तमं कं० ।



भाग्यपो ज्ञश्च सप्तमे ॥ शक्रांशः १४ स्वीयहद्दायां चंद्रः कर्के नवांशकः ९ ॥ योगे त्रयाणां कंबूलं प्रोक्तमुत्तममध्यमम् ॥ स्वनाम सदृशं ज्ञेयं प्रश्ने कंबूलजं फलम् ॥ एवं स्वस्वनवांशे तु गतयोर्लग्नकार्ययोः ॥ स्वगृहोच्चगतस्येंदोर्ज्ञेयो योगः स एव हि ॥ राज्यप्रश्ने

युग्मलग्नं ३ बुधः कौर्प्ये नगां ७ शकः ॥ समस्य ज्ञस्य गेहे तु कर्के पंचां ५ शकः शशी॥कंबूलमुत्तमसमं त्रयाणामित्थशालतः ॥ अथोत्तमाधमकंबूललक्षणम्॥उत्तमाधमता नीचरिपुगेहस्थितेन चेत्॥अत्रापि यदीन्दुस्स्वगृहोच्चस्थइत्यनुवर्तते॥उदाहरणम् ॥प्रश्ने स्त्रीलाभ संज्ञे तु तुलालग्नश्च भार्गवः॥स्वनीचे युवतीराशौ दशांशस्सप्तमाधिपः॥कुजःस्वनीचे सूर्यांशो विधुः कर्के नवांशकः॥त्रयाणामित्थशालत्वात्कम्बूलश्चोत्तमाधमम् ॥ अथमध्यमोत्तमकम्बूललक्षणम् ॥ स्वहद्दादिगतश्चन्द्रस्स्वभोच्चस्थेत्थशालकृत् ॥ मध्यमोत्तममेतच्च पूर्वस्मान्न विशिष्यते ॥ पूर्वस्मादुत्तममध्यमकम्बूलात् उदाहरणम् ॥ भामिनीलाभके प्रश्ने तुलालग्नन्तुलोपगः॥ शुक्रो धनांशो १७ जायेशो धृत्यंशो मेषगः कुजः ॥ स्वनवांशगतश्चन्द्रो मेषर्क्षे द्वादशांशकः ॥ त्रयाणामित्थशालत्वात्कम्बूलम्मध्यमोत्तमम्॥ अथमध्यमध्यमकम्बूललक्षणम् ॥ स्वहद्दादिपदस्थेन कम्बूलम्मध्यममध्यमम् ॥ अत्र स्वहद्दादिगतश्चन्द्र इत्यनुवर्तते ॥ उदाहरणम् ॥ पुत्रप्रश्ने युग्मलग्नं ज्ञस्तुलायां नगांशकः ॥ स्वहद्दायां स्थितश्शुक्रः पञ्चमेशोऽष्टमांशकः ॥ मिथुने स्वीयहद्दायां विधुर्जूके नगांशकः ॥ स्वत्रिभागगतो योगे कम्बूलम्मध्यमध्यमम् ॥ योगे इत्थशालाख्ये ॥ अथमध्यमसमकम्बूललक्षणम् ॥ मध्यमं समकंबूलं हीनाधिकृतिखेटजम्॥अत्रापि स्वगृहादिगतश्चन्द्र इत्यनुवर्तते ॥ उदाहरणम् ॥ वृषलग्नं सुतप्रश्ने मृगे वेदांशकः सितः ॥ समस्य ज्ञस्य हद्दायां सुतेशो ज्ञः शरांशकः॥ तुलायां सममन्दस्य हद्दास्थो जूकगः शशी ॥ रामांशः स्वत्रिभागे तु कंबूलं मध्यमं समम् ॥ अथमध्यमाधमकंबूललक्षणम् ॥ मध्यमाधमकंबूलं नीचारिभगखेटजम् ॥ अत्राऽपि स्वहद्दादिगतश्चंद्र इत्यनुवर्तते ॥ उदाहरणम् ॥ भाग्यप्रश्ने मेषलग्नं भौमः कर्के नवांशकः

| | | |
|---|---|---|
| ९ ८ | ७ | ६ ५ |
| १० | उत्तम मध्यमम्. | स्वहद्दा ४ शु.१ चं.१ |
| ११ १२ | बु. १४ १ स्वहद्दा. | २ ३ |

| | | |
|---|---|---|
| ५ चं ४ ५ | ३ | २ १ |
| ६ बृ ९ | उत्तम समम्. | १२ |
| ७ ८ बु ७ | ९ | १० ११ |

| | | |
|---|---|---|
| ९ ८ | ७ | शु१० ६ ५ |
| १० | उत्तमाधमम् | चं ४ मं १२ |
| ११ १२ | १ | २ ३ |

गुरुर्भाग्याधिपो नीचे मकरे च दशांशकः॥स्वद्रेष्काणगतश्चंद्रस्तुलायां पंचभागकः ॥ त्रयाणामित्थशालत्वात्कंबूलं मध्यमाधमम् ॥

अथ समोत्तमकंबूललक्षणम् ॥ इंदुः पदोनः स्वर्क्षोच्चस्थिते नाप्युत्तमं तु तत् ॥ अत्र पदोनं द्विविधं एक तावद्ग्रहाणां समगृहसमहद्दासमद्रेष्काणे समनवांशगतत्वम् ॥ द्वितीयं सूक्ष्मे प्रतिविकलारूपे समगृहहद्दाद्रेष्काणनवांशानामादौ प्रांतेवाव स्थितत्वमिति जीर्णटीकाकृत् ॥ उदाहरणम् ॥ धनलाभाभिधे प्रश्ने तुला लग्नञ्च भार्गवः ॥ तुलायां नगभागाश्च धनेशो मकरे कुजः ॥ नवांशो मिथुने चंद्रो ज्ञहद्दायां शरांशकः ॥ इन्दोः समोज्ञः कंबूलं योगे प्रोक्तं समोत्तमम् ॥ ९ ॥

मध्यमोत्तमं कं०।



मध्यमध्यमं कं०।



मध्यमाधमं कं०।



मध्यमाधमम् ।



अथसममध्यमकंबूललक्षणम् ॥ स्वहद्दादिगतेनापि पूर्ववन्मध्यमुच्यते ॥ अत्रापि इंदुः पदोन इत्यनुवर्तते ॥ उदाहरणम् ॥ धनप्रश्ने तुलालग्नं शुक्रः सिंहे दशांशकः ॥ स्वहद्दायां धनाधीशो भौमश्चापे दिगंशकः ॥ स्वहद्दायाञ्च मिथुने समशुक्रस्य हद्दगः ॥ विधुर्दशांशो योगेऽस्मात्कम्बूलं सममध्यमम् ॥ १० ॥

अथ समसमाख्यमध्यमकम्बूललक्षणम् ॥ पादोनेनापि मध्यं स्यादिति युक्तम्प्रतीयते ॥ अत्र इंदुः पदोन इत्यनुवर्तते ॥ पदोनेन द्रेष्काणादिसंधिस्थेन लग्नेशेन कार्येशेन च उदाहरणम् ॥ द्रव्यप्रश्ने मेषलग्नम्भौमः सिंहे धनाधिपः ॥ भृगुर्घटे विधुर्जूके त्रयश्चामी दिगंशकाः ॥ द्रेष्काणसन्धौसंस्थित्य जाताश्चामी पदोनिताः॥समं समञ्च कम्बूलम्प्रोक्तं तादित्थशालतः॥अथसमाधमकम्बूललक्षणम् ॥नीचारिस्थेनेत्थशालेऽधमकम्बूलमुच्यते ॥ अत्र इंदुः पदोन इत्यनुवर्तते ॥ उदाहरणम् ॥ पुत्रप्रश्ने युग्मलग्नम्बुधो मीने नवांशकः ॥ सुतेशः कन्यकायाञ्च दशांशो नीचगो भृगुः ॥ समस्य ज्ञस्य द्रेष्काणे चापे चन्द्रश्शरांशकः ॥ त्रयाणामित्थशालत्वात्कम्बूलञ्च समाधमम् ॥

समोत्तमम् ९



समममध्यमम् १०



समसमम् ११



अथाधमोत्तमकम्बूललक्षणम् ॥ नीचशत्रुभगश्चन्द्रस्स्वभोच्चस्थेत्थशालकृत् ॥ अधमोत्तमकम्बूलमिति उदाहरणम् ॥ सुखप्रश्ने सिंहलग्ने रविः सप्तांशकः क्रिये ॥ सुखेशो मकरे भौमो नवांशो वृश्चिके

समाधमम् १२



अधमोत्तमम् १३



शशी ॥ त्र्यंशस्त्रयाणां योगे तु कंबूलमधमोत्तमम् ॥ १३ ॥ अथाधममध्यमकंबूललक्षणम् ॥ स्वहद्दादिगते चेत् ॥ ॥ इत्थशाली

अधममध्यमम् १४



अधमसमम् १५



कंबूलं तदुच्यतेऽधममध्यमम् ॥ अत्र नीचशत्रुभगश्चन्द्र इत्यनुवर्तते ॥ उदाहरणम् ॥ पुत्रप्रश्नेंगनालग्नं स्वहद्दायां मृगे बुधः ॥ रामांशः पुत्रपो मन्दः स्वहद्दायां शरांशकः ॥ मीने वृश्चिकगश्चंद्रस्त्र्यंशश्चैषां तु योगतः ॥ प्रोक्तं चाधममध्यं तु कंबूलं शास्त्रवेदिभिः ॥ अथाधमसमकंबूललक्षणम् ॥ पदोनेनेत्थशाली चेत्कंबूलं त्वधमं समम् ॥ अत्र नीचशत्रुभगश्चन्द्र इत्यनुवर्तते ॥

अधमाधमम् १६



उदाहरणम् ॥ वृषलग्नं राज्यलाभप्रश्ने सिंहगतः सितः ॥ समस्यार्कस्य गेहे तु शरांशो राज्यपः शनिः ॥ वृषे समस्य शुक्रस्य गेहे खेंदुमितांशकः ॥ चंद्रो वृश्चिकगस्त्र्यंशस्त्रयाणामित्थशालतः ॥ कम्बूलं चाधमसमं प्रोक्तं ताजिकवेदिभिः॥ १५ ॥ अथाधमाधमकंबूललक्षणम् ॥ नीचारिभस्थखेटेन नीचारिभगतः शशी ॥ इत्थशालीकंबूलं तदधमाधममुच्यते ॥ उदाहरणम् ॥ पुत्रप्रश्ने धनुर्लग्नं मृगे वस्वंकको गुरुः ॥ कर्के सुताधिपो भौमः पंचांशो वृश्चिके शशी ॥ त्र्यंशस्त्रयाणां योगे तु कंबूलमधमाधमम् ॥ १६ ॥ कंबूले

विशेष उक्तः संज्ञातंत्रे ॥ लग्नकार्यपयोरित्थशालेत्रैकोस्तिनीचगः ॥ स्वर्क्षादिपदहीनोन्योत्रेंदुः कंबूलयोगकृत् ॥ तत्र कार्योऽल्पता
ज्ञेया यथाजात्यन्यमर्थयन् ॥ अन्यजातिः पुमानर्थं तथैतत्कवयो विदुरिति ॥ अथ कंबूलयोगे विंशोपकानयनम् ॥ निशेशलग्नेश्वरयो
र्निशेशकार्येशयोः कार्यपलग्नयोश्च ॥ विंशोपकासंमिलितास्त्रिभक्ता विंशोपकास्ते कथिताः कबूले ॥ इति श्रीरामदैवज्ञगुरुपादाब्ज
भक्तितः ॥ कम्बूलम्भेदसहितम्बलभद्रेण निर्मितम् ॥ इति कम्बूलयोगः ॥ अथ गैरिकम्बूलम् ॥ तत्र गैरिकम्बूललक्षणमाह यादवः ॥
जातेत्थशाले ह्युभयोरदृष्टिस्थाने चरन् शीतरुचिस्तयोस्तु॥प्रविश्य कस्यापि गृहं तथोच्चं कुर्याद्युतिङ्गैरिकबूलमुक्तम् ॥ वदन्ति
चैतं फलतस्समानङ्कम्बूलयोगस्य तथैव भेदैः ॥ तथाहि गेहन्ननिजोच्चकञ्च यदा तदा निष्टफलंकबूलम् ॥ तयोर्लग्नेशकार्येशयोर्युतिरि
त्थशालश्चंद्रेत्थशालावस्थितस्य ग्रहमुच्चं वा न भवति तदानिष्टमित्यर्थः ॥ उक्तञ्च ताजिकालङ्कारे ॥ तत्खेटगेहतुङ्गस्थो न स्याद्यदि च चन्द्
माः ॥ गैरिकम्बूलयोगोसावभद्रः कथितो बुधैः ॥ अत्रोदाहरणम् संज्ञातन्त्रे ॥ लप्स्ये सुखामितिप्रश्ने सिंहलग्नं रविः क्रिये ॥ अष्टांशै
स्सुखपः कुम्भे भौमोंशै रविभिस्तयोः ॥ इत्थशालोस्ति तत्रेन्दुः कन्यायाञ्चरमेंशके ॥ स्वर्क्षादिपदहीनस्य नेत्थशालोस्ति कस्य
चित् ॥ स स्वोच्चगेन शनिनाऽन्यर्क्षस्थेनेत्थशालकृत् ॥ गैरिकम्बूलमन्येन साहाय्याल्लाभदायकम् ॥ इति गैरिकम्बूलम् ॥ अथ
खल्लासरः ॥ तत्र खल्लासरयोगलक्षणमाह यादवः ॥ द्वयोरथैकेन च शीतभानुरदृष्टिमार्गे विचरन्करोति ॥ न मूथशीलन्न च संयुतिं वा
खल्लासरः कार्य्यहरस्तदा स्यात् ॥ अत्र लग्नेशकार्येशयोरपि मुथशिलाभावो ज्ञेय इति केचिदाहुस्तन्न । यतस्सर्वैः खल्लासरफलङ्कार्यनाशक
मित्युक्तम् ॥ तत्र लग्नेशकार्याधिपयोरित्थशालाभावे कार्यप्राप्तिरेव न जाता तत्र कार्यसम्भवः खपुष्पादिसमस्तयोरित्थशाले कार्य्यप्राप्तिसम्भवेपि
लग्नपकार्य्यपाभ्याञ्चंद्रस्य युतीत्थशालासम्भवात्केमद्रुमयोगवदित्थशालफलनाशकः खल्लासरयोगो ज्ञेय इति ॥ एतत् स्पष्टमुक्तं जीर्णता
जिके ॥ लग्नेशकार्याधिपयोरित्थशालो न वा युतिः ॥ द्वाभ्याञ्चन्द्रो नेत्थशाली प्रोक्तः खल्लासरोशुभः ॥
उदाहरणम् ॥ लप्स्ये सुतमिति प्रश्ने सिंहलग्नं रविः क्रिये ॥ वेदांशैस्सुतपे जीवः कुंभेंशैरशरसम्मितैः ॥ लग्नकार्य

पयोरस्ति योगो मुथशिलाभिधः ॥ अथ कन्यांतिमेंशे च विधुर्मुथशिलो न हि ॥ द्वाभ्याञ्च तेन कार्यस्य नाशी खल्लासरो मतः ॥ इति खल्लासरः ॥ अथ रद्दयोगः॥ तत्र रद्दयोगलक्षणमुक्तं योगसुधानिधौ ॥ वक्रेण द्युमणिकराभिगामिनास्तं प्राप्तं न व्यय १२ रिपु ६ नाश ८ गामिना च ॥ क्रूरेण क्रमिततमस्सदेत्थशालं तद्रद्दं हरति फलं प्रहर्षणीयम् ॥ अत्र विशेष उक्तस्ताजिकभूषणे ॥ आपोक्लिमस्थश्चरखेचरश्चेत्केन्द्रस्थमन्देन च मूथशीलम् ॥ करोति कार्यं प्रथमं विलम्बम्पश्चादवश्यं सकलार्थसिद्धिम् ॥ केन्द्रस्थितश्शीघ्रगतिः करोति आपोक्लिमस्थेन च मूथशीलम्॥मन्देनकार्यम्प्रथमञ्च भूत्वा प्रान्ते विनाशं समुपैत्यवश्यम् ॥

खल्लासरः ।



रद्दयोगः ।



अत्रोदाहरणम् ॥ भाग्यप्रश्ने मेषलग्नम्भौमः कन्यागतो गुरुः ॥ भाग्यपस्तत्र तत्रैव संस्थितो रविमन्दगौ ॥ सर्वे दिगंशप्रमिता रद्दोयं फलनाशकः ॥ वातलग्ने मीनसंस्थः कुजो मकरगो गुरुः ॥ द्वौ दिगंशप्रागशुभं शुभं पश्चात्प्रकीर्तितम् ॥ वातलग्ने कर्कसंस्थो भौमो वा मीनतो गुरुः॥ द्वौ दिगंशौ प्राक्शुभं स्यात्पश्चादशुभमेव च ॥ इति रद्दः ॥ अथ दुःफालिकुत्थयोगः ॥ तत्र दुःफालिकुत्थयोगलक्षणन्ताजिकभूषणे ॥ मन्दस्स्वगेहे यदि वा निजोच्चे त्रैराशिके वापि निजे प्रकुर्यात् ॥ योगं चरेणानाधिकारिणा चेद्दुःफालिकुत्थश्शुभकृन्निरुक्तः ॥ योगम्मुथशिलाख्यंयद्यधिकाररहितेन शीघ्रेण मुथशिलङ्कार्यकरन्तर्हि अधिकारसहितेनाप्यवश्यङ्कार्यकरमिति जीर्णटीकाकृत् ॥ अत्रोदाहरणम् ॥ सुखप्रश्ने मेषलग्नम्भौमस्सूर्यांशकः क्रिये ॥ दिगंशकस्सुखाधीशो हिमांशुः कुंभसंस्थितः ॥ द्वयोरत्रेत्थशालत्वात्सुखलाभं विनिर्दिशेत् ॥ इति दुःफालिकुत्थः ॥ अथ दुत्थोत्थतंबीरयोगस्तत्र दुत्थोत्थतंबीरयोगलक्षणमुक्तञ्जीर्णताजिके ॥ लग्नेशकार्याधिपती निर्बलौ योगकारकौ ॥ तयोरेकस्स्यगेहोच्चादिस्थेनान्येन योगकृत् ॥ दुत्थतंबीर

प्रागशुभपश्चाच्छुभरद्दयोगः ।



प्राक्शुभपश्चादशुभरद्दयोगः ।



योगोन्यसाहाय्यात्कार्य्यकारकः ॥ अथवान्यौ ग्रहौ स्वक्षीदिगौ शीघ्रगती तयोः ॥ निर्बलेनच मन्देन मुथशी लकरौ तदा ॥ दुत्थतंबीरयोगोन्यसाहाय्यात्कार्य्यकारकः ॥ तयोर्लग्नेशकार्येशयोः ॥ उदाहरणम् ॥ जायाप्रश्ने सिंहलग्नं तुलासप्तांशके रविः ॥ शनिर्मेषे नन्दभागः कुजो मेषे रसांशकः ॥ शनिस्स्वगृहसंस्थे नभौमेन मुथशीलकृत् ॥ जायालाभो न्यसाहाय्याद्दुत्थतंबीरयोगके ॥ वातल्लग्ने सूर्यभौममंदाः पूर्वोक्तवत्स्थिताः ॥ मेषे जीवः स्वहद्दायां पंचांशो गुरुभूमिजः ॥ मंदेन योगकर्तारावतो लाभोन्यतः स्मृतः ॥ अत्र स्वग्रहगो भौमः स्वहद्दास्थो गुरुस्तौ स्वनीचस्थेन निर्बलशनैश्चरेणेत्थशालकरावतः स्त्रीलाभोन्यतो वाच्यः ॥ इति दुत्थोत्थतंबीरयोगः अथ तम्बीरयोगः ॥ तत्र तम्बीरयोगलक्षणमुक्तं हायनसिंधौ ॥ लग्नेशकार्याधिपयोर्न योयो बली तयोर्भान्तगतोपराय ॥ दीप्तांशकैर्वीर्ययुताय दत्तेऽन्यर्क्षे महोत्यंतशुभस्तवीरः ॥ अत्र लग्नेशकार्येशयोरित्थशालाभावे तयोरेको बली राश्यन्तगः अपराय अन्यस्मै स्वगृहादिवीर्ययुतायाग्रिमराशावित्थशालद्वारया तेजो दत्ते सः शुभस्तम्बीरयोगः ॥ उदाहरणम् ॥

दुःफालिकुत्थः ।



दुत्थोत्थतम्बीरयोगः ।



सुखप्रश्ने तुलालग्नं द्व्यंशः कर्के भृगुज्ञशनिः ॥ एको नत्रिंशदंशश्च कुम्भे योगो तयोर्नहि॥मीनसंस्थेनगुरुणा पञ्चांशेनेत्थशालवान्॥शनिस्तम्बीरयोगोयंप्रोक्तः कार्यकरो बुधैः॥इति तम्बीरयोगः अथ कुत्थयोगः॥तत्रकुत्थयोगलक्षणमुक्तन्ताजिकभूषणे ॥ खेटः स्वीयगृहादिकण्टकगतः प्राग्लग्नसंलग्नदृक् ॥ सद्भिर्दृष्टयुतश्च पापयुतिदृक्

दुत्थोत्थदवीरः ।



तंबीरः ।



संवर्जितोभ्युद्गमः ॥ मार्गी कालबलान्वितस्सबलवान्सम्यक्फलावाप्तिदः ॥ कालज्ञैर्बलवीक्षणाय गदितो योगो हि कुत्थाभिधः ॥ इतिकुत्थः ॥ अथ दुरुःफयोगः ॥ तत्र दुरुःफयोग लक्षणन्तत्रैव ॥ अस्तङ्गतो व्यस्तगतिस्त्वशस्तैर्युतेक्षितोष्टांत्यारिगस्स्वगेहात् ॥ सप्तेपगो नीचखगेत्थशाली राह्वास्यपुच्छे दुरुफाभिधानः ॥ संज्ञातन्त्रे चन्द्रस्य दुरुःफे विशेष उक्तः॥ चन्द्रस्सूर्य्याद्द्वादशे वृश्चिकाद्ये खण्डे

क्षीणेभान्ते नो शुभो जन्मकाले पृच्छायां वा नेष्टोन्त्ये तुलायां विशेषात्॥राशीशेनादृष्टमूर्तिर्न सर्वैर्दृष्टो ज्ञेयः शून्यमार्गः पदोनः॥
अस्यापवादमाह समरसिंहः॥ दिवसे तु पूर्वं चन्द्र एवं विचिन्त्यः॥ शुक्ले भौमः कृष्णपक्षेऽर्कसूनुः क्षुद्दृष्टचेन्दुं वीक्षते नो शुभोसौ॥
भौमो रात्रावपरे पक्षेस्त्रीराशिसंगतस्स्वल्पम्॥ पक्षे पृच्छायाञ्जातके च रविसूनुः॥ नरराशिगोऽल्पदोषम्बहुदोषं व्यत्ययात्कुरुते॥
इत्युक्तञ्च यादवेन॥ तन्तं दोषं कुरुते प्रश्ने जन्मनि च व्यत्ययात्प्रचुरम्॥ इति दुःफः॥ एते सर्वे इत्थशालस्यैव भेदाः॥
अन्योपि विशेष विशेषम्प्रतिपद्यमानो निरूपितः षोडशधेत्थशालः॥ यथा चतुर्विंशतिभेदशालीस्यात्केशवश्चक्रगदादिभेदैः॥
एवं क्रूरशुभादिवीक्ष स्तत्रैव॥ यद्यद्भावपतिर्ददाति हि निजन्तेजोङ्गनाथाय चेत्तत्तत्प्रातिकरोन्यथाक्षयकरः क्रूरश्शुभद्व्यतिकृत्॥
इति श्रीमद्दैवज्ञवर्य्यपण्डितदामोदरात्मजबलभद्रविरचिते णवशाज्ज्ञात्वा वदेद्बुद्धिमान्भागैरन्तरसम्भवैरवि १२ गुणैस्तत्प्रातिकालन्तथा॥
तत्प्रयोजनमाह यादवः॥ सकलभावफलस्य सहायता विदधते सहमानि हायनरत्ने षोडशयोगाध्यायस्तृतीयः॥३॥ अथ सहमाधिकारः॥
अथ शीघ्रोपस्थित्यर्थं सहमानां नामान्युक्तानि संज्ञातंत्रे॥ सदा यतः॥ विधिरिवोद्यमनस्य नृणामतः सहमसन्नयनं विदधे स्फुटमिति॥
भ्राता९ततो गौरव १० राज ११ तात १२ माता पुण्यं १ गुरु २ ज्ञान ३ यशांसि ४ मित्रं ५ माहात्म्य ६ माशा ७ च समर्थता८ च॥
परतःक्षमोक्ता २१ शास्त्रं २२ सबन्धु सहमं १३ सुतो १४ जीवित १५ मम्बु १६ कर्म १७॥ मांद्यं १८ च मन्मथ १९ कली २०
सवणिक् ३० त्वथ कार्यसिद्धिः ३१॥उ २३ त्वथ वन्दकश्च २४॥ मृत्युश्च २५ सद्म २६ परदेश २७ धनान्यदारा २८ स्यादन्यकर्म २९
व्यापारसहमे ४० पानीयपतनं ४१ रिपुः ४२॥ द्वाह ३२ सूति ३३ सन्ताप ३४ श्रद्धा ३५ प्रीति ३६ वलं ३७ तनुः ३८॥ जाड्य ३९
बंधनं ४८ दुहिता ४९ श्वश्रूः ५० पञ्चाशत्सहमानि हि॥ शौर्यौ ४३ पाय ४४ दरिद्रत्वं ४५ गुरुतां ४६ बुपथाभिधं ४७॥
अन्यैरधिकानि सहमान्युक्तानि॥ भार्याख्य अत्र परदेशसहममेव मार्गसहमम्॥ विवाहसहममेव स्त्रीसहमम्॥ ज्ञानसहममेव विद्यासहमं ज्ञेयम्॥
गजाभिधं ५७ सन्मतिं ५८ घात ५९ कोष्टं ६० ५१ मोक्षा ५२ वसुखं ५३ पितृव्यसंज्ञं ५४ तथा क्लेश ५५ गमागमौ च ५६॥
ग ६७ प्राति ६८ निधि ६९ ज्ञाति चतुष्पदाख्यं ६१ व्यसनं ६२ कृषिश्च ६३॥ दृष्टयाख्य ६४ माखेटक ६५ भृत्यकां ६६

७० ऋणानि ७१ बुद्धिः ७२ ॥ आधान ७३ धैर्यामिध ७४ सत्यकानि ७५ पंचाद्रिसंख्यान्यखिलानि तानि ॥ प्रोक्तानि पूर्वैः
क्रमशस्त्वथैषां स्फुटं वदाम्यानयनं यथोक्तामिति ॥ अथ सुगमप्रकारेण पुण्यसहमानयनमुक्तं संज्ञातन्त्रे ॥ सूर्योनचन्द्रान्वितमाहि लग्नं
क्रमशस्त्वथैषां ... दिवसे वर्षप्रवेशो जन्मकाले
वीन्द्वर्कयुक्तं निशि पुण्यसंज्ञम् ॥ शोध्यर्क्षशुद्धयाश्रयभान्तराले लग्नन्न चेत्सैकभमेतदुक्तम् ॥ अस्यार्थः ॥ दिवसे वर्षप्रवेशो जन्मकाले
वा भवेत्तदा तात्कालिकस्पष्टलग्नन्तात्कालिकस्पष्टसूर्यरहितेन चन्द्रमसान्वितङ्कार्यन्तत्पुण्यसहमम्भवति ॥ रात्रौ लग्नं स्पष्टचन्द्ररहितस्पष्टार्कयुतं पुण्यं
सहमं स्यात् ॥ अत्र संस्कारविशेष उच्यते ॥ शोध्यर्क्ष इति ॥ शोध्यते न्यूनः क्रियते यो ग्रहः स शोध्यस्तस्य राशिश्शोध्यर्क्षं यस्मिन् ग्रहे शोधं
ग्रहश्शोध्यते स शुद्धयाश्रयो ग्रहस्तस्य भं राशिः अनयो राश्यादिग्रहयोर्मध्ये शोध्यग्रहराश्यादिमारभ्य शुद्धयाश्रयग्रहराश्यंशावधिमध्ये चेल्लग्नं स्यात्
तदैतत् पुण्यसहममेकराशिसहितङ्कार्य्यम् ॥ यदि तयोर्मध्ये लग्नं स्यात्तदैकराशियुतन्न कार्यमित्यर्थः ॥ अत्र शोध्यर्क्षशुद्धयाश्रयेतिसामान्योक्तिर्
मानामपि ग्रहणार्थं कृता ॥ अस्योदाहरणम् ॥ स्पष्टस्सूर्यो राश्यादिः ४ । ८ । १० स्पष्टश्चन्द्रो राश्यादिः ६ । १२ । १० लग्नं राश्यादिः ८
१० । ०० दिने वर्षप्रवेशोऽस्तीत्यतस्सूर्यश्चन्द्रमध्ये शोधितशेषम् २ । ४ । ०० लग्नयुतं १० । १४ । ०० सिंहाष्टमांशादारभ्य तुलाद्वादशांश
वधि धनुर्लग्नाभावादेकराशियुतञ्जातं पुण्यसहमं ११ । १४ । ०० ॥ अथ रात्रौ वर्षप्रवेशे सूर्यः ४ । ८ । १० चन्द्रः ६ । १२ । १० लग्नं
२ । १४ । ०० अत्र सूर्यमध्ये चन्द्रश्शोधितशेषम् ९ । २६ । ०० लग्नयुतं ० । १० । ० तुलाद्वादशांशादारभ्य सिंहाष्टमांशावधि मिथुन
लग्नसत्त्वादेकराशियोगाभावः तस्मादिदमेव ० । १० । ० पुण्यसहमम् ॥ अत्रार्थे मूलं समरसिंहः ॥ दिवसे दिनपतिभोग्यान् शशिभुक्तां
शकांश्च संमील्य ॥ अंतःस्थितराशियुतांस्त्रिंशत्प्रत्येकतः कृत्वा ॥ यद्यंतरराश्यंतर्न भवति लग्नं तदास्य भुक्तांशाः ॥ मध्ये क्षेप्या
भध्यास्थिते तु भोग्यांशकाः पात्याः ॥ लग्नाद्द्वितीयभवनात्त्रिंशत्प्रत्येकशोधिते यत्र ॥ विश्राम्यति तत्रर्क्षं विज्ञेयं पुण्यसहमामिति ॥
नक्तं तु चंद्रभोग्याद्रविभुक्तं यावदन्य आद्यविधिरिति ॥ व्याख्या ॥ दिवसे वर्षप्रवेशे सूर्यभोग्यांशान् चंद्रभुक्तांशांश्चसंमील्य पुनः ॥२४॥
सूर्याच्चन्द्रपर्यन्तं यावंतोन्तःस्थितराशयस्ते त्रिंशत्प्रत्येकतः कृत्वा योज्यास्त्रिंशद्गुणिता राशयो योज्या इत्यर्थः ॥ पुनः सूर्यराशेः सकाशा
चन्द्रराशिः यावन्मध्ये लग्नराशिर्न भवति तदा अस्य लग्नस्य भुक्तांशाः कृतांशसमूहे क्षेप्याः ॥ यदि तु तयोः शोध्यशोधकयोः राश्यादिकयोर्मध्य

वर्ति लग्नं भवति तदा लग्नभोग्यांशाः प्रोक्तांशमध्ये शोध्याः ॥ ततो लग्नद्वितीयभवनमारभ्य त्रिंशदंशैरेकैकराशिं विशोध्य यस्मिन् राश्यादौ विश्रांतिः स्यात्तद्राश्याद्यं पुण्यसहमं ज्ञेयम् ॥ रात्रौ चन्द्रभोग्यांशाः सूर्य्यभुक्तांशैर्मध्यवर्तिराशिभिश्च युताः कार्यास्ततो यद्यन्तरराश्यंतरित्याह ॥ अन्य आद्य विधिः कर्तव्य इत्यर्थः ॥ अत्रोदाहरणम् ॥ दिने सूर्यभोग्यांशाः २१ । ५० चन्द्रभुक्तांशै १२ । १० युताः ३४ । ० सूर्यचन्द्रयोर्मध्ये एक एव राशिस्तस्यांशैः ३० युताः ६४ अयमंशाद्यः सुर्योनश्चंद्रो जातः पुनरेतेंशा लग्नस्य बहिःस्थितत्वाद्भुक्तांशैर्योजिताः ७४ एवं धनुर्लग्नस्य संस्कारो जातस्ततो लग्नात् द्वितीयभवनं मकरस्थमारभ्य त्रिंशदंशैरेकराशिकल्पनया मकरकुंभयोरंशाः६०शोधिताः शेषम् १४ अंशादि ॥ अत्र मीनलग्नस्यांशाः ३० न शुध्यन्त्यतो मीनचतुर्दशांशेविश्रान्तिर्जाता तस्मादिदमेव पुण्यसहमं मीनलग्ने चतुर्दशांश ११ । १४ सम्मितं संज्ञातन्त्रानीतसमम् ॥ अथ रात्रौ चन्द्रभोग्यांशाः १७ । ५० सूर्यभुक्तांशै ८ । १० युताः २६ । ० चन्द्रार्कयोरन्तरस्थराश्यंशै ९ । २७ युताः २९६ ॥ जातश्चन्द्रोन सूर्यः ॥ अत्र चन्द्रार्कयोर्मध्ये लग्नमस्तीत्यतो लग्नभोग्यांशाः ९ । १६ प्रोक्तांशमध्ये २९६ शोधिताश्शेषं २८० ततो लग्नद्वितीयभवनं कर्कस्थमारभ्य नवराश्यंशाः २७० मीनान्तं यावत् अंशसमूहे २८० शोधिताश्शेषं १० मेषराशिरंशाः ३० न शुध्यन्त्यतो मेषदशांशे विश्रांतिर्जाता ॥ अत इदमेव ० । १० पुण्यसहमं संज्ञातन्त्रानीतसहमसमम् ॥ अथ संज्ञातन्त्रोक्तसैकताकरणोपपत्तिः ॥ तत्र पूर्वं समरसिंहेन लग्नसंस्कारे शोध्यशोधकयोर्मध्ये लग्नाभावे लग्नभुक्तांशाः कृतांशसमूहे क्षेप्याः लग्नसमत्वे तु लग्नभोग्यांशाः कृतांशसमूहे शोध्याः पुनर्लग्नद्वितीयभवनात् ॥ त्रिंशत्प्रत्येकतः कृत्वा शोधनमुक्तम् ॥ तत्र लग्नाभावे भुक्तांशसहितांशसमूहे धनभात्त्रिंशत्त्रिंशांशशोधने धनभावादेव सहमगणना जाता धनभावलग्नभावयोरन्तश्चैकराशिमितं दृष्टमतस्सहमे सैकतां कृत्वा लग्नादेव सहमगणनोक्ता लग्नसमत्वे तु भोग्यांशसमूहे धनभावात्पूर्ववच्छोधने कृतेऽत्रापि धनभावादेव गणना जाता परन्तु भोग्यांशशोधने भुक्तांशयोजनेंशसाम्यपूर्वकमेकराश्यंशानामूनत्वम्भवति ॥ एकराशिहीनो धनभावो लग्नभाव एव भवत्यतः सहमे सैकतासंस्कारे विनैव लग्नादेव सहमगणनोक्तेत्युपपन्नं सैकतासंस्कारकरणम् ॥ अत्र केचिल्लग्नद्वितीयभवनादितिवाक्ये लग्नात् द्वितीयभवनादितिपञ्चम्यंतं पदद्वयरूपं पाठं कल्पयित्वयद्यंतरराश्यंतर्न भवति लग्नं तदास्य भुक्तांशा मध्ये क्षेप्यास्तदैव लग्नभवनादेवाग्रिमराश्यंशाः शोध्याः यदा तु मध्यस्थितं लग्नं तदास्वभोग्यांशा मध्ये क्षेप्यास्तदैव लग्नद्वितीयलग्नादारभ्याग्रिमराश्यंशाः शोध्याः एवं कृते सति लग्नस्य बहिःस्थितत्वे वा लग्नयोग एव भवतीत्याहुः ॥ नैतद्रम्यम् ॥

७

यत ऋषिस्थानाभिषिक्तसमरसिंहवाक्ये प्रथमतः पाठांतरकल्पनमेव नोचितम् ॥ अथ कल्प्यमानेपि पाठेक्रमादितिपदाभावान्नाभिमतसिद्धिः ॥ रीतिरियं ग्रंथकर्तॄणां यत्र यथासंख्यं चिकीर्षितं तत्र तत्र क्रमाद्यथासंख्यंयथाक्रमंपदानि प्रयुज्यंते ॥ अब्दा गजाश्वैस्त्रिरसैर्विभाजिता ऋणं विलिप्तासु शशीज्ययोः क्रमादिति भास्करः ॥ अतः क्रमोक्तौ सत्यामेव यथोक्तार्थलाभो भवेत् ॥ क्रमपदाभावे विपरीतोप्यर्थः संभाव्येत ॥ यथा ॥ लग्नस्य मध्यगतत्वाभावे सति द्वितीयभवनादारभ्य शोधनं लग्नस्यांतर्भूते सति लग्नादारभ्य शोधनमित्यर्थत्वात् ॥ अथ च समरसिंहस्य यद्येषएवाभिप्रायोभिमतःस्यात्तदा यद्यंतरराश्यंतरित्यादिपद्योक्तप्रकारगौरवमपहाय प्रथमपद्यकथनानंतरं तत्र राश्यादिलग्नं क्षेप्यमित्येव प्रकारं लाघवात्समरसिंहो ब्रूयात्तच्च न कृतमतोलग्नद्वितीयभवनादित्येकमेव पदं जायत इति सिद्धांतः ॥ एतत्स्पष्टमुक्तं तेजःसिंहेन ॥ भोग्यान्हि रवेरंशान्मुक्तानिन्दोश्च मेलयेत् ॥ ततस्तयोरन्तरालराशिं संघांशैर्युतान् ॥ स्याच्चेन्नान्तरराश्यन्तर्लग्नन्तस्यांशके च ये ॥ लग्नभुक्तांशकाः क्षेप्यास्तन्मध्यस्थेथवोदये ॥ तदात्रोदयभोग्यांशाः पात्यास्युर्भागपिण्डतः ॥ त्रिंशत्कृत्वाधनस्थानादंशान्प्रत्येकशोधनात् ॥ विश्राम्यति हि तत्रर्क्षे स्यात्पुण्यसहमं विधोः ॥ भोग्यादारविमुक्तन्तु निश्यन्यो विधिरादिम इति वामनेनापि पितृसहमानयने स्पष्टमभिहितञ्च ॥ दिनेवर्षप्रविलग्नश्चेत्सूर्यभोग्यांशकास्ततः॥शनिभुक्तानंशकांश्च मध्यराश्यंशकैर्युतान्॥एकीकृत्य ततः प्राग्वत्कृत्वा लग्नविचारणम् ॥ रात्रौ वर्षविलग्नश्चेच्छनिभोग्यांशकांस्ततः॥सूर्यभुक्तानंशकांश्च पिण्डयेत्प्राग्वदाचरेत्॥शुद्धिः कार्या धनाद्यत्र विश्रान्तिः पितृसद्म तदिति ॥ यदुनरसिंहनन्दनेन दिवाकरेण स्वकृतवर्षपद्धतिटीकायां सैकतासंस्कारो वामनेनोक्त इत्युक्तम्॥तन्मतिभ्रमेण॥ताजिकशास्त्रावबोधरूपायान्ताजिकमुक्तावल्यामप्युक्तम्॥एवन्दिवा स्यान्निशि वैपरीत्यान्मध्ये तनावूनितमेष्यभागैः॥असंभवे लग्नगतांशयुक्तं गण्यन्धनर्क्षादखिलेषु चैवमिति ग्रहज्ञाभरणेप्युक्तम्॥दिवसे भानुभोग्यांशानिन्दुभुक्तांश्च मेलयेत्॥तदन्तरालराश्यंशयुतॉंल्लग्नंतदन्तरे॥यदि न स्यात्तदा क्षेप्या भुक्तांशा अस्यमध्यगे॥पात्या भोग्यलवाः स्वात्तु त्रिंशत्रिंशच्च शोधयेत्॥विश्राम्यति गृहे यत्र विज्ञेयम्पुण्यसद्म तदिति॥स्वात् द्वितीयभवनात्॥येषु नोक्ता पृथक् शुद्धिस्तेषु कार्या धनादित इति॥जीर्णताजिकेपि स्पष्टमुक्तमेवं जीर्णताजिककर्तृभिः प्रामाणिकैरुक्तत्वात्केशवदैवज्ञहरिभट्टगणेशदैवज्ञकृतं सैकतासंस्काररहितं सहमसाधनं न रमणीयम् ॥ अस्मद्गुरूणामेव मते युक्तिसहमालोचयामः ॥ किञ्च सैकतासंस्काररहिते कृतेपि सहमे फले

विसंवाद इत्यादि सुज्ञैर्विलोक्यमिति ॥ अथ च सैकतासंस्काररहितं सहमसाधनं केशवदैवज्ञगणेशदैवज्ञतोऽतिप्राचीनेन हरिभट्टेनैव कृतमित्यवगम्यते
यतस्तस्मात् प्राचीनैर्वामनादिभिः सैकतासंस्कार उक्तोऽस्ति अत एव ज्ञायते गणेशदैवज्ञकेशवदैवज्ञादिभिराधुनिकैर्हरिभट्टमतेनैव सैकतासंस्काररहितं
सहमसाधनं कृतमस्ति ॥ तत्र हरिभट्टस्य सहमसाधनज्ञानलेशोपि नास्ति ॥ यतस्तेन ताजिकसारे ॥ पुण्यं स्याद्दिवसेर्कतो हिमरुचिः शोध्यः
क्षपायां रविश्चंद्राल्लग्नसमन्वितमित्यादिना सकलसहमशिरोमणेः पुण्यसहमस्य साधनं समरसिंहवाक्याज्ञानाद्यथा अन्यथैवोक्तम् ॥ तथैव सैकता
संस्कारोपि नोक्तमित्यलमतिक्लिष्टेन समरसिंहवाक्यविचारविस्तरेण विरम्यते ॥ स्वगुरोर्मतविद्वेषी अलं च मतखंडने ॥ बलभद्रकृतोद्योगो
लोकेऽस्मिन्केन वार्यतामिति ॥ अथावशेषसहमानां साधनं संज्ञातंत्रे ॥ व्यत्यस्तमस्माद्गुरुविद्ययोस्तु संसाधनं पुण्यवियुक् सुरेज्यः ॥
दिवा विलोमं निशिपूर्ववत्तु यशोभिधन्तत्सहमं वदन्ति ॥ अस्मात् पुण्यसहमाद्दिनरात्रिव्यत्ययेन गुरुविद्यासहमयोः साधनं कर्तव्यं पूर्ववल्लग्न
योगः सैकताच कार्या ॥ पुण्यसद्म गुरुसद्मतस्त्यजेद् व्यत्ययो निशि सितान्वितन्तु तत् ॥ सैकतातनुवदुक्तरीतितो मित्रनाम सहमं
विदुर्बुधाः ॥ अत्र–शोध्यर्क्षशुद्धाश्रयभान्तराले सितो न चेत्सैकभमेतदुक्तम् ॥ पुण्याद्भौमं शोधयेदुक्तवत्स्यान्माहात्म्यं तं नक्तम
स्माद्विलोमम् ॥ ६ ॥ शुक्रम्मन्दादह्नि नक्तं विलोममासाख्यं स्यादुक्तवच्छेपमूह्यम् ॥ ७ ॥ अत्रोक्तवत्पुण्यवदित्यादिशब्देर्ल
ग्नयोगस्सैकता च ज्ञातव्येति ॥ सामर्थ्यमारात्तनुपं विशोध्य नक्तं विलोमन्तनुपे कुजे तु ॥ जीवाद्विशुद्धे सततम्पुरावद्भ्रातार्किहीनाद्ध
रुतस्सदोह्यः ॥ लग्नस्वामिनि भौमे दिवारात्रौ च जीवाद्विशुद्धे सामर्थ्यसहमं स्यादिति ॥ अत्र सर्वत्र शोधने कृते सति यत्र योगोनोक्तस्तत्र लग्नयोगः
कर्तव्यः ॥ उक्तञ्च यादवेन ॥ शोध्ये कृते यत्र न योग उक्तः कस्यापि तत्रैव युतं विलग्नमिति ॥ केशवपद्धतौ सर्वत्र तनुर्योज्योति यदुक्तन्त
न्मूलाभावादुपेक्ष्यम् ॥ ताजिकसारे तु ॥ सामर्थ्यन्तनुपात्त्यजेत्क्षितिसुतं घस्रेऽन्यथा रात्रिष्विति ॥ सामर्थ्यसहमे शोध्यशोधकवैपरीत्यमुक्त
न्तन्निर्मूलत्वादुपेक्ष्यम् ॥ यदाह समरसिंहः ॥ सामर्थ्यसहममह्नि च लग्नपतेर्भृगुसुतंनिशि विलोमम् ॥ अस्यार्थः ॥ लग्नाधीशाद्भौमं याव
त्सामर्थ्यसहमं भवति भौमाल्लग्नाधीशं शोधयेदित्यर्थः ॥ नन्वेतत्कुतोवगम्यत इति चेच्छृणु । अत्रैतद्व्याख्यानम्प्रत्यक्षोपलब्ध्यैव युक्तं यतो भौमाल्ल
ग्नाधिपे शोधिते सति लग्नाधीशाद्भौमपर्यन्तङ्गणना भवति ॥ लग्नाधीशाद्भौमे शोधिते सति लग्नेशाद्भौमपर्यंतं गणना भवति ॥ तद्यथा ॥ वर्षप्रवेशे

भौमो राश्यादिः ३ । १० लग्नेशश्चंद्रो राश्यादिः २ । ५ ॥ अत्र लग्नाधीशाच्चन्द्राद्भौमपर्य्यन्तङ्गणना कर्तव्या । मिथुनपञ्चांशादुपरि कर्कदशमांशावधि गणनया जातं राश्यादिः १ । ५ ॥ लग्नाधिपोनभौमः समन्न तु कुजेन लग्नपसमम् ॥ अत एव मुक्तावल्यां स्पष्टमभिहितम् ॥ सामर्थ्यसद्मादिवसे कुजतोंगनाथं चेत्सागयोर्गुरुमतस्तु सदैव जह्यादिति ॥ समरसिंहवाक्ये यस्माद्गणना तस्य शोध्यत्वं यदनधिगणना तस्य शोधकत्वं सर्वत्र ज्ञेयमित्यलम् ॥ दिने गुरोश्चंद्रमपास्य नक्तं रविक्रमादर्कविधू च देवौ ॥ रीत्योक्तवागौरव १० मर्कमार्केरपास्य वामं निशि राजतातौ १२ ॥ दिने गुरुमध्ये चंद्रमपास्य शेषेर्कयोगः कार्यः ॥ रात्रौ दिनमध्ये सूर्यमपास्य चंद्रयोगः कार्य्यः ॥ दिने रात्रौ च क्रमाच्छोध्यर्क्षशुद्धाश्रयभांतराले सूर्यश्चंद्रो वा न भवेत्तदैकराशियोगो विधेय इत्यर्थः ॥ मातेंदुतोपास्य सितं विलोमं नक्तं सुतोहर्निशमिंदुमीज्यात् १४ ॥ स्याज्जीविताख्यं गुरुमार्कितोह्नि वामं निशींदुं सममंबयांबु १६ ॥ मातृसहममेव जलसहमं ज्ञेयम् ॥ कर्मज्ञमारान्निशि वाममुक्तम् १७ रोगाख्यमिंदुं तनुतः सदैव १८ ॥ स्यान्मन्मथोलग्नपमिंदुतोह्नि वामं निशींदुं तनुपं सदार्कात् १९ ॥ यदि चंद्रोलग्नेशस्तदा रवेरिंदुमेव सदा शोधयेत् २२ ॥ कलिक्षमेस्तो गुरुतो विशुद्धे कुजे विलोमं निशि पूर्वरीत्या २० । २१ ॥ शास्त्रं दिने सौरिमपास्य जीवाद्वामं निशि ज्ञस्य युतेः पुरावत् ॥ अत्र बुधयोगः सैकता च बुधं गृहीत्वा कर्तव्येति ॥ दिवानिशं ज्ञाच्छशिनं विशोध्य बंध्वाख्य२३ मेतान्निशि वंदकं स्यात् ॥ वामं दिवैत २४ न्मृतिरष्टमर्क्षात्सदा विधुं शोध्य तथार्कियोगात् २५ ॥ रात्रौ बंधुसहममेव वंदकसहमं दिने चंद्रमध्ये बुधश्शोध्यो लग्नयोगादिपूर्ववद्वंदकसहमं स्यात् ॥ मृतिसहमे शनियोगः ॥ शनिं गृहीत्वा सैकता च कर्तव्या ॥ देशांतराख्यं नवमादि शोध्य धर्मेश्वरं संततमुक्तवत् स्यात् ॥ २ ॥ अहर्निशं वित्तपमर्थभावाद्विशोध्य पूर्वोक्तवदर्थसद्म ॥ २७ ॥ समरसिंहोऽपि ॥ अर्थसहमं द्वितीयाधिपात् ॥ द्वितीयश्च दिनरात्रम् ॥ अयमर्थः द्वितीयाधिपात द्वितीयंयावदर्थसहमम्भवति ॥ द्वितीयाधिपं द्वितीयभावाच्छोधयेदित्यर्थः ॥ केशवपद्धतौ ॥ यत्स्वेशात्स्वभं द्रव्यकमित्यर्थः ॥ सहमंशोध्यशोधकव्यत्यया दानीतन्तत्समरसिंहवाक्याज्ञानादेवेति ॥ सितादपास्यार्कमथान्यदाराह्वयं सदा प्राग्वदर्थां २८



त्यकर्म ॥ चन्द्राच्छनिं वाममथो निशायां २९ शश्वद्वणिज्यन्दिनवन्दकोत्तया ३० ॥ चंद्रमध्ये बुधस्सदा शोध्यो लग्नयोगादि पूर्ववद्वाणिज्यसहमं स्यात् ॥ शनेर्दिवार्कान्निशि चन्द्रमार्कं विशोध्य सूर्येन्दुभनाथयोगात् ॥ स्यात्कार्यसिद्धिः ३१ सततं विशोध्य मन्दे सितात्स्याच्च

विवाहसद्म ३२ ॥ दिने शनौ सूर्य्यः शोध्यस्सूर्याक्रान्तराशीश्वरो ग्रहो योज्यः॥रात्रौ शनिमध्ये चन्द्रश्शोध्यश्चन्द्राक्रान्तराशीश्वरो योज्यः॥ उभयत्रापि सैकता यथासम्भवं विधेया॥गुरोर्बुधम्प्रोह्य भवेत्प्रसूतिर्यामत्रिशीन्दुं शनितो विशोध्य ॥ षष्ठं क्षिपेदुक्तदिशासदैव सन्तापसद्मा३४ऽऽरम पास्य शुक्रात् ॥ अत्र ताजिकसारे षष्ठभावाच्छोधनमुक्तन्तत्समरसिंहवाक्याज्ञानादेवेति ज्ञेयम् ॥ यदाह समरसिंहः॥सन्तापसहममहर्निशमिन्दो मंदान्तं षष्ठतः पात्य इति ॥ अत्र यस्मात्पात्यस्स एव योज्यो ज्ञेयः॥यथा मित्रसहमे शुक्रोत्पात उक्तस्तत्र शुक्रो योज्यते तथात्र षष्ठभावो योज्य इत्यर्थः॥ अत्रारमपास्य शुक्रादित्यग्रिमेण सम्बन्धः॥श्रद्धा सदा प्रोक्तदिशाथ ३५ पुण्यं विद्याख्यतः प्रोह्य सदा पुरोक्ता ॥ प्रीत्याख्यमु ३६ क्ते बलदे ३७हसंज्ञे ३८ यशस्समे जाड्यमपास्य भौमात् ॥शनिं विलोमन्निशि चांद्रियोगाब्यापार ३९मारा‍ज्ज्ञमपास्यशश्वत् ॥४०॥ पानीयपातः शशिनं विशोध्य सौरेर्विलोमं निशि पूर्ववत्स्यात्॥४१॥मंदं कुजात्प्रोह्य रिपुर्विलोमं रात्रौ भवे ४२ द्धौमविहीनपुण्यात्॥ शौर्यं विलोमं निशि पूर्ववत्स्या४३दुपाय ईज्यं रवितो विशोध्य॥वामं निशि ४४ ज्ञं तु विशोध्य पुण्याज्ज्ञयुग्विलोमं निशि तद्दरिद्रम् ४५॥ अत्रपुण्यसहमाद्बुधं शोधयेत्पश्चाद्बुधं योजयेत ॥ एवं कृते पुण्यसहमतुल्यं दरिद्रसहमं भवति ॥ परंतु रात्रौ वैपरीत्यानिमित्तं दरिद्रसहमानयनं कृतमिति॥सूर्योच्चतः०।१०सूर्यमपास्य नक्तं चंद्रं निजोच्चा १२ द्रुरुतापुरोक्त्या४६॥दिने सूर्योच्च मध्ये सूर्यः शोध्यो रात्रौ तु चंद्रोच्चाचंद्रमपा स्योभयत्रापि लग्नयोगादिपुरोक्त्या कार्यम्॥कर्कार्द्धतः३।१५प्रोह्य शनिं स्याज्जलाध्वान्यथा निशि४७ पुण्याच्छनिं विशोध्याह्नि वामं निशि तु बन्धनम्४८॥चंद्रं सितादपास्योक्तं सदा कन्याख्यमुक्तवत्॥४९॥पुण्यादर्कमपास्यायययोगादश्वोन्यथा निशि ५०॥इति पंचाशत्सह मानि॥अथान्येषां सहमानामानयनमुक्तं यादवेन॥शुक्रं मंदेशाज्जहि सप्तमेशः शुक्रस्तदा चन्द्रपतेः सजायम् ॥ जयाभिधं ५१ सूर्यसुताच्च पुण्यं स्याद्बंधमोक्षाख्यनिशं ससौरम्॥५२द्युरात्रमीज्यं सुकृताद्विहाय भौमान्वितं दुःखगृहं प्रदिष्टम्५३॥ मंदं महीजाद्दिवसे निशायां विलोममङ्गं सहमं च सांगम् ५४ ॥भौमं हिमांशोर्व्यपहाय वस्रे क्लेशः ससूर्योह्नि विलोमरात्रौ ५५॥सूर्याच्छनिं सांगमिदं तथैव गमा गमाख्यं सहमं विचिन्त्यम् ५६॥ गुरुं सदेंदोस्तनुयुग्गजाख्ये५७॥ गुरो रविं सांगमहन्यथोह्येत्॥नक्तं विलोमं सुमहत्यगारं ५८ पुण्यं गुरोर्घात इहोक्तमन्यत्५९॥शनेः कुजश्चाष्टकमङ्गयुक्तं६०दिवा रिपुं६चान्त्य१२गृहात्सलग्नम् ॥ चतुष्पदाख्यं निशि वाममार्किं ६१

लग्नात्सलग्नं व्यसनं सदैतत् ६२॥मन्दन्धराजातद्युनिशं सलग्नं कृष्याख्यकं वै सहमं निरुक्तम् ६३॥चन्द्रमसोर्कमह्नि रात्रौ विलोमन्नतु संयुतं स्यात् ॥ दृष्टयाख्य ६४ मेतानि मुनीरितानीति ॥ अथ पितृव्याखेटकभृत्यबुद्धिसहमानयनमुक्तम्मुक्तावल्याम् ॥ सूर्यं मन्दाविशुद्धे पितृव्यभवनाविलग्नाढ्ये ६५ ॥ षष्ठे षष्ठेशोनं सव्ययमाखेटकम्भवति ६६ ॥ सौम्यं विशोध्य चन्द्राल्लग्नाढ्यो भृत्यसहमं स्यात् ६७ ॥ जीवस्सूर्यविहीनो लग्नयुतो बुद्धिसहमं स्यात् ६८ ॥ रात्रौ तद्विपरीतं ज्ञेयं सर्वत्र पूर्ववद्देयम् ॥ अथान्यसहमानामानयनमुक्तं हिल्लाजताजिके ॥ लाभं लाभेशोनं लग्नयुतं प्राप्तिसहमं स्यात् ॥ ६९ ॥ लग्नन्तुर्य्येशोनं लग्नयुतस्यान्निधेस्ससहमम् ७० ॥ धैर्यं म्माहात्म्यसहमं ७१ ज्ञानसमं ज्ञातिसहमं स्यात् ७२ ॥ मन्दश्शुक्रविहीनो लग्नयुतस्स्याद्दणं सहमम् ७३ ॥ सुतपो लग्नविहीनः पञ्चमभावान्वितोथ गर्भसहमं स्यात् ७४ ॥ चन्द्रो बुधेन हीनो लग्नयुतस्सत्यसहमं स्यात् ७५ ॥ एषां वै सहमानान्दिनरात्रिकृतो न भेदोस्ति ॥ इतिसहमानयनम् ॥ अथ सहमस्पष्टीकरणं रोमकताजिके ॥ लंकोदयस्य भुक्तांशाः स्वोदयस्य तथाहृताः ॥ सहमांशैर्द्वयोरैक्यन्दशभक्तन्दलीकृतम् ॥ सौम्यगोले धनम्प्रोक्तं याम्यगोले तदन्यथेति ॥ एतत्स्पष्टमुक्तं विश्वनाथताजिके ॥ वक्ष्ये सहमपदानां स्पष्टीकरणमुत्तमम् ॥ यस्मिन्न राशौ तु सहमन्तल्लङ्कोदयमानकम् ॥ विभजेदंशकैर्लब्धं पृथगेव निधापयेत् ॥ तथैव निजदेशोत्थमुदयं प्राप्तकञ्च यत् ॥ तत्पूर्वलब्धसंयुक्तं नख २० भक्तं लवादिकम् ॥ तद्धनं सौम्यगोलस्थे सहमे याम्यगे ऋणम् ॥ अतीव सहमं स्पष्टं जायते गणकोक्तित इति ॥ सहमे स्पष्टीकरणमुक्तं रोमकेण ॥ लंकोदयस्य भुक्तांशाः स्वोदयस्य तथा पुनः ॥ तदैक्यं दशभिर्भक्तं फलमंशादिकं भवेत् ॥ सौम्यगोले धनं प्रोक्तं याम्यगोले तदन्यथेति ॥ अनयोः प्रयोजनं जीर्णताजिके ॥ सहमेशः स्फुटदृष्ट्या पश्यति सहमं तदा बलं तस्य ॥ सहमस्यैव प्राप्तिः स्फुटः किं समेरोमकः प्राहेति॥ग्रहसहमानयनं समरसिंहटीकायां तुकज्योतिर्विद्भिरुक्तम् ग्रहमग्रस्थगृहात्संशोध्य लग्नं योज्यं ग्रहसहमं भवेत् ॥ एवं मुथहाराशिसंयोगान्मुथहासहमं च भवति ॥ उक्तञ्च मुथहाराशिसंयोगान्मुथहासहमञ्च तत् ॥ अथ भावसहमानयनमुक्तं रोमकेण ॥ वर्षेजमौदिवा कार्यं स्वामिहीनं ततुं सदा ॥ भावहीनं तथा रात्रौ लग्नं योज्यं स्फुटं भवेदिति ॥ अत्र सहमस्य सहमाधीशस्य च ग्रहाणा शुभाशुभं वा फलमविकलं स्यात्। निर्बलत्वे न्यूनं स्यादिति ज्ञेयम् ॥ अथात्र किञ्चिद्विशेष

॥२७॥

विचारः ॥ एतानि सहमानिदेवदत्तादेः शुभाशुभफलजिज्ञासार्थमविहितानि तत्र यस्य जन्मपत्रमस्ति तस्य तावत् सहमविचारो भवति ॥ अथेदानीं तदीयभ्रातुर्यदि जन्मपत्राभावस्तदा तदीयपत्नीभाग्यलाभराज्यसहमानि चिकीर्षितानि सन्ति एवं पत्न्यादीनां भ्रात्रादिसहमानि चिकीर्षितानि सन्ति कथं तेषान्निष्पत्तिरिति चेदुच्यते ॥ यस्य भावस्य शुभाशुभफलजिज्ञासाभीष्टा स एव भावो लग्नं कल्प्यस्सूर्यादिग्रहास्तु यथास्थिता एव मन्तव्यास्तत्र सूर्योनचंद्रान्वितमह्निलग्नमित्याद्युक्तप्रकारेणपुण्यादि सहमं साध्यं यतः पुनर्भ्रात्रादेः प्रभृतिसहमानयने षष्ठभावादियोगश्चिकीर्षितस्तत्र भ्रात्रादिभावाद्यत्षष्ठ्यादिभावावस्तांक्षिपेदिति ॥ अन्ये तु लग्नस्थाने भ्रात्रादिसहमं योज्यं षष्ठभावादियोगे पञ्चराशियुक्तस्तत्सहमयोगो विधेयः ॥ तदेतत्स्पष्टमुक्तं मुक्तावल्याम् ॥ अभीष्टसद्मानि शुभाशुभार्थं पित्रादिकानां विदधीत धीमान् ॥ प्रोक्तप्रकारैस्तनुवत् स्वसद्मसंयोजनेनेति गुरोर्मतं मे इति ॥ एवन्तत्तद्भावस्यापि पित्रादीनाम्मरणसहममपि साध्यम् ॥ यथा मृतिरष्टमर्क्षादिन्दुं विशोध्यार्कवदार्कियोगादिति॥ अत्र हि तत्तद्भावस्तत्तत्सहमं वा लग्नम्प्रकल्प्य तस्मात्प्राग्वद्भावानानीय चन्द्रमिदानीमानीताष्टमभावं विशोध्य शनियोगे सति मरणसहमम्पित्रादेः स्यात् ॥ एतदप्युक्तन्तत्रैव ॥ पित्रादिरिष्टसहमन्तेभ्योऽप्यष्टमभावतइति ॥ एवमेकस्मादेववर्षलग्नादनेकानि सहमानि भवन्तीत्यलम्प्रसंगेन॥ अथ सहमानाम्फलानि ॥ तत्रादौ सहमाधीशबलित्वाबलित्वलक्षणमुक्तं समरसिंहेन॥ स्वगृहोच्चत्रिंशत्रैराशिकनवांशकगतानाम् ॥ प्राक्स्थाने बलवान् यथोत्तरस्थानगो हीनः ॥ यस्य बहवोऽधिकारास्तद्बलमन्वेष्यमुदयदृष्टौ च ॥ बह्वधिकारोऽपि यदा न वीक्ष्यते लग्नमस्य न बलं स्यात् ॥ स्वल्पाधिकारयुक्तो विलग्नदर्शी बली खेटः॥ दिवसे च वर्षलग्ने दिनखेटानां निशागतोन्येषाम्॥ बलमधिकं क्रूरस्थाने च शुभैरशुभमन्यथा तु शुभमिति॥ दिनखेटाः पुंग्रहा अन्येषां स्त्रीग्रहाणामिति॥ अथ सहमस्य बलाबलमुक्तं रोमकेण ॥ स्वस्वामिवाशुभैः खेटैः सहमं युतवीक्षितम् ॥ भवेद्बलयुतं स्वामी बलवान् यस्य वा भवेत् ॥ विपर्यये निर्बलत्वमष्टमाधिपसंयुतम् ॥ क्रूरेत्थशालसहितं तत्फलं नैव हायने ॥ सहमस्वामी पतितेद्६।८।१२॥ भवनेरिष्टं करोत्यचिरात् ॥ सहमे शुभयुतदृष्टे सहमारिष्टं विनाशयतीति ॥ यादवोऽपि ॥ स्वपतिमित्रशुभेक्षितसंयुतं सहमसुद्गतनाथमुदीरितम् ॥ बलिनिजार्थकरं यदि वान्यथा क्षयकरं भवनं च विचिंतयेदिति ॥ ननु बहूनांवर्षप्रवेशे पुण्याम्बराज्यगजादिसहमानां तदधिपानां च सबलत्वं दृश्यते परंतु तत्फलं तेषां न भवतीति चेदुच्यते ॥ प्रथमं जन्मनि प्रागुक्तरीत्या सर्वाणि सहमानि साध्यानि ततः

स्वामिनो बलाबलविवेकं सहमस्यापि बलाबलविवेकं विधाय येषां सहमानां सर्वप्रकारेण नैर्बल्यं निर्णीतं तानि वर्षे फलदानासामर्थ्यात् कदाचिदपि न विचारयेत् ॥ येषां तु सर्वप्रकारेण सबलत्वं तान्येव वर्षे विचारणीयानि ॥ उक्तंच संज्ञातंत्रे ॥ आदौ जन्मनि सर्वेषां सहमानां बलाबलम् ॥ विमृश्य संभवो येषां तानि वर्षे विचारयेदिति ॥ अथ पापशुभग्रहसम्बन्धेन युतिदृष्टयोः फलं संज्ञातंत्रे ॥ पापयुक्शुभदृष्टे चेदशुभं प्राक् ततः शुभम् ॥ शुभयुक्तं पापदृष्टमादौ शुभमसत्परे ॥ अत्र वर्षस्य षण्मासाख्यं विभागद्वयं प्रकल्प्य युतिदृष्टिफलयोः कालभेदतः कल्प्यः लग्ना त्षष्ठाष्टरिःफस्थं ६ । ८ । १२ धर्मभाग्ययशोहरम् ॥ शुभस्वामिदृशाप्राप्त्ये सुखधर्मादिसंभवः ॥ सूतौ षष्ठाष्टरिःफस्थमब्दे पापहतं पुनः ॥ पुण्यं धर्मार्थसौख्यघ्नं पत्यौ दग्धे फलं तथा ॥ सहमान्यखिलानीत्थं सूतो वर्षे च चिन्तयेत् ॥ शुभयोगेक्षणात्सौख्यं पत्यु र्वीर्यानुसारतः ॥ दारिद्र्यमृतिमांद्यारिकलियुक्तो विपर्यय इति ॥ पूर्वोक्तप्रकारेण दारिद्र्यादिसहमानि तदधिपानि च चेद्बलयुक्तानि तदातत्संब न्धिदुःखं वक्तव्यं तेषान्निर्बलत्वे तत्तन्नाशादिना तत्तत्संबन्धिसुखमित्यर्थः ॥ जीर्णताजिके ॥ एवं समस्तसहमे शुभयुतदृष्टे च मुथशिलीकृते ॥ पुंसां ज्योतिर्विद्भिश्चिन्त्यं शुभाशुभं नास्य तद्विषयमिति ॥ समरसिंहः ॥ जन्मनि च वर्षलग्ने सहमान्यखिलानि वीक्ष्य फलमूह्यम् ॥ वर्षेश्वरोथ लग्नेश्वरोपि यस्मिन् स्थितस्तदाप्तफलदायीति ॥ एवं सामान्यतस्सर्वसहमफलविचारः कर्त्तव्य इति॥ अथ पुण्यादिसहमानां विशेष फलविचारो जीर्णनवीनादिनानाताजिकग्रन्थेभ्यो लिख्यते ॥ तत्रादौ पुण्यसहमविचारः ॥ यत्राब्देपुण्यसहमं शुभं सोब्दश्शुभावहः अनिष्टेऽस्मिन् शुभो नेति पुण्यमादौ विचारयेत् ॥ सबले पुण्यसहमे धर्मसिद्धिर्धनागमः ॥ शुभस्वामीक्षितयुते व्यत्यये व्यत्ययं विदुः ॥ सवीर्ये पुण्यसहमे द्रव्योपायस्तु नान्यथा ॥ अन्यान्यपि सवीर्याणि स्वनामफलवन्ति हि ॥ जन्मकालेनिष्टगेहे वर्षे क्रूरयुतं तथा ॥ पुण्यसद्म सुखार्थघ्नं तदधीशे च निर्बले १ ॥ गुरुसद्म शुभैर्युक्तं दृष्टं वा स्वामिना यदि ॥ उपदिष्टंसुखं वर्षे विपरीते विपर्ययः २ ॥ ज्ञानसद्मयुतन्दृष्टं स्वामिना च शुभग्रहैः ॥ बहुविद्यावबोधःस्याद्विद्याभावो न्यथा भवेत् ३ ॥ यशसस्सहमाधिपतौ विनाश ८ गे पापयुतदृष्टे ॥ प्रकरोति यशोनाशम्पापार्जितधनं यशोपलब्धिश्च ॥ यश सःसहमाधिपतौ शुभखेटयुते मुथशिलीकृते पुंसाम्॥ धर्मचयं धनलब्धिं करोति नियतम्महाहवे विजयम् ॥ यशसस्सहमाधिपतौ

नष्टग्रहयुजि च पापमुसरिःफे ॥ अयशस्तेजोभ्रंशो वाहनवस्त्रार्थपदनाशः ॥ यशसः सहमेष्वेवं फलं प्रकल्प्यं च रोमकः प्राह ॥
अत्रान्येषामपि सहमानां स्वामिनः फलमेतादृशमेव शुभाशुभम् ४ ॥ मित्रसद्मशुभैर्युक्तं दृष्टं वा स्वामिना यदि ॥ नानाविधं मित्रसुखं
लोके वैरं विपर्य्यये ५ ॥ माहात्म्यं शुभदृष्टं युतं तथा स्वामिना वर्षे ॥ एकांतकृत्यकरणे विचारणे वापि गोपनं न विपरीते
६ ॥ आशा शुभयुतदृष्टा षष्ठाष्टमरिःफवर्जिता शुभदा ॥ प्रकरोति वाञ्छितार्थं नानावस्त्राश्वसौख्यदं पुंसाम् ॥ तदधीशेपि फलं
स्यात्पापेक्षणयोगतो दुःखम् ७ ॥ सामर्थ्यं शुभयुग्दृष्टं स्वामिना प्रभुता भवेत् ॥ बलाधिक्यं सुखं देहे विपरीते शुभं वदेत् ८ ॥
भ्रातृसद्मशुभाक्रांतं दृष्टं वा स्वामिना यदि ॥ मिथः सौख्यं सोदराणां कलहो विपरीतके ९ ॥ भ्रातृसद्मेश्वरे नष्टेनुजनाशस्तदा
भवेत् ॥ तस्मिन्नभ्युदिते वीर्य्ययुते भ्रातुः सुखं भवेत् १० ॥ गौरवसहमं च यदा पतियुक्दृष्टं शुभग्रहैश्चापि ॥ सुखनिचयं धन
मानं राजश्रीभूषणांबरसुलब्धिम् ॥ शुभमुथशिलगं पुंसां गौरवसहमं शुभग्रहैर्दृष्टम् ॥ कीर्तिर्ज्ञानप्राप्तिर्धनसुखवाहनार्थवस्त्रकरं ज्ञेयम् ॥
गौरवसहमं च यदा ह्यसद्ग्रहैर्युक्तमुथशिलीकृतं भवति ॥ मानभ्रंशं कुर्याद्धननाशं सर्वसौख्यपदहीनम् ॥ मिश्रग्रहयुतदृष्टं गौर
वसहमं हि मिश्रमुथशिलीकृतम्॥आदौ शुभं च कुर्यादशुभंच विनिर्गमे पुंसाम्॥अत्र सर्वत्र सहमेषु मिश्रग्रहयुतौ एतदेव फलं वाच्यमित्यर्थः
१० ॥ राज्यं शुभयुतं दृष्टं स्वेशेन च मूथशीलितं सौम्यैः ॥ राज्यप्राप्तिकरं स्यात्तदधीशे पूर्वलक्षणयुते च ॥ बलहीने तदधिपतौ
क्रूरैर्युक्तं तथा दृष्टे ॥ राज्यसहमे मूसरिःफे राज्यभ्रंशश्च कोशनाशश्च ११ ॥ पितृसहमं शुभयुक्तं शुभग्रहैर्मुथशिलगं स्वपतिना च ॥
भवति च पितृतस्सौख्यं वाहनवस्त्रार्थधननिचयम् ॥ अस्तंगते बलहीने पितृसहमेशेष्टमे लग्नात् ॥ क्रूरकृतमूसरिःफे मरणं तातस्य
परदेशे ॥ चरलग्नस्थे तस्मिन् स्थिरभे गेहेऽन्यभे मार्गे ॥ मातापित्रोः सद्मनाथे नष्टे वासस्तयोर्भवेत् ॥ उदिते वीर्य्ययुक्ते वा तयो
स्सौख्यम्प्रजायते ॥ सहमं वा तदधीशश्शुभेत्थशालीयुतः क्रूरैः ॥ वर्षस्य पूर्वभागे रोगस्तातस्यचोत्तरार्द्धेशम् ॥ बलाढ्ये सहमा
धीशे नृपान्मानो यशोद्गमः १२ ॥ एवञ्च मातृसहमे फलं ज्ञेयं यथोदितम् १३ ॥ सुतसहमं शुभयुक्तं शुभग्रहैर्मुथशिलीकृतं स्वप
तिना च ॥ भवति हि सुतस्य लाभश्शुभदृग्योगादतीव शुभम् ॥ सुतसहमञ्च तदीशः पापयुतः सौम्यमुथशीलः ॥ पूर्वं सुतस्य

दुःखं पश्चात्सौख्यं भवेद्वर्षे ॥ सुतसहमम्पापयुतम्मुथशिलगं वा सुतस्य नाशस्स्यात् ॥ मिश्रग्रहैश्चयुक्तं सुतस्य सहमम्पापमूसरिःफम् ॥ प्रकरोति तत्र कष्टं सुतस्य वर्षे तथा कलहम् ॥ पुत्रसद्मेश्वरे नष्टे पुत्रनाशं विनिर्दिशेत् ॥ तास्मिन्नभ्युदिते पुत्रस्थिते पुत्राप्तिमादिशेत् सुतौ सुतेश्वरो वर्षे पुत्रसमाधिपो भवेत् दृष्टं स्वमित्रसौम्यैश्चेत्पुत्रलाभकरो मतः १४ ॥ क्रूरदृष्टे जीविताख्येसहमे निर्बलाधिपे ॥ वर्षे मूर्च्छा भवेत्पुंसां विपरीते सुखम्बहु १५ ॥ जलसद्मशुभैर्युक्तं दृष्टं वा स्वामिना यदि ॥ द्युतेराधिक्यता देहे विपरीतेल्पता मता १६ ॥ शुभयुतदृष्टे कर्मणि मुथशिलगे वा स्वपतियुतदृष्टे ॥ नूतनदेशपुराणां स्वामित्वम्भवातिनियमेन ॥ बलवति सहमाधिपतौ क्रूरायुक्ते शुभैर्दृष्टे ॥ भवति हि धनचयलाभो वाहनवस्त्रार्थभूमिलाभश्च ॥ पापाक्रांते तस्मिन् धननाशो नृपतिदण्डश्च ॥ पापैर्दृष्टे तस्मिन् पूर्वार्जितधनचयविनाशम् ॥ कर्मपतौ मूसरिःफे पापैः खेटैस्तथैव फलम् ॥ कर्मणि सहमाधिपतौ शनियुतदृष्टे च कर्मवैकल्पम् ॥ पत्यौ वक्रे दग्धे वैकल्पं भवति बुद्धिनाशश्च १७ ॥ मांद्याधिपतिः पापः पापैर्युत ईक्षितो भवति मांद्यम् ॥ निधनाधिपमुथशिलमे मांद्यान्निधनं तदाऽऽदेश्यम् ॥ मांद्याधिपश्च सौम्यः शुभयुतदृष्टो न मांद्यं स्यात् ॥ मिश्रग्रहयुतदृष्टे स्वल्पतरं मांद्यभावं च ॥ शुभमुथशिले च सहमे वाहनशस्त्रार्थलाभश्च १८ ॥ मन्मथसहमं च शुभैर्दृष्टं युक्तं तथा स्वपतिना च ॥ मन्मथविलासहर्षाधिकं भवेन्नैव विपरीते १९ ॥ भकटकसहमे क्रूराक्रूरैर्दृष्टे युते च मूथशिले ॥ भकटकयोगान्निधनं चिंतयेत्तस्य पुरुषस्य ॥ भकटकसहमे सौम्यासौम्यैर्दृष्टे तदा जयं प्रवदेत् ॥ मिश्रग्रहैश्च दृष्टे कलहक्लेशौ च सम्भवतः २० ॥ क्षमासद्म शुभैर्युक्तं दृष्टं वा स्वामिना यदि ॥ सहिष्णुता भवेद्वर्षेऽन्यथा क्रोधोधिको भवेत् २१ ॥ शास्त्रसद्मशुभैर्दृष्टं युतं स्वेशेन वा तथा ॥ वेदे स्मृतौ तत्परत्वं विपरीते विपर्ययः २२ ॥ बन्धुसद्म शुभाक्रांतं शुभदृष्टन्तथेश्वरः ॥ पितृव्यभ्रातृभिस्सौख्यं कलहश्चान्यथा भवेत् २३ ॥ वन्दकसहमं च शुभैर्युक्तं दृष्टं स्वामिना च तथा ॥ स्वातंत्र्यं स्याद्वर्षे पराश्रयत्वं च विपरीते २४ ॥ मृत्योस्सहमं क्रूरैर्दृष्टं युक्तं च निर्बलाधीशम् ॥ मृत्युविनाशं विन्द्याद्विपरीते कष्टसंपत्स्यात् २५ ॥ परदेशाख्यं सहमं स्वेशशुभैर्युक्तदृष्टं च ॥ परदेशे सुखलाभो यात्रा वा नैव विपरीते २६ ॥ शुभनाथदृष्टसहितं धनसहमं सौख्यदं द्रव्यात् ॥

अर्थसहमं शुभयुतं पापैर्दृष्टञ्च पापमूसरिःफम् ॥ पूर्वन्धनचयलाभङ्करुते मध्ये व्ययमनर्थम् ॥ क्रूरादिदृष्टिसहितं रिपुयोगाद्भवति धनहानिः ॥ पापाश्रितमथ दुःखम्प्रकरोति तथार्थविलयञ्च ॥ रिपुदृष्ट्या शत्रुभयं शुभपापानाञ्च तस्करभयम् ॥ हितदृष्ट्या निज मित्राद्धनञ्च मानो यशश्च सुखम् ॥ धनसहमम्पापयुतं सौम्यैर्दृष्टम्मुथशिलीकृतं नृणाम् ॥ पूर्वन्धनचयनाशं पश्चादर्थागमात्सुख दम् ॥ अर्थसहमञ्च दृष्टं शुभाशुभैर्मुथशिलीकृतम्पुंसाम् ॥ प्रकरोति वस्त्रलाभम्वाहनकनकौघरत्नयुतम् २७ ॥ परदारसद्मयुक्तं दृष्टं वा स्वामिशुभखेटैः ॥ परनारीगमनसुखं विपरीते तत्र दुःखं स्यात् २८ ॥ यद्यन्यकार्यसहमं शुभेन युक्तं विलोकितं वा पि ॥ सेवादितस्सुखं स्यात् परोपकारश्च नैव विपरीते २९ ॥ वणिक्सद्मशुभैर्दृष्टं युक्तं वा स्वामिना यदि ॥ सत्याली कात्सुखं वाच्यन्तस्माद्दुःखं विपर्य्यये ३० ॥ कार्य्यस्य सिद्धिसहमं शुभपतिदृष्टं युतं मुथशिलञ्च ॥ शुभकार्य्यस्य च सि द्धिस्त्वरया नूनम्महाहवे विजयः ॥ क्रूरैस्तद्विपरीतम्पराजयो भवति युद्धवादादौ ॥ मिश्रग्रहैस्तु दृष्टं युद्धविवादे जयः प्रोक्तः ३१॥ परिणयसहमं सौम्यैर्दृष्टं युक्तञ्च सौम्यमूथशिलम् ॥ तत्प्राप्तिरस्यान्मिश्रैः कष्टादथ पापमृत्युपैर्नैवम् ॥ ३२ ॥ प्रसूतिसहमं युक्तन्दृ ष्टं स्वेशशुभग्रहैः ॥ सूत्याधनादिकम्वर्षे विपरीते न सम्भवः ३३ ॥ सन्तापसहमं सौम्यैस्स्वामिना दृष्टसंयुतम् ॥ सन्तापोमानसी पीडा नाशो दुःखं विपर्य्यये ३४ ॥ श्रद्धा शुभयुतं दृष्टा स्वेशेन च धर्मबुद्धिः स्यात् ॥ विश्वासोपि च लोके विपरीते निष्फलं सर्व म् ३५ ॥ प्रीतिसद्मशुभाक्रान्तं दृष्टं वा स्वामिना यदि ॥ सन्तोषाधिकता वर्षे नैराश्यं विपरीतके ३६॥ बलसद्मयुतं सौम्यैर्दृष्टं स्व पतिना यदि ॥ सैन्यजातसुखं वर्षे विपरीते विपर्ययः ३७ ॥ देहसद्मयुतं क्रूरैर्हस्तपादादिपीडनम् ॥ शुभस्वामियुतं दृष्टं सर्वांगे दृ ढता मता ३८॥ जाड्यसद्मयुतं सौम्यैः कार्यविस्मरणं भवेत् ॥ शास्त्रविस्मरणं वापि स्वामिक्रूरैः शुभं फलम् ३९॥ व्यापारसद्मसौ म्याढ्यं दृष्टं वा स्वामिना तथा ॥ व्यापारे लाभमादेश्यं हानिः स्याद्विपरीतके ४० ॥ पानीयपातसहमं क्रूरयुतं जलभयं करोत्य ब्दे ॥ अस्तंगते तदीशे बुडनं स्यान्नैव विपरीते ४१ ॥ शत्रुसद्मयुतं क्रूरैः शत्रूक्तं निष्फलं भवेत् ॥ तन्नाशः स्यात्तदुत्पत्तिः शुभ स्वामियुतेक्षिते ४२ ॥ शौर्यसद्मशुभस्वामियुक्तं शस्त्रादिसंग्रहः ॥ शत्रुमारणयत्नादौ सिद्धिर्नैवान्यथा भवेत् ४३ ॥ उपायसहमं युक्तं

दृष्टं वा स्वामिसद्ग्रहैः ॥ सिद्धिर्वांछितकार्यस्य साधने स्यान्न चान्यथा ४४ ॥ दरिद्रसहमं क्रूरैर्युतं दृष्टं यदा तदा ॥ निर्द्धनत्वविनाशः स्याद्विपरीते दरिद्रता ४५ ॥ गुरुतासहमं दृष्टं युक्तं वा स्वामिसद्ग्रहैः ॥ स्वमण्डले महत्वं स्यादीशत्वं वा न चान्यथा ४६ ॥ जलपथसहमं दृष्टं युक्तं वा स्वामिसद्ग्रहैः सुखं पोतात् ॥ नद्यानीतजलाद्वा सुखं भवेन्नैव विपरीते ॥ ४७ ॥ बंधनाख्यसहमं युतेक्षितं स्वामिना नहि तदास्ति बंधनम् ॥ पापवीक्षितयुतेऽस्ति बंधनं पापजे मुथशिले विशेषतः ४८ ॥ भार्यासद्म शुभैर्दृष्टं युतं वा स्वामिना यदि ॥ भार्याविलाससौख्याद्यं नान्यथा गृहजं सुखम् ४९ ॥ गजाश्वोष्ट्रादिसहमं स्वामिसौम्येक्षितं युतम् ॥ तेषां चतुष्पदानाञ्च सुखं वृद्धिः क्षयोन्यथा ५० ॥ भृत्यसद्मशुभाक्रान्तं दृष्टं वा स्वामिना तथा ॥ स्वभृत्यतः सुखाधिक्यं वैमनस्यं विपर्य्यये ५१ ॥ सन्मतिसहमञ्च शुभैर्दृष्टं युक्तं स्वपतिना च ॥ सद्बुद्धिवृद्धिरेवं सामायिकी वा भवेत्स्फूर्तिः ५२ ॥ सहमं व्यसनाख्यञ्च क्रूरदृग्युति संयुतम् ॥ द्यूतवेश्यानुरागः स्याद्विपरीते न सम्भवः ॥ ५३ ॥ पितृव्याखेटसहमं शुभस्वामियुतेक्षितम् ॥ पितृव्याखेटजं सौख्यन्दुःखं स्याद्विपरीतके ५४ ॥ दृक्सहमं स्वामिशुभैर्दृष्टं युक्तञ्च दृष्टिवृद्धिः स्यात ॥ क्रूरयुते विपरीतन्तदधीशेस्तंगते भवेदान्ध्यम् ५५ ॥ ऋणसहमे विपरीतन्ताजिकविज्ञैः फलं ज्ञेयम् ॥ फलमेषाङ्कथनीयं कुलजात्यानुमानतो यथायोग्यम् ५६ ॥

अयमर्थः द्विवार्षिकबालकस्योद्वाहसन्तत्यादिसत्यपि सम्भवे न वाच्यम् । येषां कुले वाणिज्यादि न सम्भवति तत्र सत्यपि सम्भवे न वाच्यम् । तथा देशांतरगतभर्तृकानां कुलस्त्रीणाम्वन्ध्यादीनान्नपुंसकानाञ्च सत्यपि सम्भवे प्रसवसम्भवो न वाच्यः एवमन्यत्रापि ज्ञेयम् ॥ अज्ञातजन्मनः प्रश्नलग्नादपि सहमविचारः कर्तव्य इत्युक्तं संज्ञातन्त्रे ॥ प्रश्नकालेपि सहमं विचार्यं प्रष्टुरिच्छया ॥ सर्वेषामुपयोगोत्र चित्रं पृच्छन्ति यज्जनाः ॥ अथोक्तसहमफलानि वर्षप्रवेशादिवसात्कातिदिवसैः स्युरित्युक्तन्ताजिकमुक्तावल्याम् ॥ स्वेशोनितस्य सहमस्य लवाविनिघ्नास्स्वीयोदयेन खखवह्नि ३०० हृता भवन्ति ॥ तत्प्राप्तिहेतुकिसिमाख्यदिनानि यद्वा तत्तदशासु तदसम्भव एवमेव ॥ अत्र प्रकारांतरमुक्तं यादवेन ॥ सहमेश्वरयोः कार्य्यमन्तरं राशिपूर्वकम्॥ तद्युक्तोकों भवेद्यादृक् तादृक् संक्रान्तिभे फलम् ॥ एवम्पक्षत्रये कः पक्षस्साधीयानितिचेदुच्यते॥ रोमकसम्मतत्वात्पूर्वोक्त एव पक्षस्साधीयान् ॥ तथा च रोमकः ॥ सहमेश्वरसहमपयोरन्तरभागा निजोदयाभ्यस्ताः ॥ खखवह्नि ३००

भिर्विभक्ता लब्धन्तत्प्रातिकिसिमाह इति ॥ अथ सन्दिग्धार्थानां सहमानामर्थः ॥ संज्ञातंत्रे ॥ उपदेष्टा गुरुर्ज्ञानं विद्याशास्त्रं श्रुतिस्मृती ॥ मोहो जाड्यं बलं सैन्यमंगं देहो जलं द्युतिः ॥ गुरुता मण्डलेशत्वं गौरवं मानशालिता ॥ निग्रहानुग्रहविभू राजा छत्रादिचिह्नभाक् ॥ माहात्म्यं मंत्रगांभीर्यं धृतिर्बुद्ध्यादिशालिता ॥ सामर्थ्यन्देहशक्तिः स्याच्छौर्यं यत्नोरिनिग्रहे ॥ आशेच्छोक्ता मतिर्द्धर्म्या श्रद्धा बन्धः पराश्रयः ॥ पानीयपतनं वृष्टिर्जले कस्माच्च मज्जनम् ॥ आधिव्याधी तापमांद्ये सपिण्डा बन्धवः स्मृताः ॥ सत्यालीकं वणिग्वृत्तिराधानं प्रसवः स्मृतः ॥ दासत्वं परकर्मोक्तमन्यत् स्पष्टं स्वनामत इति ॥ इति श्रीमद्दैवज्ञवर्य्यपण्डितदामोदरात्मजबलभद्रविरचिते हायनरत्ने सहमाध्यायश्चतुर्थः ॥ ४ ॥ अथ वर्षेशादिविचाराध्यायः तत्र वर्षेशनिर्णयो मुन्थाज्ञानं विना न भवत्यत आदौ मुथहा निरूप्यते ॥ तत्र मुन्थाशब्दस्य व्याख्यानमाह यादवः ॥ प्रसूतिलग्नभ्रमणेन भावान्मन्थाति मुंथेति च रूढिरस्याः ॥ शुभाशुभाख्यं च फलं व्यनक्ति स्थानाश्रयादेववदामि सम्यक् ॥ १ ॥ मुन्थहोत्पत्तिप्रकारमाह समरसिंहः ॥ जन्मगतवर्षराशौ द्वादशभक्ते तदुद्धृते शेषे ॥ लग्नाद्गणिते यत्र च विश्राम्यति मुन्थहा सा स्यादिति ॥ अयमर्थः ॥ जन्मतो गतवर्षसमूहे द्वादशभक्ते शेषे जन्मलग्नाद्यत्र धनसहजादिभावे विश्रामं प्राप्नोति स एव मुथहा स्यादिति ॥ जन्मचक्रे प्रत्यब्दमेकराशिभ्रमणवशाद्यत्र राश्यादिभावं याति स भाव एव वर्षे मुथहा स्यादिति ॥ तट्टीकाकृत् तेजसिंहोपि ॥ जन्मोदयादिनिखिले खलु भावचक्रे प्रत्येकमेकभवनम्मुथहा भुनक्तीति ॥ वामनोपि ॥ जन्मलग्नजराश्यादिराशिचक्रे प्रजायते ॥ प्रत्यब्दंमुथहा राशिरिति ॥ भणित्थोपि ॥ द्विचन्द्र १२ भक्ताश्च गताब्दापिण्डाश्शेषेन्थिहा स्यादथ जन्मलग्नात् ॥ क्रमेण युक्ता मुथहा पुराणैश्शुभाशुभस्यापि निरूपणाय ॥ ताजिकतिलकेपि ॥ अशेषजन्मोदयपूर्वभावचक्रेन्थिहैकम्भवनम्भुनक्ति ॥ एतत्स्पष्टङ्गणितपूर्वकमुक्तन्ताजिकमुक्तावल्याम् ॥ सैका गताब्दा विहृताः पतङ्ग १२ स्तच्छेषभावे मुथहा जनुर्भात् ॥ भावान्तराश्यार्क १२ लवोनुमासम्भुक्तिर्भवेन्मासफलार्थमस्याः ॥ या न्मुथहायाः खलु मासभुक्तिर्गतैष्यमासान्तरवासरैस्ताम् ॥ भवेद्वातम्प्रतिवारमस्या वृद्धिर्भवेद्धस्रफलार्थमेवमिति॥प्रसूतिलग्नभ्रमणेन भावान्मन्थातीत्यवदन्यादवोप्यनुकूलः॥केचन सर्वत्र जन्मलग्नांशयोजनङ्कुर्वन्ति॥ तत्पूर्वोक्तवाक्यानां विचारेण युक्तिसहम् ॥ अतएव स्वजन्मलग्नात्प्रतिवर्षमेकैकराशिभोगान्मुथहाक्रमेणेतिपद्यार्द्धेन

श्रीमन्नीलकण्ठदैवज्ञैस्सामान्यतस्स्वमतमभिधाय स्वजन्मलग्नं रवितष्टपातशरद्युतं सामसुखेन्थिहास्यादिति ॥ श्लोकोत्तरार्द्धेन ताजिकसारकर्तृमतमभिहितम् ॥ तद्यथा—याताब्दसंघाद्रविभिर्विभक्ताच्छेषेन्थिहा स्यादथ जन्मलग्नात् ॥ जन्माङ्गभागैस्सहितेति ॥ अथवा लग्नांशयोजनं धनसहजादिभावांशयोजनोपलक्षकं यथा जन्मलग्नं सिंहो द्वादशांशामितः प्रथमवर्षे तत्रैव मुथहा पुनर्द्वैनभावः ॥ कन्यायान्दशांशमितः द्वितीयवर्षे कन्यायान्दशांशमिता मुथहा ॥ एवं सर्वत्र ज्ञेयम् ॥ अथ मुथहाविचारणप्रकारम्मुथहेशमुथहयोः शुभमशुभंवाफलमुक्तं समरसिंहेन ॥ कस्मिन् राशौ मुथहा कःखेटस्तत्र कोधिपस्तस्याः ॥ जन्मनि वर्षे तद्बलमन्वेष्यंहीनमधिकंवा ॥ मुथहाधिपतिः षष्ठाष्टमगो द्वादशगश्चतुर्थश्च ॥ अस्तमितो वक्री वा क्रूरदृशा वीक्षितो युतः क्रूरैः ॥ क्रूराश्चतुर्थसप्तमसंस्थः क्रूरेण वा विजितः॥मव्यो न भवति वर्षे वाष्टमभवनाधिपेन युग् दृष्टः॥ क्रूरदृशामरणसमं कष्टं योगद्वयेन मरणकरः ॥ यदि मुथहेशोष्टमभावाधिपेन युतः क्रूरदृष्टस्तदा मरणसमं कष्टं यदि मुथहाधिपतिः षष्ठाष्टमग इत्याद्युक्तलक्षणयुतोष्टमाधीशयुतदृष्टश्च मुथहेशो भवति तदा मरणं स्यात ॥ अत्र मुथहाधीशदशायामष्टमाधीशांतर्दशा यस्मिन्काले समायाति तत्रैव मरणं वाच्यम् ॥ ताजिकसारे ॥ मुंथाधिपो व्ययविनाशगतो विवीर्यो दुष्टग्रहस्त्वशुभवर्गगतोब्दकाले ॥ कष्टं नृणाम्परिकरोति भयं विवादं लोकैस्तथा निजजनैः कलहं नितांतम् ॥ तेजस्सिंहः ॥ मुथहाधिपतिः षष्ठाष्टमान्त्यास्तगतोस्तगः ॥ वक्रो वा निजधातूत्थव्याधिन्दद्याद्दशासु च ॥ ताजिकभूषणे ॥ भाग्ये च लाभे सहजे च केंद्रे चेद्वर्षकाले मुथहाधिनाथः करोति पुंसां विपुलं प्रतापं मैत्रीं नृपैस्सन्मतिवर्द्धनं च ॥ समरसिंहः ॥ मुथहाधिपतिः केंद्रे स्वोच्चमित्रस्वराशिगः ॥ करोति विविधार्थाप्तिं सुहृत्सौख्यं विशेषतः ॥ अयं दुष्टमुथहापवाद इति जीर्णः॥दशमे चापे पुण्ये स्वामित्वकरो भवेन्नृणां मुथहा ॥ लग्नाद्वितीयपंचमसहजे चोपक्रमाद्धनं दत्ते ॥ लग्नात्षष्ठद्वादशचतुर्थसप्ताष्टगा न वरा ॥ सविशेषन्तु तदीशे दग्धे शुभसंयुते श्रेष्ठा ॥ तनुधनसहजानाम्मध्ये यत्रास्तिमुन्थहा तस्य पूर्वोक्तजातकफलं तत्काले यच्छति शुभेशाप्रतिभावे वक्ष्यमाणमुन्थाफलं शुभेशमुन्थायां पूर्णं ज्ञेयम् ॥ क्रूरेशमुन्थायांकिञ्चिन्न्यूनं ज्ञेयमित्यर्थः ॥ अथ मुथहाया द्वादशभावफलानि ॥ तेजस्सिंहेनोक्तानि ॥ आरोग्यता कायसुखानि पुष्टिम्मनःप्रसादन्नृपतेस्सुखञ्च ॥ प्रतापवृद्धिं विजयं रिपूणां क्षयं विधत्ते मुथहा तनुस्था ॥ १ ॥ मिष्टाशनं वित्तधनादिवृद्धिमुपक्रमाच्चिन्तितकार्यसिद्धिम् ॥

स्ववर्गसन्तोषणमिष्टवर्ग्गसमागमं वित्तगतेन्थिहायाम् ॥ २ ॥ महोद्यमं कायबलं प्रवृद्धिमारम्भसिद्धिश्च सहोत्थसौख्यम् ॥ सर्वोपक
र्तृत्वमनल्पमैत्रींतृतीयगेन्था नृपतिप्रसादम् ॥ ३ ॥ रुजाम्प्रवृद्धिन्तनुपीडनञ्च निरुद्यमत्वञ्च वपुःकृशत्वम् ॥ भयं रिपूणामसुखप्रवृ
द्धिन्तुर्येन्थिहा हृद्गतगुप्तदुःखम् ॥४॥ सद्बुद्धिवृद्धिं द्विजदेवभक्तिम्प्रतापमाहात्म्ययशःप्रवृद्धिम् ॥ सुतात्तसौख्यं जनताप्रसादं वित्तागम
म्पञ्चमगेन्थिहायाम् ॥ ५ ॥ रिपूदयञ्चोरभयं कृशत्वन्निरुद्यमत्वन्नृपतेर्भयञ्च ॥ कार्यार्थहानिं व्यसनागमञ्च षष्ठेन्थिहा दुर्मतिनिष्ठवै
रम् ॥६॥ चिन्तामनोमोहमनल्परोगम्पीडाकलत्रादिनिजेष्टकष्टम् ॥ वित्तार्थनाशङ्कमतिम्भयञ्च यशोविनाशं मुथहास्तसंस्था॥७॥
दुष्टामयार्तिम्बलकान्तिनाशममित्रभीतिं व्यसनागमञ्च ॥ मोहम्मतेर्बन्धनदुःखमर्थधर्मप्रणाशन्निधनस्थितेन्था॥८॥भाग्योदयन्धर्म
धनार्थवृद्धिन्नृपोत्तमैः प्रीतिसमागमञ्च ॥ स्ववर्गसन्तोषसुखं यशश्च दत्तेन्थिहा भाग्यगतार्थसिद्धिम् ॥९॥ नृपप्रसादं स्वजनैश्च सौख्यं
महत्प्रतिष्ठां स्वजनोपकारम् ॥ धर्मार्थलाभं विमलं यशश्च वशित्वसौख्यं दशमन्थिहायाम् ॥ १० ॥ मनोरथाप्तिं शुभबुद्धयाप्तिं
सुतात्तसौख्यं स्वजनैश्च सौख्यम् ॥ धर्मार्थलाभं मनसः प्रसादं वशित्वमैश्यं मुथहायसंस्था ॥ ११ ॥ अनेकरुक्पीडनमंगकार्श्यं
निरुद्यमत्वं स्वपरैर्विवादम् ॥ धर्मार्थहानिं रिपुराजभीतिमभीष्टपीडां मुथहा व्ययस्था ॥ १२ ॥ ये राशयः क्रूरयुतास्तथा
वदंतस्थितास्तत्र गतेन्थिहा सा ॥ तद्धातुजम्पीडनमत्र भावोद्भवस्य नाशञ्च फलस्य विंद्यात् ॥ तन्वादिभावे मुथहास्ति यत्र तद्भा
वतद्वर्गभवं फलं तदा ॥ भव्याशुभं वीर्यवशेन दत्ते वीर्यं ततोस्याश्च विभोर्विचिन्तयेदिति ॥ अथ वर्षतंत्रे मुथहाया द्वादशभावफ
लानि ॥ शत्रुक्षयम्मानसतुष्टिलाभं प्रतापवृद्धिं नृपतेः प्रसादम् ॥ शरीरपुष्टिं विविधोद्यमांश्च ददाति सौख्यं मुथहा तनुस्था ॥ १ ॥
उत्साहतोर्थागमनं यशश्च स्वबंधुसन्माननृपाश्रयश्च ॥ मिष्टान्नभोगो बलपुष्टिसौख्यं स्यादर्थभावे मुथहा यदाब्दे ॥ २ ॥ पराक्रमा
द्वित्तयशःसुखानि सौंदर्यसौख्यं द्विजदेवपूजा ॥ सर्वोपकारस्ततनुपुष्टिकांती नृपाश्रयश्चेन्मुथहा तृतीया ॥ ३ ॥ शरीरपीडा रिपुभिः
स्ववर्गवैरं मनस्तापानिरुद्यमत्वे ॥ स्यान्मुंथहायां सुखभावगायां जनापवादाद्भयवृद्धिदुःखम् ॥ ४ ॥ यदीन्थिहा पंचमगा
ब्दवेशे सद्बुद्धिसौख्यात्मजवित्तलाभः ॥ प्रतापवृद्धिर्विविधा विलासा देवाद्विजार्चा नृपतेः प्रसादः ॥ ५ ॥ कृशत्वमंगेषु

रिपूदयश्च भयं रुजस्तस्करतो नृपाद्वा ॥ कार्यार्थनाशो मुथहारिगा चेद्दुर्बुद्धिवृद्धिः स्वकृतेनुतापः ॥ ६ ॥ कलत्रबंधुव्यसना
रिभीतिरुत्साहभङ्गो धनधर्मनाशः ॥ द्यूनोपगा चेन्मुथहा तनौ स्याद्रुजा मनोमोहविरुद्धचेष्टा ॥ ७ ॥ भयं रिपोस्तस्करतो
विनाशो धर्मार्थयोर्दुर्व्यसनामयाश्च ॥ मृत्युस्थिता चेन्मुथहा नराणाम्बलक्षयस्स्याद्गमनं सुदूरे ॥ ८ ॥ स्वामित्वमर्थोपगमो नृप
भ्यो धर्मोत्सवः पुत्रकलत्रसौख्यम् ॥ देवद्विजार्चा परमं यशश्च भाग्योदया भाग्यगतेन्थिहायाम् ॥ ९ ॥ नृपप्रसादं स्वजनोपकारं
सत्कर्मसिद्धिं द्विजदेवभक्तिम् ॥ यशोभिवृद्धिं विविधार्थलाभन्ददातेम्बरस्था मुथहा पदाप्तिम् ॥ १० ॥ यदीन्थिहा लाभगता विला
सौभाग्यनैरुज्यमनःप्रसादाः ॥ भवन्ति राजाश्रयतो धनानि सन्मित्रपुत्राभिमताप्तयश्च ॥ ११ ॥व्ययोधिको दुष्टजनैश्च सङ्गः रुजस्त
नौ विक्रमतोप्यर्थसिद्धिः॥धर्मार्थहानिर्मुथहा व्ययस्था यदा तदा सज्जनतोपि वैरम्॥१२॥अन्योऽपि विशेषस्तत्रैव॥क्रूरैर्दृष्टः क्षुतदशाः ४ ॥
१०।७।१ यो भावो मुथहात्र चेत्॥शुभन्तद्भावगन्नश्येदशुभश्चापि वर्द्धते॥वामनः॥स्वामिना स्वामिमित्रेण बलाढ्येन शुभेनवा॥मुथहा
संयुता दृष्टा भावोत्थशुभपोषिका॥स्वस्वामिशत्रुखेटेन क्रूरेणाल्पबलेन वा॥मुन्थहा संयुता दृष्टा निंद्या मिश्रैस्तु मिश्रदा॥अत्र मिश्रउ
त्तमाधमग्रहैर्युतदृष्टा मुन्था सबलग्रहस्य फलदा भवति॥उक्तञ्च यादवेन ॥ उत्तमाधमखगैर्विमिश्रिता निश्चयस्तु बलशालिनोग्रहादिति ॥ समरसिं
हः॥जन्मनि मदरिपुमृत्युव्ययाब्दिगाब्दे च तनुधनादिस्था ॥ क्रूरहता तद्भावक्षतिकृत्सौम्येशसंयुता शुभदा॥हिल्लाजे ताजिके ॥जन्मनि
च वर्षकालेनिष्टस्थानस्थिता हता क्रूरैः ॥ अत्यंतमशुभदात्री उभयत्र शुभातिसौख्यं स्यात् ॥ जन्मचतुर्थस्थाने वर्षे स्याद्यत्र कुत्रा
पि ॥ सौम्ययुता जनकस्य च वसुभूलाभप्रदाथ पापयुता ॥ नृपभीतिकरी मृत्यौ जन्मनि शुभसंयुता वर्षे ॥ चिरवसुलाभकरीसा पा
पयुता क्लेशकारिणी प्रोक्ता॥एवं च षष्ठभावादिषु फलमूह्यं स्वजन्मभतः॥वर्षे यस्मिन्भवेन्मुथहा सौम्येशसंयुता भवति ॥ एवं जन्म
नि यः स्याद्भावस्तद्वृद्धिसौख्यमब्दे स्यात् ॥ एवं पापैरशुभं जन्मनि यद्भावगा मुथहा ॥ पापैर्युता च दृष्टा वर्षे यो भाव एष स्यात्
तस्य च नाशो वाच्यः फलमस्याः स्वामिपाके स्यात् ॥ वर्षेप्यनिष्टगेहास्थिताथ यद्भावजनुषि क्रूरयुता ॥ तद्भावस्य च नाशक
री शुभयुता शुभदा ॥ मुथहेशो मुथहा वा जन्मनि युक्तेक्षिता सौम्यैः ॥ वर्षस्य पूर्वभागे शुभं फलं यच्छति स्वकीयं च ॥ एवं च

वर्षकाले फलं च वर्षोत्तरार्द्धे स्यात् ॥ पापस्य दृष्टियोगे अशुभं फलमेव तत्र स्यात् ॥ मुथहाफलं समस्तं धिषणाचार्येण गदित
मिति ॥ अथ मुथहाया ग्रहस्थानयुतिदृष्टिफलं वर्षतंत्रे ॥ यदीन्थिहा सूर्यगृहे युता वा सूर्येण राज्यं नृपसंगमं च ॥ दत्ते गुणानां परभागमाप्ति
स्थानांतरस्येति फलं दृशोपि ॥ परभागं परममर्यादाम् ॥ चंद्रेण युक्तेंदुगृहेऽथ दृष्टेंदुनापि वा धर्मयशोभिवृद्धिम् ॥ नैरुज्यसंतोषम
तिप्रवृद्धिं ददाति पापेक्षणतोतिदुःखम् ॥ कुजेन युक्ता कुजभे कुजेन दृष्टा च पित्तोष्णरुजं तनोति ॥ शस्त्राभिघातं रुधिरप्रकोपं
सौरेक्षिता सौरिगृहे विशेषात् ॥ समरसिंहः ॥ भौमे शनिना युक्ते सविशेषं शनिगृहेप्येवम् ॥ बुधेन शुक्रेण युतेक्षितापि तद्भेपि वा
स्त्रीमतिलाभसौख्यम् ॥ धर्मं यशश्चाप्यतुलं विधत्ते कष्टं च पापेक्षणयोगतः स्यात् ॥ समरसिंहः ॥ सितबुधपदे गुरुदृशा स्त्रीमति
लाभोऽशुभेक्षणात्कष्टम् ॥ युतेक्षिता वा गुरुणा गुरोर्भे यदीन्थिहा पुत्रकलत्रसौख्यम् ॥ ददाति हेमाम्बररत्नभोगं शुभेत्थशालादि
राज्यलाभम् ॥ शनेर्गृहे तेन युतेक्षिता वा यदीन्थिहा वातरुजं विधत्ते ॥ मानक्षयं वह्निभयन्धनस्य हानिश्च जीवेक्षणतश्शुभाप्तिम् ॥
तमोमुखे चेन्मुथहा धनाप्तिं यशस्सुखन्धर्मसमुन्नतिञ्च ॥ सितेज्ययोगेक्षणतः पदाप्तिं सुवर्णरत्नाम्बरलब्धयश्च ॥ तत्पृष्ठभागेन
शुभप्रदा स्यात्तत्पुच्छगा यद्रिपुभीतिदुःखम् ॥ पापेक्षणादर्थसुखस्य हानिश्चेज्जन्मनीत्थं गृहवित्तनाशः ॥ समरसिंहोपि ॥ तत्पुच्छे
मुथहायामापद्दुःखं विपक्षपरितापः ॥ जन्मगतायामप्येवं वित्तं परहस्तगं स्वयमदृश्यम् ॥ राहुमुखादिलक्षणं वर्षतन्त्रे ॥ भोग्या राहो
र्लवास्तस्य मुखम्पृष्ठङ्गतालवाः ॥ ततस्सप्तमभम्पुच्छं विमृश्येति फलं वदेत् ॥ गतासुक्ताः ॥ वामनोपि ॥ राहोर्मुखम्भोग्यलवा
स्तुभुक्ताः पृष्ठन्तथा सप्तमकन्तु पुच्छमिति ॥ अत्र यो ग्रहो जन्मनि यस्मिन् राशौ स्थितो वर्षेपि तद्राशिगतस्स्यात्तदा मुन्थायुतिदृष्टिफलम्
गम्भयच्छतीति यादवः ॥ तेजसिंहेन मुथहायाग्रहाणां योगफलमेवोक्तम् ॥ दत्तेर्कयुक्ता महदीशतान्नृपैस्सङ्गम्यदातिञ्च बृहद्गुणोदयम् ॥ भौमा
र्कियुक्तङ्क्षतधातुजाशुभन्दत्ते विशेषान्मुथहाशनेर्गृहे ॥ जीवान्वितार्थात्मजदारसौख्यदा युतेन्दुना रुक्क्षयरौप्यकीर्तिदा ॥ शुक्रेण
युक्तार्थकलत्रशर्मदा सौम्यान्वितास्यान्मुथहार्थबुद्धिदा ॥ कवेर्गुरोर्वा युतिदृष्टिगेन्थिहा राह्वास्यगाधर्मधनेशतावहा ॥ तत्पुच्छगा
चारिजतापदुःखदा दत्ते विशेषादशुभैर्युतेक्षिता ॥ अन्योपि विशेषस्तत्रैवोक्तः ॥ नीचस्थितेन विबलेन हतेन पापैः केन्द्रे यताप

रविणा मुथहा न भव्या ॥ जन्मन्यनिष्टगृहगाविवलाब्दकाले पापार्दितातनुगतांगविकारकर्त्री ॥ अत्र रविणेत्युपलक्षणं सर्वग्रहाणां नीचादिगत्वं शुभफलनाशकं ज्ञेयम् ॥ अन्यच्च तत्रैव ॥ जन्मोदयात् कियति वर्षविलग्नतोपि स्थानेन्थिहास्तिनिजनाथबलादियुक्ता ॥ तत्स्थानकोत्थफलदा तनुते तथारौ मांद्यं मृतिं च मृतिगारिकृता पदोंत्ये इति ॥ भौमार्कियुक्ज्वलनरुग्भयदेंथिहास्यात् क्रूरैर्हता जनकयोर्भयकृच्चतुर्थे ॥ यद्भावगाब्दजनुषोरपि निंदितेत्थं तन्नाशदाबल्युतात्र तु तत्फलास्यै इति ॥ अथोक्तानां मुथहाफलानां पाकः स्वामिदशायां भवतीत्युक्तं ताजिकभूषणे ॥ यन्मूथहायाः फलमुक्तमत्र शुभं विमिश्रं त्वशुभं विशेषात् ॥ तत्कल्पनीयं मुथहेशपाके बलानुमानान्नबुद्धिमद्भिः ॥ विशेषमाह यादवसूरिः ॥ जनुर्विलग्ने सति सायनांशे यत्रेंथिहा तत्पतिरब्दपोस्मिन् ॥ शुभोऽशुभं क्रूरखगेन भव्यं फलं वदेद्रोमकसंमतं तादिति ॥ इति मुथहाविचारः ॥ अथाज्ञातजन्मनः प्रश्नपत्रीकरणमुक्तं ताजिकभूषणे ॥ जननसमयलग्नज्ञानभावे सुधीभिर्विधिवदमलपृच्छाकाललग्नं प्रसाध्यम् ॥ शुभफलमशुभं वा कीर्तयेत्सर्वमस्मान्निगदितवदुदाराच्छास्त्रबुद्धेर्विचारात् ॥ तत्कालहोरा खचरानुसारं वर्षे विचारं विदधीत धीमान् ॥ प्रश्नार्कतुल्योग्रिमवर्षभानुर्यदा तदाब्दस्य भवेत्प्रवेशः ॥ पृच्छाविलग्नस्य विहाय राशिं विभाजयेद्दंशकलाकलापम् ॥ खबाणचंद्रै १५० रिह राशिपूर्वफलं विलग्नान्मुथहा स्थितिः स्यात् ॥ चतुर्थभावाधिपतिं विचिन्त्य स्वजन्मलग्नाधिपतिं बलार्थम् ॥ प्रश्नपत्रे मुंथानयनमुक्तम्फलप्रदीपे ॥ तत्कामं प्रश्नलग्नस्य कलिकाः खाक्षभू १५० हृताः ॥ लब्धा राश्यादिका मुन्था प्रश्नपत्रेभवेत्स्फुटा इति ॥ प्रश्नपत्रीकरणम् ॥ अथ वर्षेशविचारः ॥ उक्तञ्च योगसुधानिधौ ॥ विविधभावविभूषणविग्रहा सुनयनानयनाश्रितमन्मथा ॥ युवतिवन्न विभाति पतिं विना शरदतश्शरदाम्पतिरुच्यते ॥ अथ पञ्चाधिकारिषु त्रैराशिकेशसत्त्वादादौ त्रैराशिकेश्वर उच्यते ॥ उक्तञ्च ताजिकभूषणे ॥ वर्षस्वामिविचारार्थमेषा त्रैराशिकेश्वरा ॥ दिवारात्रिक्रमेणादौ चिन्तनीया मनीषिभिः ॥ तत्र त्रैराशिकशब्देन किमुच्यत इति चेदत्रोच्यते ॥ मेषादिद्वादशराशीनां मध्ये मेषादिचतुष्टयं प्रथमो राशिः सिंहादिचतुष्टयं द्वितीयो राशिः धनुरादिचतुष्टयं तृतीयोराशिः ॥ एवं निष्पन्नास्त्रयो राशयस्त्रैराशिकशब्दवाच्याः ॥ त्रैराशिकस्वामिन आह तेजःसिंहः ॥ भास्वत्सितार्किभृगुजाःस्युरजाच्चतुर्णां द्युस्वामिनो गुरुशशिज्ञकुजा निशेशाः ॥ सिंहात्तु ते विनिमयात्क्रमतस्सदेशाश्शन्यारमंत्रि

शशिनो धनुरादितश्च ॥ विनिमयाद्दिनरात्रिव्यत्ययात् सदेशाः दिवा रात्रौ चेशाः ॥ मणित्थोपि ॥ रविभृगुशनिशुक्रेज्येन्दुसौम्यावनेयाः शनिकुजगुरुचंद्राः स्वामिनोह्नि त्रिराशौ ॥ गुरुशशिबुधभौमादित्यदैत्येज्यसौराः सितशनिकुजदेवेज्येंदवो रात्रिलग्ने इति ॥ समरसिंहेन एते त्रैराशिकेश्वरा यवनमतेनोक्ताः ॥ स्वमतेनान्ये प्रोक्ताः तद्यथा ॥ मेषादिचतुस्त्रिराशिकेश्वरा रविसितार्किभृगवोह्नि ॥ गुरुशशिबुधभौमा निशि शनिकुजगुर्विन्दवः सततम् ॥ दिवसे दिनपसदृशौ रात्रौ रात्रिपसदृशौ च ॥ अनयोर्योबालयुक्तो ज्ञेयस्त्रैराशिनायकः खेटः ॥ ताजिकमुक्तावल्यामपि ॥ रविभृगुशनिशुक्रास्त्रिःपरावर्तनेन क्रियत इह दिवेशास्स्युः सदेशाश्च तद्वत् ॥ शनिगुरुकुजचंद्रा रात्रिनाथास्तथैवामरगुरुशशिसौम्यक्ष्मासुताश्च क्रमेणेति ॥ अनयोस्त्रैराशिकेश्वरयोर्विषयव्यवस्थोक्ता तत्रैव ॥ दिवादिनाधीशसदेशयोर्यो रात्रौ तु रात्रीशसदेशयोश्च॥त्रैराशिकेशो बलवान् ग्रहः स्यान्नैसर्गिकस्तुल्यबले विचिंत्य इति॥दिनाधीशसदृशयोरात्रीशसदृशयोर्वामध्ये यो बलवान्स ग्राह्यः॥बलसाम्ये तेजःसिंहाद्युक्तानिसर्गात्त्रैराशिकेश्वरा ज्ञेयाइति॥अथ वर्षेशार्थं पंचाधिकारिण आह समरसिंहः॥अथ वर्षैश्वर्य्यकृते पंचान्वेष्याः पुरेन्थिहाधीशाः॥ हायनलग्नस्वामी तत्त्रैराशिकपतिस्तदनु ॥ दिनवर्षे रविरिंदुर्निशि चैको जन्मलग्ननाथश्च ॥ अत्र सूर्यशब्देन सूर्याक्रांतराशीश्वरश्चंद्रशब्देन चंद्राक्रांतराशीश्वर उच्यत इति ॥ अत एव तेजस्सिंहेन स्पष्टमुक्तम् ॥ वर्षाधिपाः स्युरिह पंचरवींदुराश्योरेकाधिपोह्नि निशि च क्रमतोथिहेशः ॥ संभूतिलग्नविधुरब्दविलग्नपश्च त्रैराशिपश्च पुनरेव बलं विलोक्यम् ॥ मणित्थोपि ॥ दिवा विलग्ने रविनायकोपि रात्रौ विधोर्जन्मविलग्नपश्च ॥ वर्षप्रवेशे तनुपो मुथेशस्त्रिराशिनाथः कथितोधिकारे ॥ वामनोपि ॥ जन्मलग्नाब्दलग्नेशौ द्युनिशार्केन्दुराशिपौ ॥ त्रिराशिनायकेंथेशौ ज्ञातव्यास्ते प्रयत्नतः ॥ ताजिकभूषणेपि ॥ जन्मोदयाब्दोदयमुंथहेशा वर्षप्रवेशो दिवसेर्कभेशः ॥ निशींदुभेशस्त्रिगृहेश एते वर्षाधिपत्ये ह्यधिकारिणः स्युः ॥ मुक्तावल्यामपि ॥ मुन्थेशो वर्षलग्नेशस्तत्त्रैराशिकनायकाः ॥ दिवार्कराशिनाथश्च रात्रौ चंद्रर्क्षनायकः ॥ जन्मलग्नेश्वरश्चैवं वर्षे पञ्चाधिकारिणः ॥ एतेषु बलवाँल्लग्नं पश्येद्यः सोब्दनायकः ॥ अनीक्षमाणो लग्नं च सबलोप्यब्दपो नहि ॥ यादवोपि॥

| राशयः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दिनेशाः | सू. | शु. | श. | शु. | बु. | चं. | बु. | मं. | श | मं. | बृ. | चं. |
| रात्रीशाः | बृ. | चं. | बृ. | मं | सू. | शु. | श. | शु. | श. | मं. | बृ. | चं. |

जन्मलग्नपतिरिन्थिहाधिपोहर्निशं रविशशांकराशिपाः॥स्युस्त्रिराशिपतिरब्दलग्नपाःपंचहायनयतित्वयोग्यकाः॥ लग्नंप्रपश्येदधिवीर्यएषांवर्षेश्वरः स्यादथ दृष्ट्यभावे ॥वीर्याधिपो नाब्दविभुर्विवीर्यो लग्नं प्रपश्येदपि हायनेशः ॥ वीर्ये समानेपि तनुं प्रपश्येद्वृत्याधिपो वर्षपतिर्विधेयः॥ताजिककौस्तुभेपि ॥ एषां यः खचरस्तनुम्बहुदृशा पश्येत्स वर्षाधिपो दृक्साम्येधिबलश्च तेजसि समेनैकाधिकारी नृपः ॥ तत्साम्ये मुथहापतिस्स यदि नोपश्येत्तदा ह्यर्कपो रात्रौ चंद्रभपोत्र नो यदि विधुः प्रोक्तस्त्रिभेशस्तदा ॥ नपश्येत्स चन्द्रो न चन्द्रेत्थशालः स चेन्नैव पश्येत्तदा लग्नपः स्यात् ॥ न पश्येच्च लग्नं तदानोसमेशः समेशंविना मृत्युरेव प्रदिष्ट इति॥वामनोपि॥दृष्ट्यभावे तु संग्राह्यस्तस्मादल्पबलो ग्रहः॥समसंख्याबले जाते तदा दृष्ट्याधिकः

| राशिपु | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशिवे. | सू. | शु. | श. | शु. | सू. | शु. | श. | शु. | सू. | शु. | श. | शु. |
| रात्र्यीश्वराः | बृ. | चं. | बु. | श. | बृ. | बु. | बु. | बृ. | बृ. | चं. | बु. | मं. |
| शडेश्व. | श. | मं. | बृ. | चं. | श. | मं. | बृ. | चं. | श. | मं. | बृ. | चं. |

पतिः॥यादवः॥दृष्टौ समायां वहवोधिकारा यस्येषु वर्ग्यी शरदीश्वरस्सः॥समरसिंहोपि॥वर्षमतित्वे दृष्टे प्रचुराणा पंचवर्गिकाणाम्॥मध्ये यस्य बहवोधिकारास्तस्यैश्वर्यं हि परिकल्पमत्र दृष्टिसमत्वे जन्मलग्नपवर्षलग्नपेत्याद्युक्ताधिकारपंचकमध्ये यस्य बहवोधिकाराः स एव वर्षाधिप इत्युक्तम् ॥ ताजिकसारे॥यदाब्दलग्नं बहवो न भोगाः पश्यंतिचेत्थं च दिवौकसां हि॥मध्येधिकारा बहवोपि यस्य दृष्टिस्तदा चंद्रमसेत्थशालः ॥ केनापि सोब्दाधिपतिर्विनेत्थशालं तदा यस्तनुपः प्रदिष्टः ॥ ताजिकतिलकेप्येवमेवोक्तम् ॥ पश्येन्न लग्नं यदि पंचमध्ये को वा तदा बह्वधिकारनाथः ॥ एवं न चेत्स्याद्बहुवीर्यखेटोह्यस्याप्यभावेब्दविलग्नपेन ॥ स्यान्मूथशीलं शरदीश्वरोस्याभावे भवेन्मुंथहानाथ ईश इति ॥ अथ पंचाधिकारिणां दृष्ट्यभावे वर्षलग्नेशोब्दप इत्युक्तं मुक्तावल्याम् ॥ पंचाधिकारिणो लग्नं न पश्यंति यदा तदा ॥ वर्षलग्नेश्वरो यस्तु स एवाब्दपतिर्भवेत् ॥ एवंविधे विषये प्रकारांतरमुक्तं ताजिकभूषणे ॥ पश्येन्न काश्चिद्यदि वर्षलग्नं तल्लग्नराशिर्जननेपि येन॥ दृष्टोधिपः स्यान्न च तत्र दृष्टस्तदेथिहेशोपि विचिंतनीय इति ॥ अत्र पंचाधिकारिणां दृष्ट्यभावे यादवसूरिमतेन परिणामे मुथहेशो वर्षपः तत्तुकज्योतिर्विन्मतेन वर्षलग्नेशः ॥ गणेशदैवज्ञमतेन पंचाधिकारिमध्ये जन्मनि वर्षलग्ननिरीक्षकस्तत्र विषयव्यवस्थात्रयाणामेषां मध्ये यः ॥ स्थाना

दिग्बलेनाधिकबलस्य एव वर्षेशः ॥ ननु पूर्वं यादवेन बहुवीर्यखेटउक्तस्तत्र बहुवीर्यखेटः सामान्यपंचवर्ग्यादशाधिकबलः विशेषबलः पंचरूपाधिकबलो भवति॥नतुतन्न्यूनबलः ॥ अत्र तु त्रयाणां मध्ये यस्यैव किञ्चिद्बलाधिक्यं तस्यैव वर्षेश्वरत्वमिति सर्वं सुस्थम्॥यदेते त्रयोपि समबलास्तदा यादवगणेशदैवज्ञताजिकतिलकोक्त्या मुथहेश एव वर्षेश इति तत्वम् ॥ अथाज्ञातजन्मनः प्रश्नपत्रे वर्षेशानयनं ताजिकसारे ॥ प्रश्नांगपो वर्षपतिः प्रकल्प्यस्तुर्येश्वरो जन्मविलग्ननाथः ॥ मुन्थाधिपः प्रश्नविलग्नतश्च त्रैराशिपो घस्रपतिः पुरावदिति ॥ यदा पुनर्मुथहेशो वर्षेशो जातस्तदा विशेषमाह समरसिंहः ॥ मुथहेशो वर्षपतिः स्थाप्योस्मिन्नस्तगे फलं न शुभम् ॥ जन्मनि यस्मिन् राशौ तस्मिन्वर्षे स्थितः फलम्पूर्णम्॥ अयमर्थः॥मुथहेशो जन्मनि शुभस्थानगो वर्षेपि शुभस्थानगतस्तदा शुभं फलम्पूर्णम् ॥ उभयत्रानिष्टस्थानगस्तदा अशुभम्फलम्पूर्णम् ॥ यदा जन्मनि शुभस्थानगो वर्षे अशुभस्थानगस्तदा वर्षपूर्वार्द्धे अशुभम्फलम् ॥ वर्षोत्तरार्द्धे शुभम्फलं विपरीतेविपरीतफलं ज्ञेयमित्यर्थः ॥ अथ चन्द्राब्दपत्वे विशेषो मुक्तावल्याम् ॥ चन्द्रेश्वर्य्ये तु येनेन्दुर्भवेत्पूर्णेत्थशालकृत् ॥ स वर्षेशोभवेन्नूनं नोचेन्मुथशिलन्तदा ॥ चन्द्रराशीश्वरोब्देशः सचेदिन्दुर्भवेद्यदा ॥ तत्फलं सूर्यवद्वेद्यं श्रेष्ठमध्याधमन्तदा ॥ चन्द्रधात्वनुसारेण खिन्धिकस्येति सम्मतमिति ॥ अत्र चन्द्रश्चेत्त्रैराशिकेश्वरस्तदा चन्द्र एव वर्षेश्वरो ज्ञेयस्त्रैराशिकेश्वरत्वाभावे येन चन्द्रो मुथशिली स एव वर्षप इति ॥ विशेष उक्तस्तेजस्सिंहेन ॥ दृष्ट्यादिकैरपि समोह्निरविर्निशीन्दुस्त्रैराशिकोत्थविभुताभृदसौ न चेत्स्यात् ॥ स्याद्वा तदा मुथशिली च रगेन येन स्थाप्यः पतिस्सतमृतेशशिराशिपस्तु॥ग्रहज्ञाभरणेपि ॥ त्रैराशिकेशो न भवेद्यदीन्दुश्चंद्रेश्वरत्वेपि खगेन येन ॥ मुख्याख्ययोगोस्य स ईश उक्तो विना तमिंदोर्गृहपोब्दपः स्यादिति ॥ मुख्ययोगो इत्थशालाख्यः ॥ अत्र विशेषान्तरमाह वैद्यनाथः ॥ त्र्यंशे चन्द्रेत्थशाला तु योब्दपस्तस्य जन्मनि॥कम्बूलमिन्दुना जन्मरात्रौ वर्षे तदोत्तमामिति॥अत्र पञ्चाधिकारिणाम्मध्ये पञ्चवर्ग्यां बलयुतोपि लग्नदृशदुरिःफोक्तनिर्बलग्रहलक्षणयुतो वर्षेशो न भवतीत्यपि विशेषो ध्येयः॥अत्र वर्षेशसामान्यफलमाह समरसिंहः॥सपदि शुभयुतदृष्टः पष्ठाष्टांत्य ६।८।१२ गृहवर्जितोभ्युदितः॥सर्वाधिकारयुक्तो जन्मनि वर्षे च सदृशबलः ॥ तदशेषमुत्तमं स्यात्स्वामित्वं वपुषि बलमतीव सुखम् ॥ महतः स्थानस्याप्ति तदनु च जन्मग्रहानुसाराच्च ॥ अयमर्थः ॥ वर्षेशो जन्मनि सत्स्थानगतः शुभदृष्टश्चेद्भवति । तदा शुभं वर्षं

फलमविकलं स्यात् । दुष्टस्थानादिगतः पापदृष्टश्चेद्भवति तदा दुष्टफलमविकलं वाच्यम् ॥ मिश्रत्वे मिश्रफलम् ॥ ताजिकसारे ॥ केंद्रत्रिको
णायगतेशनाथे सौम्ये च रम्यः सकलस्तदाब्दः ॥ षडष्टरिःफोपगते विवीर्ये कष्टप्रदोसौ गदितो मुनींद्रैः ॥ मुंथाब्दमुयन्त्र ८
समांगनाथा नास्तंगता वीर्ययुतास्तमब्दम् ॥ रम्यं सुखार्थागमनं विलासं कुर्वंति ते व्यस्तमतो विलोमम् ॥ अथ समाधिपतौ
त्रिषडायगे खलखगे सकलं सबले शुभम् ॥ व्ययविनाशगतेऽब्दपतौ तदा न च शुभं गदितं शुनिभिर्नृणामिति ॥ अथ विशेषमाह
तेजःसिंहः ॥ मैत्रे सौम्ये स्वे च वर्गे स्थितोथत्यक्त्वाष्टांत्याद्विद् ८ । १२ । ६ जयी चोत्तरस्थः ॥ मित्रैस्सौम्यैर्दृष्टयुक्तोर्कमुक्तो
दत्तेब्देशः सर्वशर्माखिलाब्दम् ॥ वक्रेथवाब्दजनुपोरपि सर्वकार्यं स्यात् प्रात्यलोम्याविफलत्वधनक्षयाद्यम् ॥ अस्ते हतेपि च
तदेव तथैव लग्ननाथेथिहाधिपदशापतयो विचिंत्याः ॥ जन्माब्दयोरपि हतेब्ददशाधिपेरिरंध्रांत्यगेब्दमसदन्यशुभेपि योगे ॥ अब्द
दशाधिपो वर्षेशः ॥ वर्षेश्वरोमुथशिली च भवेद्यदैको नाथेन तत्सदनधातुफलं ददाति ॥ रम्यं विरूपमपि वीर्यवशात्तयोस्तद्भावेक्षणाच्च
परिचिंत्य धिया विधेयम् ॥ अत्र वर्षेशो वर्षलग्नाधीशेन मुथशिलं करोति वर्षलग्नाधीशो वा बलवान् तदा भूपात्सुखं वाच्यम् ॥ तथा वर्षेशो
वर्षलग्नपेन सहेशराफयोगं करोति लग्नपो वा हीनबलस्तदा भूपादसुखं वाच्यम् ॥ उक्तं च जीर्णताजिके॥वर्षलग्नेश्वरो भूपः सेनानीश्चंद्रसूर्यपः॥
मुथहाधिपतिर्मन्त्री पुरेशो जन्मलग्नपः ॥ रससस्यादिधातूनान्तनोस्त्रैराशिकेश्वरः ॥ बलवद्भिरिमैस्तेभ्यः शुभं हीने तदन्यथेति ॥
तेजस्सिंहः ॥ संभूतिलग्नमुथहाब्दविलग्ननाथा वर्षेशतद्विहितसौम्यखगेत्थशालः ॥ स्वस्थानगाश्शुभदृशश्च सुहृत्स्वसौम्यवर्गे गता
ह्युदयिनः फलदास्सदा स्युः ॥ पूर्णम्फलम्पूर्णबलेब्दनाथे मध्ये च मध्यमिह हीनबले च हीनम् ॥ नष्टं समस्तमपि नष्टबले सदा
स्याद्दौस्थ्यादिरुक्प्रभृति नेष्ट फलं विनष्टे ॥ सूर्य्येब्दपेब्दजनुषोश्च शनौ च दग्धे वक्रेऽबले विफलता निखिलक्रियाणाम् ॥ यद्भाव
पस्तनुभुजाब्दभुजाथवेत्थशाली बलीभवति तत्र फलन्तदुत्थम् ॥ केन्द्रेधिकारसहितोब्दपतिर्विपापः स्वीयाधिकारफलदस्सबलो
दितश्च ॥ यद्भावगो जनुषि सौम्यखगोब्दकेपि तद्भावगो यदि तदा खलु तत्फलं स्यात् ॥ जन्माब्दलग्नमुथहाब्दभुजोदिताश्च वीर्या
धिका यदि तदाब्दमतीवरम्यमिति ॥ अथ वर्षेशादीनामवस्थाहिल्लाजेनोक्ताः ॥ दीप्तो दीनस्स्वस्थो मुदितस्सुतः प्रपीडितश्चैव ॥ परिही

यमानवीर्यः प्रवृद्धवीर्यो विवीर्यश्च॥स्वोच्चस्थः किलदीप्तो दैन्यं पुनरेति नीचभवनस्थः॥स्वस्थस्स्वभवनसंस्थो मित्रक्षेत्राश्रितो मुदितः॥रिपुराशिगतः सुप्तो ग्रहाभिभूतःप्रपीडितश्चैव ॥रविकिरणमुषितदीप्तिः खचरः परिहीयमानवीर्यश्च ॥ स्वनीचमतिक्रान्तस्वोच्चाभिमुखः प्रवृद्धवीर्यः स्यात् ॥ स्वांशकसंस्थः सौम्यैर्विलोक्यमानोधिवीर्यश्च ॥ दीप्ते दीप्तिरनुत्तमा नरपतेर्हीने च दैन्यागमस्स्वस्थे स्वात्ममनस्स्थितश्च भवति श्रीकीर्तिसौख्यादिकम् ॥ आमोदो मुदिते यथेप्सितफलप्राप्तिः प्रसुते विपत् पीडा शत्रुकृता प्रपीडिततनौ मौढ्यङ्गतेर्थक्षयः ॥ भवति प्रवृद्धवीर्ये गजतुरगसुवर्णरत्नाप्तिः ॥ तद्वदधिवीर्ययुक्ते मुक्तित्रयसंपदादिकं राज्ञः॥वर्षेशो लग्नपतिः स्वदशाधीशश्च यद्गुणोपेतः ॥ तद्गुणफलं च वर्षे निर्देश्यं स्वतमुत्तममतमेतदिति॥अथ वर्षेशमूसरिःफफलं वर्षतंत्रे॥शुभेशराफे शुभमस्ति किंचिदनिष्टमेवाशुभमूसरिःफे इति ॥ विशेषांतरमाह समरसिंहः ॥ यो भवति वर्षनाथस्तस्मिन् वर्षे दशाधिपः ॥ सद्गृहगं पश्येदथ चक्रे क्वास्ते जन्मनि च वर्षे च ॥ क्रूरः शुभोथवायं केन च दृष्टो युतः स कस्य गृहे ॥ केंद्रे तन्निकटे वा समगतिरुदितः किमधिकारः ॥ इत्थमवलोकितेस्मिन् शुभयुतदृष्टे विलग्नगगनस्थे ॥ सर्वं शुभं स्वपरिकरमध्ये प्राधान्यमाविशति ॥ मध्यबलेऽस्मिन् मध्यं हीने हीनं गृहर्क्षभावेन ॥ सम्यग्विलोक्य जातकद्वायनलग्ने फलं निगदेत् ॥वर्षस्वामिनि मंदे पतिते विबले निराशता दौस्थे इति ॥ वर्षतंत्रे ॥ यो जन्मनि फलं दातुं विभुर्मूसरिफोस्य चेत् ॥ अब्दलग्नाब्दपभवस्तास्मिन्नब्दे न तत्फलम् ॥ व्यत्यासे फलमादेश्यमित्थशाले विशेषतः ॥ नोभयं चेत्तदाप्यस्ति जन्माश्रयमिति स्फुटम् ॥ अयमर्थः ॥ जन्मनि पंचमेशो गुरुः पंचमभावं पश्यति तत्र वा भवति तेन पुत्रप्राप्तिकरो जातः पुनर्यस्मिन् वर्षे गुरुदशा तस्मिन्नेव वर्षे वर्षलग्नेशवर्षेशयोरीत्थशालयोगो गुरुणा सह जातस्तदा तस्मिन्वर्षे पुत्रप्राप्तिर्न वाच्या व्यत्यासे दीप्तांशातिक्रमेण मूसरिःफयोगाभावे इत्थशाले वा फलं वाच्यं दृष्टप्रभावत्वात् ॥ इत्थशालमूसरिःफयोगयोरभावे जन्मकालाश्रयेण पुत्रप्राप्तिर्वाच्या इति ॥ हद्दे यादृशि यः खेट आयत्तेत्र च यो ग्रहः ॥ जन्मन्यब्दे च तादृक्त्वे तदात्मफलदस्त्वसौ ॥ अयमर्थः जन्मनि यो ग्रहः स्वीयहद्दादियुतस्तस्मिन् यो ग्रहो मुथशिलेन तेजो निक्षिपति तस्मिन् ग्रहे वर्षकालेपि तादृशि सति कोर्थः ॥ वर्षे तस्यामेव हद्दायां स एव ग्रहो मुथशिलं करोति तदा स वर्षे क्रूरसौम्यबलाबलादिविवेकेनात्मशुभाशुभफलदो भवति॥ अत्रोदाहरणमुक्तं तत्रैव ॥ अब्देश्वरो गुरुर्मित्र

हद्दे मित्रदृशा शशी॥महोत्राघादमूदृक् स वर्षेब्दस्तेन शोभनः॥अयमर्थः॥जन्मनि मित्रहद्दास्थगुरुणा स्नेहदृष्ट्या चन्द्र इत्थशालं करोति॥ वर्षेपि वर्षेश्वरो गुरुरमूदृक् नाम एतादृशः कोर्थः मित्रहद्दास्थः स्नेहदृष्ट्या चंद्रेत्थशालवांश्च तेन गुरोश्शुभफलाधिक्याद्वर्षः शोभन इत्यर्थः अन्योपि विशेष स्तत्रैव ॥ जन्माब्दशाङ्गपतीोथिहापतिसमानाथाद्यवीकारवान् सूर्यो नष्टबलस्तनगक्षितिलयं कुर्यान्निरुत्साहताम् ॥ नीचत्वमितमृशात् तोप्यभिमतश्चन्द्रेक्षिकार्यक्षयो दारिद्र्यस्य परामर्शो गृहकलिर्व्याध्यादिभीतिस्तदा ॥ भौमे बलत्वम्भीरुत्वम्भुने शोष्यराशयो ॥ जीवे धर्मक्षयः कष्टफलाज्जीवनभृतयः ॥ शुक्रे विलाससौख्यानां नाशः स्त्रीभिस्समं कलिः ॥ सौरे भृत्यजनाद्दुःखं रुजो वातसकोपतः ॥ इति नष्टबलः पंचवर्ग्या विंशोपकन्यूनबल इति ॥ अथ सूर्यादिग्रहाणां पारण्येनो नमध्यमाधिकबलयुतस्याब्दपस्य फलं वर्ण्यते ॥ तत्रादौ रविफलम् ॥ सूर्योब्दपे बलिनि राज्यसुखात्मजार्थलाभः कुलोचितभवः परिवारसौख्यम् ॥ पुष्टं यशो गृहसुखं चिरनष्टप्रतिष्ठा शत्रुर्विनश्यति फलं जनिखेटयुक्त्या ॥ अयमर्थः॥ वर्षेशो जन्मनि सन् स्थानगः स्वोच्चादिगः शुभग्रहावलोकितो भवति तदा शुभफलमपि विफलं स्यात् ॥ वैपरीत्येऽशुभफलं मिश्रत्वे मिश्रफलमिति ॥ मध्ये रवौ फलमिदं निखिलं तु मध्यं स्वल्पं सुखं स्वजनतोपि विवादमाहुः ॥ स्थानच्युतिर्न च सुखं कृशतापि देहे भीतिर्नृपान्मुथशिलो न शुभेन चेत्स्यात् ॥ अत्र रवेः शुभग्रहेण साकं मुथशिलयोगे अशुभफलाल्पता ज्ञेयेति ॥ सूर्ये बलेन रहितेब्दपतौ विदेशयानं धनक्षयशुचोरिभयं च तंद्रा ॥ लोकापवादभयमुग्ररुजोतिदुःखं मित्रादितोपि न सुखं सुतमित्रभीतिः ॥ तेजःसिंहोपि ॥ सत्रोच्चमुख्यपरिपूर्णबलेब्दपेर्के प्राप्तिः कुलोचितपदस्य पुनः प्रतिष्ठा ॥ स्थानच्युतो भवति भूधनकीर्तिमित्रलाभारिवर्गविजयादिवपुः सुखानि ॥ हद्दाद्रेष्काणकनवांशकमुख्यमध्यवीर्ये तु मध्यमखिलं फलमादिमं स्यात् ॥ नीचादिना गतबले च विनष्टदग्धे रोगाधिदूरगतिदौस्थ्यजनापवादाः ॥ ताजिकसारे ॥ अब्दाधिपेम्बरमणौ सबले प्रतिष्ठाप्राप्तिस्ततो निजकुले बहुराज्यलाभः ॥ स्थानांतराद्भवति भूधनकीर्तिमित्रलाभस्तथा बहुसुखानि रिपोर्विनाशः ॥ पुत्रान्नृपात्स्वजनतोल्पसुखं नराणां स्यान्मध्यवीर्यसहिते द्युमणौ दशायाम् ॥ कुर्याद्दरित्वमपि रोगभयं विवादं लोकैस्तथा नृपजनैः सह चापि वैरम् ॥ नष्टे रवौ भवति वैरिजनाद्विरोधो रोगागमो नृपज

नाद्भयमुग्रकं स्यात् ॥ द्रव्यक्षयश्च सुततः कलहं स्वमित्राद्दग्धे च दूरगतिदौस्थ्यजनापवादः ॥ अत्र विशेषफलं हायनसुंदरे ॥ वर्षे स्वामी यदा सूर्यस्तद्वर्षे संस्थितोपि वा ॥ पूर्णं पश्यति वा वर्षे तदा राजभयं भवेत् ॥ ज्वरः पित्तभ्रमो वा स्याद्धानिर्वा पूर्वदेशतः ॥ धातुव्यापारतो हानिर्विरोधो मित्रबाधवैः ॥ वियोगो देशगमनं यदि चंद्रमसा युतः ॥ पूर्णदृष्टेथ शत्रूणां जेता द्रविणलाभदः ॥ वायव्योत्तरतो लब्धिस्सौख्यन्तेजोविवर्द्धनम् ॥ सद्योगता मित्रसङ्गः स्त्रीसंगात्सुखमाप्नुयात् ॥ श्वेतक्रयाणकाल्लाभो विशेषात्कलपत्तनम् ॥ शयनाशनवस्त्रादिमिष्टान्नस्वादुभोजनम् ॥ सौधोत्सङ्गे स्थितो गीतनृत्यलोलुपमानसः ॥ स्त्रीवत्सलस्सुगन्धाढ्यो रात्रौ सुखितचेतसः ॥ श्लेष्मकोपः क्वचित्काले वान्तिर्वा भवति ध्रुवम् ॥ स्याद्भौमयुतदृष्टोर्को भवेद्विद्रुमलाभकृत् ॥ स्वर्णलाभो यशोलाभः शत्रूणाञ्च पराजयः ॥ राजसन्मानमधिकमतिपित्तप्रकोपता ॥ स्याद्दक्षिणदिशो लाभो वह्नितस्करसाध्वसम् ॥ मृषाभयम्भवेद्भौमयुतदृष्टे च भास्करे ॥ सूर्यो बुधेन सहितोथ निरीक्षितोपि स्यात्तद्गुणः किमपि कच्छुरता कदाचित् ॥ शत्रोर्भयम्भवति किञ्चन कर्ममिष्टैर्विद्वेषिता स्वसदनेपि रुजार्दितस्स्यात् ॥ यदि गुरुयुतदृष्टः स्यादसौ चण्डरोचिस्सृजति वितथमार्गम्पापमार्गं विहाय ॥ गुरुपदमथ तीर्थम्प्राप्नुयात्पुत्रसौख्यं नृपकुलबहुमान्यस्त्रीप्रसङ्गेन लाभः ॥ सज्जनैस्सह संबन्धश्शत्रुनाशो धनागमः ॥ चित्तोत्साहो मनोभीष्टं कार्यसिद्धिर्भवेन्नृणाम् ॥ रविरथ सितदृष्टस्संयुतो वा ज्वरार्तिर्भवति शिरसि पीडा छर्दिरप्येति वान्तिम् ॥ भवति जठरशूलं कासपित्तातिसारै रिपुभयमथ चिन्ता स्थानतो भ्रंशमेति ॥ स्यादाग्नेयदिशो लाभः पित्तकामलदद्रुता ॥ गलः शुष्यति शुक्रेण रविर्दृष्टो युतो यदि ॥ शनिना यदि संयुतोथ दृष्टस्तपनस्तापकरो नृणां रिपुभ्यः ॥ धनहानिरुदासतोद्यमात्स्याद्विफलः क्लेशकरस्सुहृद्वियोगात् ॥ स्याच्चतुष्पदतो हानिरसितादपि मानवात् ॥ असौख्यम्पश्चिमाशातो हानिश्शनियुतो रविः ॥ राहुणाप्यथ युतो यदि दृष्टो घर्मदीधितिरमंगलकर्ता ॥ नीचकर्मनिरतो धनहीनः पीडितो भवति दुर्व्यसनेन ॥ पुत्रमित्रसहजादिपीडितः कष्टमेति सुखहानिरद्भुता ॥ आधिमेति ननु नैर्ऋतेर्दिशो मूत्रकृच्छ्रसदृशा रुजार्दितः ॥ वियोगो बंधुवर्गेभ्यो विकाराः पीडयंति च ॥ नीचसंगरतो नित्यं राहुणा

संयुतो रविः ॥ केतुना युतदृष्टोर्कः स्थानभ्रंशमवाप्नुयात् ॥ बंधुमित्रकृता पीडा सौदास्यं शोचनीयता ॥ हानिर्नीचजनात्कृष्णमनु
जेनार्दितो भवेत् ॥ सर्वाशुभफलं दत्ते केतुना संयुतो रविः ॥ इति सूर्यफलम् ॥ अथ चंद्रफलं वर्षतंत्रे ॥ वीर्यान्विते शशिनि वि
त्तकलत्रपुत्रमित्रालयादिविविधं सुखमाहुरार्याः ॥ स्रग्गंधमौक्तिकदुकूलसुखानुभूतिर्लाभः कुलोचितपदस्य नृपैः सखित्वम् ॥ वर्षा
धिपे शशिनि मध्यबले फलानि मध्यान्यमूनि रिपुता सुतमित्रवर्गे ॥ स्थानांतरे गतिरथो कृशता शरीरे श्लेष्मोद्भवश्च यदि पाप
कृतेसराफः ॥ नष्टेब्दपे शशिनि शीतकफादिरोगश्चौरादिभिः स्वजनविग्रहमप्युशंति ॥ दूरे गतिस्सुतकलत्रसुखाप्तयश्च स्यान्मृ
त्युतुल्यमतिहीनबले शशांके ॥ तेजःसिंहेन चंद्रफलं सूर्यवदुक्तम् ॥ ताजिकसारेपि ॥ वर्षाधिपे हिमरुचौ परिपूर्णवीर्ये वित्तागमो
नृपजनान्नृपतेर्द्धनाप्तिः ॥ सौख्यानि चात्र विविधानि कलत्रपुत्रश्वेतादिवस्तुवशतः प्रकरोति लाभम् ॥ मध्यो विधुर्नृपजनान्नृ
पतेर्विरोधं वित्तक्षयं स्वजनतः प्रकरोति वैरम् ॥ स्त्रीवर्गतः सततमल्पसुखं कृशत्वं वैराग्यदुःखजननं भयमुग्रकं च ॥ नष्टे भयं भव
तिवातकफादिपीडा वैरोदयो निजकुले नृपतेर्विरोधः ॥ स्थानांतरादरिभयं त्वसुखं च दग्धे मृत्योर्भयं तनुभृतां हिमगौ स्त्रपाके ॥
विशेषफलं हायनसुन्दरे ॥ वर्षपो यदि चन्द्रः स्यात्पूर्णम्पश्यति वर्षपम् ॥ वर्षे वा स्त्रीप्रसङ्गेन मनुजस्सुखमेधते ॥ कन्याप्रसूतिस्सित
वस्तुतः स्याल्लाभस्तथालंकरणञ्च किञ्चित् ॥ स्वप्ने युवत्यासह सङ्गमेति लाभस्तु वायव्यादिशोपि भूयात् ॥ भुंक्तेतिमधुरं वस्त्राभरण
प्राप्तिरुत्तमा ॥ किञ्चित्स्वपक्षतो वैरं लाभः स्यादुत्तरादिशः ॥ चन्द्रः सूर्येण युतो दृष्टो वा राजसङ्गमं कुरुते ॥ क्षामो ज्वराच्छि
रार्त्तो गात्रे शूलादिविस्फोटः॥किञ्चिदपि वाञ्छितस्सुरनृपवर्गाद्भीतिमेति साशंकम्॥क्रुद्धत्यनुसमयमयं यदि चंद्रः सूर्य्ययुतदृष्टः॥भौमेन
सहितश्चन्द्रो दृष्टो वाग्नेश्चतुष्पदात् ॥ भयं विधत्ते याम्यातो हानिः काचिज्ज्वरव्यथा ॥ भयञ्च स्खलनाद्भूमौ शस्त्राद्रुधिरविक्रिया ॥
कासं विस्फोटकादिस्युर्भयं हानिरथालिपका ॥ क्षामं वपुर्नृपाद्दण्डभयं स्यादिन्द्रलुप्तकम् ॥ मङ्गलेन युतो दृष्टो मङ्गलं कुरुते
शशी ॥ बुधेन युतदृष्टो वा रोहिणीरमणस्तदा स्वर्णादिधातुसंबन्धाल्लाभो वाहनवाजिनाम् ॥ मेधावृद्धिर्भोगयुतस्सदानंदमयस्सुखी॥
समक्षं रिपुपक्षःस्स्याल्लिखने पठने भयम्॥स्यादुत्तरादिशो लाभस्स्वजनात्सुखमाप्नुयात् ॥ सदा शुभफलंदत्ते बुधेन सहितश्शशी ॥

यदि गुरुयुतदृष्टस्तारकेशो धनाप्तिं सुखवसनसुतस्त्रीसद्विलासं विधत्ते ॥ भवति विशदविद्यालब्धिरैन्द्रीदिशातः किमपि च धनदाशातो महालाभमेति॥ वाहनाप्तिर्भवेद्वोक्ता भगवत्यतिवत्सलः ॥ लोके मानयशः स्वर्णलाभस्तूत्तमसङ्गतः ॥ शुक्रेण युतदृष्टश्चेत्तारकाधिपतिर्यदा ॥ मुक्ताभरणभूषादिलाभश्श्वेतक्रयाणकात् ॥ जगदीश्वरपदभक्तो लाभो जलजातवस्तुनः सततम् ॥ सुखमेति स्त्रीसंगात्कन्यासूतिः स्त्रिया लाभः ॥ स्यादाग्नेयदिशः सौख्यं लाभः पुण्यविवर्द्धनम् ॥ गीतादुत्तमवस्त्रादिशयनासनभोजनम् ॥ स्यादुत्तमगतिप्राप्तिः सविलासस्सहोदितः॥सुगन्धन्दिव्यवस्त्रादि लभते मनुजोत्तमः॥ सौरिणा युतदृष्टेन्दुरुद्वेगङ्कुरुते भयम् ॥ नृपशत्रुभयाच्छोकं हानिं वा वारुणीदिशः ॥ काणात्पङ्गोरल्पलाभो धननाशो भयं भवेत् ॥ गात्रे रक्तविकारेण दद्रुर्नीचेन सङ्गतिः ॥ कुटुम्बमध्ये कलहो दुर्बुद्धेर्व्यसनागमः ॥ कृशता गात्रसंकोचः शनियुक्तो शशी यदि ॥ स्यात्तमोयुतदृष्टेंदुस्तदा शत्रुरुजार्दितः॥भयोद्वेगौ शरीरे च रक्तवातस्य विक्रिया॥मित्रबन्धुजनैः क्लेशो हानिर्नैर्ऋत्यभागतः ॥ वातज्वरजलादिभ्यो भयं मूर्च्छाभ्रमार्तयः॥ सङ्गः पापात्मभिर्द्धर्मनाशो वातार्तिरुद्धता ॥ सर्वकार्यकृता चिंता सन्तोषो राहुयुक् शशी ॥ केतुना युतदृष्टश्चेदनुष्णगुरुदासकृत् ॥ पीडा च मित्रबन्धूनां रक्तवातस्यविक्रिया ॥ मूर्च्छाज्वरामयः सर्पजलभीः कलहोऽसकृत् ॥ स्यान्नैर्ऋतीदिशा हानिः केतुना सहितश्शशी ॥ इति चन्द्रफलम् ॥ अथ भौमफलं वर्षतंत्रे ॥ भौमेब्दपे बलिनि कीर्तिजयोरिनाशः सेनापतित्वरणनायकताप्रतिष्ठा ॥ लाभः कुलोचितधनस्य नमस्यतापि लोकेषु मित्रसुतवित्तकलत्रसौख्यम् ॥ मध्येब्दपेऽवनिसुते रुधिरस्रुतिश्च कोपोधिकोभकटशस्त्रहतिक्षतानि ॥ स्वामित्वमात्मगणतो बलगौरवञ्च मध्यं सुखं निखिलमुक्तफलं विचिंत्यम् ॥ हीनेब्दपेसृजिभयं रिपुतस्कराद्वेलौकापवादभयमात्मधिया विनाशः ॥ कार्यस्य विष्वगतिरोगभयं विदेशयानं क्षयोपनयतो गुरुदृष्ट्यभावे॥कार्यस्य विष्वक् सर्वतः कार्यस्य नाशः गुरुदृष्ट्यभावे सर्वं फलं स्यात्तदृष्टिसत्त्वे फलं सर्वशुभोदयं स्यादिति ॥ तेजःसिंहः ॥ वीर्यान्वितेऽवनिसुतेऽवनिपाद्विपोर्वा सेनापतेस्सधनता जनसेव्यता च॥मध्यन्तु मध्यमबले तु विदेशयानञ्चौर्यास्त्ररुक् ज्वलनभीत्यपकीर्तिघाताः॥ताजिकसारेपि ॥ वीर्यान्वितक्षितिसुते नृपतेर्धनाप्तिं सेनापते रिपुगणाद्विजयो रणाच्च॥सेवा धनं भवति मार्गवशाच्च सौख्यं स्त्रीसंगतश्च विविधं सुखमत्र विद्यात् ॥

मध्ये कुजे भवति लोहभयं विवादं कुर्यात् कृशत्वमखिलाङ्गमनल्परोगम् ॥ वैरोदयन्नृपजनेषु धनक्षयश्च चौराद्भयं स्वजनतो ह्यथवा नराणाम् ॥ चौरास्त्ररुग् ज्वलनभीत्यपकीर्तिलाभः पित्तोदयं भवति पादमुखाक्षिदेशे ॥ दुष्टाद्भयन्निजजनाद्धनधान्यनाशः स्त्री पुत्रमित्रकलहं क्षितिजे विनष्टे ॥ विशेषफलं हायनसुन्दरे ॥ वर्षपो यदि माहेयो वर्षेण युतदृग् यदि ॥ पित्तरक्तप्रकोपोन्यदार दुर्व्यसने रतः ॥ दुर्नये निरतो मित्रबान्धवैर्विग्रहोधिकः ॥ तस्कराग्निभयन्धत्ते यदि भौमोस्ति वर्षपः ॥ रविणा युतदृष्टोथ वक्रो नृपकुलाद्धनम् ॥ सत्सन्मानमवाप्नोति कुर्यात्साहसमुत्तमम् ॥ रणे जयः प्राग्दिशातः सुखलाभो ज्वरस्तनौ ॥ पश्चिमस्यामला भोल्पभयं वित्तभयं क्वचित् ॥ चन्द्रेण युतदृष्टश्चेदारो नानार्थलाभदः ॥ सुहृदः सुखमुत्साहम' ाति मणिमौक्तिकान् ॥ पुत्रभ्रातृप्र वृद्धिस्स्यात्सुखं युवतिसङ्गमात् ॥ वस्त्राभरणभोज्यानां लाभो वायव्यदिग्भवः ॥ चान्द्रिणा रणिजो युतदृष्टो वैरिवर्गपरितापमु पैति ॥ राजवह्निनृपभीर्धनहानिः पीडनं पशुगणस्य नितांतम् ॥ रक्तपित्तप्रकोपस्स्याच्चिंताधनददिग्भवा ॥ भौमेन युतदृष्टश्चेद्गु धोऽशुभफलप्रदः॥ भौमो गुरुयुतो दृष्टस्तीर्थप्राप्तिः सदैवगुरुभक्तः ॥ पुण्यमतिः शुभसंगतिमासाद्य शुभार्थसंचयं कुरुते ॥ विख्यात स्सर्वजजने कुलमध्ये सुप्रतिष्ठितो भवति ॥ ईशानदिशो लाभः स्वल्पभयं किमपि सुखमसौ धत्ते ॥ भौमस्सितयुतदृष्टः शत्रुक्रो धाद्भयं वपुर्दुःखम् ॥ सोपद्रवता हानिर्गमनन्दुर्व्यसनमग्निदिग्भीतिः ॥ शनियुतदृष्टे भौमे दुःखमुदासो विचिन्तिता दौस्थ्यम् ॥ हानिर्दुर्व्यसनत्वं दुर्बुद्धिर्नीचसङ्गमतः ॥ उद्वेगः स्यात्पश्चिमाशाभवो हानिः सितेतरात् ॥ मनुजाद्वा यशो हानिर्भौमश्चेच्छनि दृग्युतः ॥ राहुणा युतदृष्टश्चेल्लोहितांगो भयङ्करः ॥ चौराग्निनृपशत्रूणां भीतिदः सुखहानिकृत् ॥ शरीरे वातकष्टं स्याद्भयंनैर्ऋत्य दिग्भवम् ॥ तथोद्वेगो हानिरर्थे नीचसंगादधर्मकृत् ॥ स्यात्केतुयुतदृष्टश्चेत् कुजो विद्युद्भयङ्करः ॥ स्यान्मेघगर्जनाद्भीतिश्चोदगग्नि रिपोरपि॥शरीरेपि रुजातंकौ क्लेशश्चौरादहेर्भयम् ॥ शोकचिंतापरो भूपाद्भौमः केतुदृशा युतः ॥ इति भौमफलम् ॥ अथ बुधफलं वर्षत न्त्रे॥सौम्येब्दपे बलवति प्रतिवादलेख्यसच्छास्त्रसद्व्यवहृतौ विजयोर्थलाभः ॥ ज्ञानं कलागणितवैद्यभवं गुरुत्वं राजाश्रयेण नृपता नृपमंत्रिता वा ॥ अब्दाधिपे शशिसुते खलु मध्यवीर्ये स्यान्मध्यमं निखिलमेतदथाध्वयानम् ॥ वाणिज्यवर्तनमथात्मजमित्रसौख्यं

सौम्येत्थशालवशतोपरथा न किंचित् ॥ निखिलं प्राक्पद्योक्तंवाणिज्येन वर्तनं जीवनं अत्र बुधे सौम्येत्थशाले प्रागुक्तं शुभफलमविकलं स्याद न्यथा न अत्र मार्गगताबुधमवानिति वाक्ये ॥ समरसिंहवाक्येन ॥ पूर्णबले बुधे वर्षेशे अध्ययनमपि वाच्यम् ॥ सौम्येऽब्दपेऽधमबले बलबुद्धि हानिर्द्धर्मक्षयः परिभवो निजवाक्यदोषात् ॥ निक्षेपतो विपदतीव मृषैव साक्ष्यं हानिः परव्यवहृतेस्सुतवित्तमित्रे ॥ तेजःसिंहः ॥ सेवार्थमानलिखनादिफलं सुतादितोषो बुधेधिकबले व्यवसायलाभः ॥ मध्ये तु मध्यमखिलं निजवाक्यदोषात्सर्वार्थहा निरधमेनृतसाक्षिता च ॥ ताजिकसारेपि ॥ वर्षाधिपे शशिसुते सबलेतिसौख्यं सेवाधनं लिखनतः पठनादिलाभः ॥ स्त्रीमित्र सौख्यमतुलं सुततश्च नूनं वाणिज्यतो धनसमागमनं विलासः ॥ मध्यश्च सोमतनयो निजवाक्यदोपात्सर्वार्थहानिमशुभम्प्रकरो त्यनर्थम् ॥ स्त्रीमित्रपुत्रकलहं सुखमत्र चाल्पं वैरोदयंनृपजनात्स्वजनाच्च तद्वत् ॥ नष्टे बुधे नृपभयोनृतसाक्षिता च क्लेशोदयस्स्व जनतोर्थलयो विवादः ॥ चौराद्भयं हृदि गलामयकृत्स्वनेत्रपीडा भवेन्निखिलमध्यमकञ्च दग्धे ॥ विशेषफलं हायनसुन्दरे ॥ वर्षलग्नप तिश्चांद्रिर्युतदृष्टोथ सत्फलम् ॥ दत्ते दिव्याङ्गनाभोगन्धिषणामातिसुन्दरीम् ॥ स्वधर्मनिरतः पुत्रमित्रवर्गेण संयुतः ॥ सुहृदां सुतक न्यादिवृद्धिस्सानन्दमोदितः ॥ कदाचित्स्याद्वपुःपीडा लाभस्स्यादुत्तरादिशः ॥ सर्वशास्त्रप्रवीणश्च वर्षपस्स्याद्बुधो यदि ॥ रोहिणी नन्दनस्सूर्ययुतदृष्टो यदा भवेत् ॥ वपुषि ज्वरबाधा स्यात्किञ्चिच्छत्रुभयम्भवेत् ॥ तथा राजकुलात्प्रीतिस्स्त्रीपुत्रस्वजनोत्सवः ॥ तीर्थ प्राप्तिस्तथालाभः पूर्वाशातः फलोद्गमः ॥ सुवर्णाश्वप्रवालादिपशुवर्गादिसञ्चयः ॥ अकस्मादपि लब्धिस्स्याद्बुधयुक्तो रविर्यदा ॥ स्या च्चंद्रयुतदृष्टस्तुसौम्योसौम्यकरस्स्मृतः ॥ कासदद्रुकृतां पीडां करोति गजसाध्वसम् ॥ पामाखार्जूरगं भंगः पशूनां वधपीडनम् ॥ शत्रोर्भयं विनाशो वा चिन्तावायव्यदिग्भवा॥सुहृद्भ्योपि विरोधःस्यान्महिषादिरणाद्भयम्॥स्याद्भौमयुतदृष्टश्चेच्चन्द्रजो दीर्घरोगकृत्॥ कुलेवा दुष्कलंकोथस्थानभ्रंशमवाप्नुयात् ॥ आधिर्वा दस्युभिः क्लेशः संभ्रमः परसंगमात् ॥ शिरोर्तिः स्वर्णकाराद्वा हानिर्याम्यदि शो भवेत् ॥ गुरुणायुक्तदृक्सौम्यो भयव्याधिनिकृंतनः ॥ शत्रुनाशो नरेंद्रादिसन्मानो महनीयता ॥ सत्यवक्ता पुण्यतीर्थे लाभो धर्मव्रते दृढः॥ईशानदिग्भवं सौख्यं प्रीतिलाभम्प्रयच्छति॥भार्गवेण युतो दृष्टो ज्ञो विज्ञानकलापकृत्॥बहुस्त्रीसंगमाद्रामारतिप्रीतिप्रमोददः॥

स्त्रीसंगमात्सुखप्राप्तिर्लाभः श्वेतक्रयाणकात् ॥ स्वदेवगुरुभक्तः स्याद्वदान्यो नाटकप्रियः॥सुखमांगल्यमुत्साहं कुरुते मित्रसंगमम् ॥ राजचिह्नपदप्राप्तिश्शत्रुनाशं करोति च ॥ स्यादाग्नेयदिशः सौख्यं बुधः शुक्रेण दृष्टयुक्॥ सौरिणा युतदृष्टस्तु धर्मभ्रंशकरो बुधः ॥ संभोगसमये कार्श्यं शीतलत्वं प्रजायते ॥ प्रमेहादिविकारो वा नीचसंगाद्धनव्ययः ॥ क्लीबे प्रीतिर्गृहे क्लेशो वेश्यादासीषु वा रतिः बुधस्तमोदृष्टयुतः साहसं कुरुतेधिकम् ॥ सर्वकार्यकृतोत्साहः किञ्चिच्चित्तभ्रमोपि च ॥ स्यान्नैर्ऋतिदिशोलाभो वातोद्भूतरुजार्दितः ॥ किञ्चिन्नीचजनात्सौख्यं लभते मनुजः सदा ॥ रोहिणीतनयः केतुयुतदृष्टो यदा भवेत् ॥ शोकहानिकरो नीचसङ्गमादसुखंकरः ॥ इति बुधफलम् ॥ अथ गुरुफलं वर्षतन्त्रे ॥ जीवेब्दपे बलयुते परिवारसौख्यन्धर्मो गुणग्रहितृता धनकीर्तिपुत्राः ॥ विश्वास्यता जगति सन्मतिविक्रमाप्तिर्लाभो निधेर्नृपतिगौरवमप्यरिघ्नम् ॥ १ ॥ गुणेषु शौर्यादिषु आग्रहं वा अब्दाधिपे सुरगुरौ किल मध्यवीर्ये ॥ स्यान्मध्यमम्फलमिदन्नृपसङ्गमश्च विज्ञानशास्त्रपरता न शुभेसराफे ॥ दारिद्र्यमर्थविलयश्च कलत्रपीडा जीवेब्दपेधमबले नृपतोर्थ सौख्यम् ॥ हानिस्त्यजन्ति सुतमित्रजनास्सभार्या लोकापवादभयमाकुलतापि कष्टम् ॥ वृत्तिस्तनौ कफरुजोरिपुभिः कलिश्च ॥ तेजस्सिंहः ॥ धर्मार्थकीर्तिशुभबुद्ध्यरिसन्धिलोकविश्वास्यता सुतसुखानि सवीर्यजीवे ॥ मध्ये च मध्यमिदमेव फलञ्च निन्द्यं धर्मार्थहान्यशुभबन्धुविरोधबाधा ॥ ताजिकसारेपि ॥ देवार्चको बलयुतः प्रमदाविलासं कुर्यात्स्वमित्रसुततो विविधञ्च सौख्यम् ॥ वित्तागमो नृपतितो विलयं रिपूणां विश्वास्यता सकललोकजनेषु शश्वत् ॥ नाकेश्वरस्य सचिवः खलु मध्यवीर्यो लोके विरोधमशुभम्प्रकरोति भूपात् ॥ वैरोदयः स्वजनतश्च परैर्विवादं कुर्यात्कृशत्वमपि चौरभयं सदासौ ॥ निन्द्ये गुरौ खलु भवेन्नृपतोर्थनाशो धर्मार्थहान्यसुखबन्धुविरोधपीडा ॥ पादाक्षिगुल्फजठरे जघनेषु नृणां वातार्तिकृत्त्वरिभयन्तनुसंक्षयस्स्यात् ॥ विशेषफलं हायनसुन्दरे ॥ वर्षपो यदि गुरुर्युतदृष्टो दीप्तिकृद्दिशति धान्यधनाप्तिम् ॥ राजमान्यसुतसंततिकर्त्ता काञ्चनादिमणिमौक्तिकलाभः ॥ पुण्यतीर्थादिगमनं लाभस्तूत्तरादिग्भवः ॥ वस्त्ररत्नविभूषादिलब्धिरुत्तममानुषात्॥रविणा युतदृष्टश्चेज्जीवश्शत्रुनिकृन्तनः॥ख्यातो राजकुले तेजोवृद्धिर्बाधा ज्वरार्दितः ॥ शिरोर्तिर्वा वातपीडा किंचिद्राजभयम्भवेत् ॥ स्वल्पः पूर्वदिशो लाभः सहजातकलहप्रियः ॥ विधुयुतदृष्टो जीवो लल

नाभोगं करोति सुखवृद्धिम् ॥ शुभशयनाशनभोजनसुतसुहृदां प्राप्तिमधिपसन्मानम् ॥ सितवस्तुतस्तु लाभः स्त्रियोपि वरभोगसौख्यमधिकतरम् ॥ वायव्यदिशो लाभः कासादिव्यसनमपि किंचित् ॥ भौमेन युतदृष्टश्चेद्धनसौख्यपदप्रदः ॥ रणे जयो रक्तवस्तुव्यापाराल्लब्धिरुत्तमा ॥ यशो नीरोगता सौख्यं स्याद्दक्षिणदिशस्तथा ॥ नृपाद्भयं ज्वरं किञ्चिद्भौमदृष्टे युते गुरौ ॥ बुधेन युतदृष्टश्चेदतिसौख्यपदप्रदः ॥ वित्तलाभः सुखं दुःखं साम्यं वा शत्रुमित्रयोः ॥ लाभव्ययौ समौ देवगुरुपादरतः सदा ॥ लब्धिरुत्तरतः किंचिच्छिरोर्तिर्बुद्धिवैभवम् ॥ सितयुतदृष्टे जीवे धनहानिः क्लेशता रिपोः काचित् ॥ बुद्धिभ्रंशो युवतीवियोजितो हानिरपिच रुद्रदिशः ॥ शनियुतदृष्टे धिषणे म्लेच्छभयं स्थानमानहानिः स्यात् ॥ द्यूतक्रीडामधुपानेकेलिरतिश्चाधमैःसंगः ॥ विस्फोटकादिविकृतिर्वाताधिक्यं जलाद्भयं करभात् ॥ हानिर्मनुजात्कृष्णात् कृपाणकादपि च महिषभयम् ॥ चिन्ता वरुणदिग्भूता धनहानिरपि ध्रुवम् ॥ महिषात्करभात्प्राप्तिः काचिच्छनियुते गुरौ ॥ सैंहिकेयेन युतदृग्गुरुर्बन्धनकष्टदः ॥ बंधुपीडा वपुर्वातपीडितं ज्वरयक्ष्मणा ॥ सुहृद्वियोगादुद्वेगो मनस्तापो मृतेर्भयम् ॥ कुले शोकः पदभ्रंशो जलसर्पभयं भवेत ॥ स्यादाग्नेयादिशो भीतिर्भवेदसितमानुषात् ॥ हानिर्वा युतदृष्टश्चेद्गुरू राहुग्रहेण च ॥ स्यात्केतुयुतदृष्टश्चेत्सुरराजपुरोहितः ॥ पुत्रभ्रात्रादिसंबन्धात्स्थानभ्रंशमवाप्नुयात ॥ देशभ्रमणशीलः स्याच्चिन्ता वै नीचसङ्गमात ॥ अशुभं कुरुते केतुयुतदृष्टो गुरुर्यदि ॥

इति गुरुफलम् ॥ अथ शुक्रफलं वर्षतन्त्रे ॥ शुक्रेब्दपे बलिनि नीरुजता विलासस्सद्वस्त्ररत्नमधुरासनभोगतोषाः ॥ क्षेमप्रतापविजया वनिताविलासो हास्यं नृपाश्रयवशेन धनं सुखञ्च ॥ १ ॥ अब्दाधिपे भृगुसुते खलु मध्यवीर्ये स्यान्मध्यमं निखिलमेतदथाल्पवृत्तिः ॥ गुप्तञ्च दुःखमखिलं सुनिबद्धवृत्तिः पापारिवीक्षितयुते विपदोर्थनाशः ॥ २ ॥ शुक्रेब्दपेऽधमबले मनसोतितापो लोकोपहासविपदो निजवृत्तिनाशः ॥ द्वेषः कलत्रसुतमित्रजनेषु कष्टादन्नाशनञ्च विफलक्रियता न सौख्यम् ॥ ३ ॥ तेजःसिंहः ॥ शुक्रे कलत्रवरवस्त्रवरान्नपाननीरोगताखिलविलाससुखं सवीर्य्ये ॥ मध्येच मध्यमखिलं खलु गुप्तदुःखंर्निर्वीर्येखिलासुखपदञ्जनहास्यता च ॥ ४ ॥ ताजिकसारेपि ॥ दैत्येश्वरस्य सचिवः परिपूर्णवीर्यो दद्याद्वरान्नवनितासुविलासहास्यम् ॥ आरोग्यताखिलविलाससुखञ्च

लाभं क्षेमं प्रतापविजयं सुमतिश्च दद्यात्॥१॥मध्यो नृपात्स्वजनतस्त्वरितो विरोधः श्लेष्मार्तिकृच्च सुतदारभयञ्च कष्टम् ॥ कार्यार्थहा
निमपि मोहरुजोदयञ्च कुर्यान्न सौख्यमिह स्वीयदशाप्रवेशे ॥ २ ॥ निंद्ये सितेखिलजनात्कलहो नितान्तं स्याद्वैरितो नृपजनाद
सुखञ्च तत्र ॥ सौख्यार्थहानिरतिशोकभयं विवादो दग्धे स्वपाकविषये मतिसंक्षयश्च ॥ विशेषफलं हायनसुन्दरे ॥ वर्षाधिपो यदि भृ
गोस्तनयोथ दृष्टो युक्तश्च वाहनविभूषणतादिलाभः ॥ कन्याप्रसूतिरथ धर्मपदार्थसार्थबुद्धिप्रकाशकुशलत्वमुपैति जन्तुः ॥१॥ भृगुत
नयो रविणा युतदृष्टः कष्टं वै जाठरं कुरुते ॥ ज्वरबाधा च शिरोर्तिर्नेत्रे वा दुष्टतो रिपोर्भीतिः ॥ २ ॥ वपुषि दुर्बलता नृपतेर्भयं
दहनभीतिरमित्रकृतः कलिः ॥ किमपि कासमुपैति धनव्ययं भवति हायनके रवियुक्कविः ॥ ३ ॥ चंद्रेण युतदृष्टश्चेद्रागंत्रः पशुना
शकृत् ॥ नखदंतशिरोबाधा याति कामलपित्तताम् ॥ स्त्रियाः सौख्यमवाप्नोति काचिद्वातोद्भवा व्यथा ॥ भौमेन युतदृष्टश्चेदुशना
धनलाभकृत् ॥ पित्तप्रकोपतः पीडा नृपाल्लाभोथ याम्यतः ॥ चतुष्पदाद्भयं किंचिदनुत्साहो विचित्रता ॥ सितस्तु ज्ञेन दृष्टो वा
युतोथ धनलाभकृत् ॥ बुद्धिप्रकाशो मित्रादिपुत्रोत्साहोधिमानिता ॥ चातुरीचतुरो लाभः स्यादुदीचीदिशो ध्रुवम् ॥ गुरौ शुक्रेण
युक्ते स्यात्सुशीलदृढधर्मभाक् ॥ पुण्यतीर्थपदप्राप्तिर्ज्ञातिबंधुजनात्सुखम् ॥ कुटुंबिभिः प्रकुपितो रौद्रीदिग्जनितं सुखम् ॥ लभते
धनसन्मानं लाभः स्यात्सितवस्तुतः ॥ सितस्तु शनिना युक्तो वीक्षितो लाभदायकः ॥ पुरग्रामाधिपत्यं च मित्रप्रीतिविवर्द्धनम् ॥
वारुणीदिग्भवो लाभः कृष्णवस्तुकृतो भवेत् ॥ ज्ञातिसंबंधतः सौख्यं दौर्बल्यं वातविक्रिया ॥ शीतज्वरो जलाद्भीतिर्महि
षादश्वतो भयम्॥स्त्रिया जरंत्या सभागः सितश्चेच्छनिदृष्टयुक् ॥ सितस्तमोयुतो धत्ते नखदंतशिरोव्यथाम् ॥ पित्तकामलतः क्षीणः
शरीरे क्लेशमश्नुते ॥ नैर्ऋत्यान्नीचतो हानिर्जलसर्पभयं भवेत् ॥शीतज्वरोपद्रवः स्यान्नीचसंगाद्धनक्षयः ॥ सितस्तु केतुयुग्दृष्टः सु
हृद्भिर्बान्धवैः कलिः ॥ पुत्रादिकष्टं शत्रुभ्यो विग्रहो नीचसंगमात् ॥ हानिर्भयं नैर्ऋतेस्स्याद्रक्तवातप्रकोपतः ॥ विस्फोटकाजल
भयं फणिभीर्भ्रममूर्च्छना ॥ कृष्णवस्तुमनुष्याद्वा हानिश्च दशनाद्भयम् ॥ सितः केतुयुतो दृष्टो शुभन्दत्ते सदाफलम् ॥ इति शुक्रफ
लम् ॥ अथ शनिफलं वर्षतन्त्रे ॥ मन्देब्दपे बलिनि नूतनभूमिवेश्मक्षेत्रार्तिरर्थनिचयो यवनावनीशात् ॥ आरामनिर्मितजलाश्रयं

सौख्यमङ्गपुष्टिः कुलोचितपदाप्तिगणाग्रणीत्वम् ॥१॥ अब्दाधिपे रविसुते खलु मध्यवीर्ये मध्यं फलं निखिलमन्नभुजिस्तु कष्टात् ॥ दासोष्ट्रमाहिषकुधान्यरतेस्तु लाभः पापम्फलम्भवति पापयुगीक्षणेन ॥ २ ॥ मन्दे बलेन रहितेऽब्दपतौ क्रियाणां वन्ध्यत्वमर्थविलयो विपदोरिभीतिः ॥ स्त्रीपुत्रमित्रजनवैरकदन्नभुक्तिः सौम्येत्थशालयुजि सौख्यमपीषदाहुः ॥ ३ ॥ तेजःसिंहः ॥ मन्दो जलाश्रयमहीरुहरोपकर्मवाणिज्यकृष्यवनिलब्धिपयोधिवीर्ये ॥ मध्ये तु मध्यमधमे तु सुहृद्विपत्तिः कष्टक्रियाविफलतानिलरुग्विकारः ॥ १ ॥ ताजिकसारेपि ॥ मन्देब्दपेधिकबले वनपर्वताच्च लाभो महान्भवति भूरुहरोपणाच्च ॥ वाणिज्यकृष्यपतितोर्थसमागमश्च श्लेष्मावलान्निजजनात्सुखमत्र नूनम् ॥ १ ॥ मध्यश्शनिस्स्वजनराजजनाद्विरोधं वातार्तिकृज्जठरपृष्टगले च नेत्रे ॥ दारिद्र्यदुःखपरिपीडनमत्र कुर्याद्वैराग्यमर्थपरिहानिसुहृद्विरोधम् ॥ २ ॥ निन्द्येत्र सर्वमधमन्तु सुहृद्विपत्तिः कष्टं क्रियाविफलतानिलरुग्विकाराः ॥ कार्यार्थहानिरथ पुत्रसुहृद्विपत्तिर्दग्धेऽर्कजे भवति दंष्ट्रिभयश्च मृत्युः ॥ ३ ॥ विशेषफलं हायनसुन्दरे ॥ वर्षपो यदि शनिर्भयमार्तिपीडनं वपुषि वातविकारात् ॥ पुत्रदारकलहो मतिहानिर्ग्रामयानमतिभीर्जलदेशात् ॥ नीचप्रसङ्गताश्चिन्ता हानिः पश्चिमदेशतः ॥ कृष्टं कृपाणकात्सौरिर्दत्ते वर्षे शुभंफलम् ॥ रवियुतदृष्टस्सौरिस्सुतयुवतीक्लेशदस्तनौ कष्टम् ॥ मित्रविरोधोद्वेगः प्रवासिता वपुषि दुर्बलता॥ज्वरबाधा च शिरोर्तिर्नृपवह्निभयं तथा च धनहानिः॥स्यादुद्वेगो मनुजैर्महद्भिरपि रवियुतेमन्दे ॥ शशियुतदृष्टःसौरिर्युवतीमरणांतकष्टदो भवति ॥ कुक्षिव्यथां विधत्ते धननाशं किञ्चिदाप्नोति॥बंधुवियोगक्लेशो मित्रैः कष्टं कफवातसंभवविकारः॥हानिर्वायव्यदिशः स्वल्पसुखं वैश्यतोल्पभयम् ॥ भौमेन युतदृष्टः सौरिः स्थानभ्रंशोग्नितस्करादिभयम् ॥ सह बांधवैर्विरोधो हानिर्दक्षिणादिशातः॥न विश्वास्यौ स्वर्णकारक्षत्रियौ धनहानिदौ॥ रक्तवातविकारः स्यात्सौरिणा मंगले युते ॥ बुधयुतदृष्टो मंदः करोति सौभाग्यसौख्यधनलाभम् ॥ हेमादिलाभः सुतजन्म अमात्यतोथोत्तरादिशो लाभः ॥ गुरुयुतदृष्टस्तु शनिर्गुरुदेवरतः सुवर्णधनलब्धिः ॥ सौख्यं तीर्थप्राप्तिर्महापदाप्तिश्च रौद्रीतः॥स्त्रीसंगात्सुखवृद्धिः स्याद्ग्रामभूम्यर्थलाभकृत् ॥ लाभः पूर्वदिशो भूयान् सौरिर्गुरुयुतेक्षितः॥सितयुतदृष्टः क्रोडः सुहृत्प्रसंगः सहोदरैर्मैत्री ॥ लाभस्सुतादिसंमतिराग्नेयदिशो भवेल्लाभः ॥ प्रीतिरंगनयात्यंतं माननीयः कुले भवेत् ॥ कफा

दिविक्रिया सौरिः शुक्रेण युतवीक्षितः ॥ राहुणा युतदृष्टोर्किः सन्निपातरुजाकरः ॥ मूर्च्छा च शीतलारोगः पित्तकोपोंगपीडनम् ॥ जलसर्पारिभीर्नीचसंबंधाद्धनसंक्षयः ॥ नैर्ऋत्याद्धनहानिः स्यादतीसारभ्रमादपि ॥ स्यात् केतुयुतदृष्टस्तु शनिर्वातप्रकोपकृत् ॥ विग्रहस्सुतमित्राद्यैः क्लेशः पुण्यपरिक्षयः ॥ पापवृद्धिरथोद्वेगो नीचाद्दुःखमवाप्नुयात् ॥ आग्नेयनैर्ऋतीदेशाद्धनहानिः क्वचिद्भवेत् ॥ इति शनिफलम् ॥ ताजिकसारे स्थानविशेषेणापि वर्षेशफलमुक्तम् ॥ सद्मोच्चगेषु परिपूर्णफलं खगेषु हद्दात्रिभागकनवांशगतेषु मध्यम् ॥ नीचारिवेश्मसहितेषु च दग्धवीर्यमस्तादिगेषु खलु नष्टफलं समन्तात् ॥ अत्रायं विशेषः यदि वर्षेशेन क्रूरग्रह इत्थशालं करोति तदा वर्षेशस्यशुभफलम्पूर्णमशुभफलं न्यूनं ज्ञेयम् ॥ यदि वर्षेशेन क्रूरग्रह ईसराफं करोति तदा अशुभम्पूर्णं फलं शुभफलं न्यूनं ज्ञेयमिति ॥ इति वर्षेशफलं समाप्तम् ॥ अथारिष्टविचारः ॥ तत्रोक्तं वक्ष्यमाणं वा वर्षफलं सत्यरिष्टे वृथा मरिष्यमाणत्वात्तस्येत्याह मणित्थः ॥ वृथाफलं हायनजञ्च यस्मान्न जीवनं हायनरिष्टयोगात् ॥ रिष्टानि तस्मात्प्रथमम्प्रवक्ष्ये पूर्वैर्विधिज्ञैः कथितानि यानि ॥ मुक्तावल्यामपि ॥ रिष्टानि चेद्वर्षफले भवन्ति तदा वृथा वर्षविचारणा स्यात् ॥ स भङ्गरिष्टस्य विनिर्णयोतश्शिष्यावबोधाय निरूप्यतेत्र ॥ मणित्थः ॥ लग्नाधिनाथे मृतिभावसंस्थे भौमेक्षिते तस्य च भावसंस्थे ॥ अस्तङ्गते वा भृगुजे बुधे वा शस्त्राभिघातो बहुधापदश्च ॥ तस्य भावसंस्थे लग्नाधीशे भौमे चाष्टमसंस्थे इत्यर्थः ॥ रात्रीश्वरे भास्करमण्डलस्थे षष्ठे व्यये वा मृतिभावसंस्थे ॥ त्रिदोषतोसौ बहुभिः प्रकारैः करोति कष्टं विविधन्दशायाम् ॥ वर्षलग्नपरंध्रेशौ चतुर्थनिधनांत्यगौ ॥ मुथहासंयुतौ यत्र तद्वर्षे मरणप्रदौ ॥ चेज्जन्मनाथो विबलो मृतीशो लग्नङ्गतो भास्करदृष्टमूर्तिः ॥ शस्त्राभिघातो बहुधा च कष्टं कुष्टं शरीरे मरणेन तुल्यम् ॥ मुथहालग्ननाथौ चेत्सूर्यमण्डलमागतौ ॥ दृष्टौ तौ सूर्यपुत्रेण सर्वनाशकरौ मतौ ॥ योगो यदा मूसरिफो ग्रहेन्द्रैर्दुष्टैः कृतः सौम्यकृतः कबूलः ॥ जन्माधिपः क्रूरयुतस्तदानीम्महार्थनाशम्मरणेन तुल्यम् ॥ बलोत्कराः क्रूरखगा बलेन हीना यदा सौम्यखेस्तदानीम् ॥ दुःखं महाव्याधिकृतं च वैरं परस्परं शत्रुविमर्दनं च ॥ दैत्येन्द्रपूज्यो यदि नीचसंस्थः सुरेज्यपूज्यो रिपुभागवर्ती ॥ स्वप्नेपि सौख्यं नहि वर्षमध्ये वृथा फलं हायनजन्तदानीम् ॥ अस्तंगतौ भार्गवसोमपुत्रौ नीचस्थितो रात्रिपतिर्यदा स्यात् ॥ तदा वियोगं मरणं च कष्टं शरीरपीडामतुलां करोति ॥ जन्मलग्ना

द्वर्षलग्नमष्टमं यदि जायते ॥ तस्मिन्वर्षे भवेत्पीडा मृत्युः पापयुतेक्षणात् ॥ अष्टमलग्ने मुथहेश्वरयोगो निषिद्ध इति ॥ ताजिकसारे ॥ हद्देश्वरो हायनलग्ननाथः सप्तांत्यगः क्रूरयुतः करोति ॥ मृतिं दशायां शुभयुक्तदृष्टिः फलं तदर्धं प्रतिमं करोति ॥ नीचे त्रिराश्याधिपतिः परस्य गेहेथ पापेन विलोकितश्च ॥ कार्यस्य नाशं कुरुते ह्यकस्माद्वैरं च कष्टं परतस्सदैव ॥ परेंथिहेशो रविमंडलस्य यदा तदेवं प्रवदंति सन्तः ॥ षष्ठाष्टमस्थे ननु वर्षनाथे महाभयं भूतकृतं च कष्टम् ॥ तदांशुभागे शशिजे कबूले मंदेन सार्धं न सुखं कदाचित् ॥ कलत्रहानिं मरणं च दुःखं करोति वैरं बहुधा नराणाम् ॥ क्रूरः खगो योस्तमितोथ वक्री क्रूरस्य गर्वे यदि लग्ननाथः ॥ क्रूरस्तदा भग्नमुशंति तज्ज्ञाः पुरं च वैरं पुरतो विनाशम् ॥ वर्षतंत्रे ॥ लग्नेशेष्टमगेप्टेशे तनुस्थे वा कुजे क्षितौ ॥ ज्ञजीवयोरस्तगयोः शस्त्रघाते विपन्मृतिः ॥ क्रूरमूसरिफोब्देशो जन्मेशः क्रूरितः शुभैः ॥ कंबूलेपि विपन्मृत्युरित्थमन्याधिकारितः ॥ लग्नेशेष्टमगेप्टेशे तनौ वा मृतिमादिशेत् ॥ इन्थिहेशेब्दपे वारिभस्तं याते रुजाविपत् ॥ जन्मन्यष्टमगः पापो वर्षलग्ने रुगाधिदः ॥ जन्माब्दलग्नपौ नष्टबलौ चेत्स्यात्तदा मृतिः ॥ व्ययांबुनिधनारिस्थाजन्मेशाब्दपमुंथहाः ॥ एकर्क्षगास्तदा मृत्युः पापयुक्तदशा ध्रुवम् ॥ जन्माब्दलग्नपौ पापयुक्तौ पतितभस्थितौ ॥ रोगाधिदौ मृत्युकरावस्तगौ नेक्षितैः शुभैः ॥ अब्दलग्नाद्व्ययनृज् रिःफार्थस्थौरुजा तदा ॥ एवं वर्षाब्दलग्नेशजन्मेशैरपि बंधनम् ॥ लग्ने पापखगांतरे यदि गतपुंजे तथा मृत्युकृदिति ॥ जातकसारे ॥ सप्तमेपि कर्तरीनिषिद्धोक्ता ॥ हायनसुंदरे ॥ स्यात् क्रूरकर्तरीयुतो लग्नेशो राज्यरोगभयं करोति ॥ जातकभूषणे ॥ क्ष्मासुतेक्षितयुतलग्नभर्ता स्यान्मृति ८ स्थितिकरो मृतिकर्ता ॥ सूर्य्यलुप्तकिरणौ धिषणज्ञौ शस्त्रपीडनकरौ हि नराणाम् ॥ चेदिन्थिहापापयुतापडष्टव्ययोपगाहेतिहुताशभीतिः ॥ करोति वर्षे रविनंदनेन युतेक्षिता वा पवनप्रकोपम् ॥ मदननिधन ७। ८ बंधु ४ प्रांत्य १२ शत्रु ८ स्थिताच्चेज्जननसमयलग्नादिंथिहाब्देष्टमस्था ॥ खलगगनचरैश्चेद्युक्तदृष्टातिरिष्टं जनयति शुभदृष्टोत्पन्नरिष्टाल्पता स्यात् ॥ कामिनीभवनगस्तु हिमांशुर्लग्नपो मृतिपतिर्यदि संस्थः ॥ द्वादशे १२ द्विषि ६ तथात्र्युषि ८ रिष्टं स्यान्मतौ च तनुपो मुथहेशः ॥ जन्मर्क्षनाथो निधनेब्दलग्नात्स्यान्मृत्युकृत्क्रूरयुतेक्षितश्चेत् ॥ हिल्लाजदीपिकायाम् ॥ क्रूरस्य हदासितगुरुस्सपापः केन्द्रेण दृष्टोन शुभैर्मृ

तिः स्यात् ॥ समंदलग्नेद्युनगे महीजे वर्षे नरोसौ यमसद्म याति ॥लग्नाधिपे क्रूरयुते द्युनाख्ये समस्तदृक् तूर्यबलेन दृष्टे ॥ विनष्टपापं नवतिश्च येन वर्षे नरोसौ यमसद्म याति ॥ कुजतमोर्कसुताः सुखमाश्रिता यमपुरं स नरः परिगच्छति ॥ मृतिगतस्त्वशुभोऽशुभदृष्टियुग्विगतईज्यदृशाब्दगता मृतिः ॥ ताजिकसारे ॥ लग्नास्तांत्यषडष्टगोहिमरुचिर्दृष्टः खलैः संयुतः स्यादिष्टं प्रकरोत्यसौ च गुरुणा नोवीक्षितस्सद्दृशा॥कष्टं स्याच्छनिना कुजेन दहनाच्छस्त्राद्भयं वा विदुः संदृष्टः प्रकरोति सौम्यखचरैः सौख्यप्रदः शोभनः ॥ रंध्रेशोथविलग्नपो यदि विधोर्लग्नद्वयारिष्टगो तौ सौम्यैरवनाकितौ निधनकृन्मुन्थाधिपो वा तथा ॥ दैवालंकृतौ ॥ चंद्रेशलग्नेशमृतीश्वराश्चेद्व्ययारिमृत्यूपगता विलग्नात् ॥ मृत्युप्रदा जन्मपमुंथहेशौ मृत्युस्थितौ क्रूरनिरीक्षितौ तथा ॥ इत्यरिष्टविचारः ॥ अथारिष्टभङ्गो वर्षतन्त्रे ॥ गुरुः केंद्रे त्रिकोणे वा पापादृष्टः शुभेक्षितः ॥ चंद्रलग्नेन्थिहारिष्टं विनश्यार्थसुखं दिशेत् ॥ लग्नाधिपो बलयुतः शुभेक्षितयुतो यदा ॥ केंद्रत्रिकोणगोरिष्टं नाशयेत्सुखवित्तदः ॥ लग्नेद्यूनेशस्तनुगः सुरेज्यः क्रूरैरदृष्टः शुभमित्रदृष्टः ॥ रिष्टं निहत्यार्थयशः सुखाप्तिं दिशेत्स्वपाके नृपतिप्रसादम् ॥ बलान्वितौ धर्मधनाधिनाथौ क्रूरैरदृष्टौ तनुगौ तदा स्यात् ॥ राज्यं गजाश्वांबररत्नपूर्णं रिष्टस्य नाशोप्यतुलं यशश्च ॥ यदा सवीर्यौ मुथहाधिनाथो लग्नाधिपो जन्मविलग्नपो वा ॥ केंद्रत्रिकोणाय धनास्थितास्ते सुखार्थहेमांबरलाभदाः स्युः ॥ त्रिषष्ठलाभोपगतैरसौम्यैः केंद्रत्रिकोणोपगतैश्च सौम्यैः ॥ रत्नांबरस्वर्णयशःसुखाप्तिं नाशोप्यरिष्टस्य तनोश्च पुष्टिः ॥ तुंगे शनिर्वा भृगुजो गुरुर्वा शुभेत्थशाली यवनाद्धनाप्तिम् ॥ बली कुजो वित्तगतो यशोर्थतेजांस्यकस्माच्च सुखानि दद्यात् ॥ मणित्थः ॥ सुखाधिपः सौख्यगतो बलिष्ठः सौम्येज्यशुक्रैः सहितोथ दृष्टः ॥ ददाति सौख्यं विपुलं मनोज्ञं जायां सुसौंदर्य्यगुणान्वितां च ॥ मुथहाया उपचये ३ । ६ । १० । ११ सूर्यो वा धरणीसुतः ॥ तस्मिन्वर्षे शुभं सर्वं सफलं भद्रदायकम् ॥ अष्टमलग्नापवादः संहितायाम् ॥ झपकुलीरवृषालिमृगांगनाजननराशिविलग्नगृहाष्टगाः ॥ शुभफलाभृगुणा कथितास्तयोरधिपती सुहृदौ हि परस्परम् ॥ यादवः ॥ यदि शुभाशुभकण्टककोणगा यदथवाङ्गपतिर्बलिकेन्द्रगः ॥ हरति रिष्टगणङ्गणपार्चनं तनुभृतान्नमतामिव विघ्नजम् ॥ यदि खलोब्दतनोऽशशिनोथवा त्रिरिपुलाभगतः

सबलः शुभैः ॥ बलिभिरीक्षितयुक् च तथा हरेदशुभमामयमामयजं भयम् ॥ तनुपतिर्यदि वाब्दपतिः शुभाशुभावलोकितयुग्यादिके न्द्रगः॥भृगुसुतोथ हरेदशुभं बहुकुलमशीलमिवार्यजनैस्तुतम् ॥ बलिनि सौम्यखगेप्यबले शुभे भवति सर्वशुभन्तनुधारिणाम्॥विल सदमलतेजाश्चन्द्रमाः केंद्रवर्त्ती स्फुरदमलकरौघैः सौम्यखेटैश्च युग्दृक् ॥ मृतिसद्मममवीर्य्यं वीर्ययुक्तश्च जीवं हरति मरणपालं योगिवात्सिद्धवंद्यः ॥ हिल्लाजः ॥ जीवे विलग्ने तनुपस्स एव त्रैराशिकेशो न भवत्यरिष्टम् ॥ मन्दस्तनोः केंद्रगतस्स एव मुशल्लहे शस्त्वशुभं विनश्येत् ॥ त्रैराशिकोस्तखलवक्रवियुग्बलाढ्यस्सतस्थानगः खलवियुक् सितशुश्च जीवेत् ॥ शुक्रस्तु केंद्ररहितो यदि पश्यतीज्यङ्केंद्रानुगं सकलमेति लयं स्वरिष्टम् ॥ चन्द्रराशीश्वरो लग्नराशिपश्च खलैर्वियुक् ॥ रिष्टन्तदालयं याति यथा व्याधि रसदौषधैः ॥ अत्र विशेष उक्तस्ताजिकमुक्तावल्याम् ॥ षष्ठाष्टमद्वादशतुर्यसंस्थापापान्विता क्रूरनिरीक्षितेन्थिहा ॥ तदीश्वरस्तद्वदथार्क लुप्तो वर्षेश्वरो रंध्ररिपुव्ययस्थः ॥ अस्तङ्गतो लग्नपतिश्च तद्व ८ । ६ । १२ त्सामान्यतोन्येपि विनाशसंस्थाः ॥ तथाब्द लग्नात्रिपताकचक्रे विद्धश्शशी जन्मपतिश्च रन्ध्रे ॥ पराजिता वर्षपजन्मलग्नवर्षाङ्गमुंथापतयस्तथैव ॥ अस्तङ्गता जीवितपुण्य देहनाथा इमे रिष्टकरा हि योगाः ॥ अतोन्यथा रिष्टहराः खचरा मुनिभिस्स्मृताः ॥ रिष्टकर्तृग्रहाणां च वीर्य्यमेकत्र कारयेत् ॥ तद्वच्चरिष्टहर्तॄणां स्थापयेच्च पृथग्बलम् ॥ तत्रारिष्टबले योज्ये मृतिरोगबले पुनः ॥ देहांगपुण्यजीवानां बलं तद्भगकृद्बलः ॥ इष्टकष्ट बलं क्षेप्यं रिष्टारिष्टबले तथा ॥ तयोरंतरजो धीमान् रिष्टं तद्भंगमादिशेत्॥सौम्यै रिष्टं समं क्लेशं धर्मादिष्टं लयं व्रजेत् ॥ रिष्टकृद्ग्रह दशांतरेयदांतर्दशाधिरिपुपापिनो भवेत् ॥ तत्र मृत्युमपि निश्चयं वदेज्जातकायुरवसान एव हि ॥ इत्यरिष्टभंगविचारः ॥ अथ राज योगविचारः ॥ उक्तं च सुधानिधौ ॥ नृपास्पदं सर्वजनाभिमृग्यं लभ्यं च तद्भाग्यवशेन पुंभिः ॥ तल्लभ्यते खेटकृतैस्तु योगैस्ता नत्र योगान्कथयामि कांश्चित् ॥ तुर्यैशोंबुगतो बली बलिशुभैर्युक्तेक्षितो राज्यदः केंद्राप्ति ११ त्रिसुतांकगः सुरगुरुर्जन्मांगपो वेश्मगः ॥ योगेस्मिन् द्वितयेपि वाजिविलसत्कुंभेंद्रसेनं नृपं तत्कुर्यात्समदद्विषड्गजगणे शार्दूलविक्रीडितम् ॥ युवतिधामप तिरनुगो बली गुरुयुतेक्षितमूर्तिरिहोद्भवम् ॥ विविधभोगयुतं नृपसंपदा परिददाति ददाति मनोरथम् ॥ मेपूरणे १० स्वो

स्वगतः पतंगः कर्कोदये वाक्पतिरिंदुरर्थे ॥ सूर्येत्थशालस्तु भवेन्नृपालः समुद्रमुद्रांकितभूमिपालः ॥ ४ ॥ कर्कोदये वाक्पतिरिंदु राज्ये स मूथशाली नृपतिः स्वभेर्कः ॥ यस्य प्रसादादरिसुंदरीणां समुद्रसंदर्शनकौतुकं स्यात् ॥ निशेशसूर्यौ सितवाक्पती च कृतेत्थशालौ पतितान्यभस्थौ ॥ वीर्यान्वितास्ते यदि भूप उर्व्यां प्रशास्ति नक्षत्रयशोवतंसः ॥ वर्षेश्वरो लाभगतोर्कजोर्कौमेपूरणे चंद्रकृतेत्थशालः ॥ समुद्रसीमां महिलां पूरीवत्संपालयेत्पालितशत्रुशालः ॥ वीर्यशालिभृगुजेत्थशालिनि साधिकारपदलाभकर्मजे ॥ म्लेच्छमंडलविमर्दनक्षमो भूपतिर्गजरथोद्धतो रणे ॥ सर्वे शुभाः केन्द्रगतास्त्रिलाभारिस्थाः खला वीर्ययुता नृपस्स्यात् ॥ वातोच्छलद्गाङ्गतरङ्गशोभाहरस्फुरच्चामरवीज्यमानः ॥ पञ्चाधिकारिपतिभिर्मिथ इत्थशालैः केंद्रस्थितैर्बलयुतैर्नृपतिर्विधत्ते ॥ यस्य प्रतापतुलितं हि रुषेव सूर्यम्प्रेंखत्तुरङ्गमरथोत्थितरेणुजालैः ॥ उत्तरतंत्रे ॥ लग्नेश्वरेशऽशुभखेचरश्चेच्छशांकलग्नाधिपती नभस्थौ ॥ स्ववीर्ययुक्तौ शुभवीक्षितौ स्तो वर्षे तदा स्यात्खलु राज्यलाभः ॥ लग्नाधिनाथेन हिमांशुना वा यदीत्थशालं कुरुते म्बरेशः ॥ शुभस्स्वतुङ्गादिगतोम्बरस्थ पश्येत्तदा स्यात् खलु राज्यलाभः ॥ हिमांशुकर्माधिपलग्ननाथा मेपूरण १० स्थाऽशुभवीक्षिताश्च ॥ स्वोच्चादिभस्थाऽशुभखेचराश्चेत्तदा प्रकुर्युर्ध्रुवराज्यलाभम् ॥ हर्पस्थिते कर्मपतौ शुभग्रहे स्वतुंगराश्यादिगते तथोदिते ॥ शुभेक्षिते केन्द्रधनत्रिकोणगे राज्यस्य लाभोस्ति शुभैर्विलग्नगैः ॥ लग्नेश्वरस्स्वर्क्षगतो विलग्ने स्वतुङ्गनाथेन निजोच्चगेन ॥ दृष्टस्तदा तत्र अभीष्टराज्यलाभो भवेद्भूमिपतेः क्रमेण ॥ स्वोच्चास्थितो लग्नगतः शुभग्रहः शेषैस्त्रिकोणायगतैर्बलान्वितैः ॥ अचिन्तिता राज्यपदाप्तिरुन्नतिस्स्यादल्पिका स्वर्क्षगृहादिसंस्थैः ॥ मीनोदये भार्गवजीवसंयुते लाभे कुजे राज्यपदाप्तिमादिशेत् ॥ वृषोदये सौम्यहिमांशुभार्गवैः केन्द्रे गुरौ स्युः खलु राज्यसम्पदः ॥ शुभेत्थशालोम्बरपो विलग्ने राज्यप्रदस्स्वोच्चगृहादिसंस्थः ॥ लग्नेश्वरे स्वर्क्षगते विलग्ने स्वोच्चे कुजे स्यात् खलु राज्यलाभः ॥ केंद्रे हिमांशुस्स्वगृहे स्वतुङ्गे वीर्येत्थशालं कुरुते स्वपेन ॥ लग्नाधिपो नाथचतुष्टयस्थो वर्षे तदा स्यात्खलु राज्यलाभः ॥ केंद्रास्थिते शीतकरे बलाढ्ये शुभैर्युते क्रूरविवर्जिते च ॥ शुद्धेपि वा स्यात् खलु राज्यलाभश्चंद्रेऽबले नीचगतेन राज्यम् ॥ मणित्थः ॥ वाचस्पतिर्लग्नगतस्तृतीयो जन्माधिनाथः सुतगोऽत्र यस्य ॥ स वैरिवृंदं परिहृत्य भुंक्ते

बलं गजांतं विपुलां च लक्ष्मीम् ॥ जामित्रनाथे तनुभावयाते लग्ने गुरौ मित्रशुभैश्च दृष्टे ॥ क्रूरैरदृष्टे धनधान्ययुक्तो भवेन्नरः शक्रसमो बलेन ॥ धर्माधिनाथे सबलेर्थनाथे युते शुभैर्लग्नगतैरदृष्टैः ॥ क्रूरैर्गजांतां विपुलाञ्च लक्ष्मीं भुनक्ति जंतुः शुभकर्मयुक्तः ॥ सौम्यग्रहैः कंटकगैरसौम्यैस्त्रिषष्ठलाभोपगतैर्विलग्नात् ॥ कीर्तिप्रभापुत्रधनानि रत्नप्रवालवस्त्रादिसमस्तलाभम् ॥ निजांशकस्थे त्रिदशेज्यपूज्ये दैत्याधिपे स्वोच्चमुपागते च ॥ निजांशकस्थे रजनीशपुत्रे भवेन्मनुष्यो मनुजाधिनाथः ॥ यदीत्थशालो गुरुशुक्रसौम्यैः कृतस्तदा राज्यभवो हि लाभः ॥ स्वोच्चस्थितैस्तैरचितो यदासौ बलेन शक्रप्रतिमो मनुष्यः॥धर्मे रतिः कांचनलाभयुक्तः प्रीतिः स्ववर्गे धनधान्ययुक्तः॥ बली च भौमो धनभावसंस्थो भवेदकस्मादतुलं च तेजः ॥ निशाधिनाथेनकृते कबूले देवाधिपेज्येन तु कंटकस्थे ॥ रत्नाश्वलाभं कुरुते तदानीं यशश्च लक्ष्मीमतुलां करोति ॥ यदीत्थशालो रवितोस्ति सौम्यः क्रूरैस्त्रिपष्ठायगतैः सहैव ॥ विजित्य सर्वानपि वैरिवृंदान्भुनक्ति राज्यं विपुलैश्च भोगैः ॥ सौम्येंदुनक्रा निजहद्दसंस्थाः सूर्यारमंदास्त्रिखलाभसंस्थाः ॥ तदा धनं वा बहुलप्रभावाद्भुनक्ति शक्रप्रतिमो बलेन ॥ द्वौ मूसरिःफौ यदि शुक्रसौम्यौ गुरुस्तृतीयोपगतोस्ति यस्य ॥ भुक्त्वा यशो राज्यफलं विधत्ते हस्त्यश्वनिष्पीडितवैरिवृंदम् ॥ यदावनीशो निजभागवर्ती स्वोच्चंगतो मित्रशुभैश्च दृष्टः ॥ ददाति लक्ष्मीङ्गजरत्नहेमप्रवालकाढ्यां सततन्नरेभ्यः ॥ त्रिराशिनाथो यदि भूमिपुत्रस्स्वतुङ्गभागे निजभागगो वा ॥ लग्नत्रिकोणायगतो ददाति महासुखं सर्वबलोपपन्नम् ॥ स्वोच्चं गते देवपुरोहिते च त्रिराशिनाथे निजवर्गसंस्थे ॥ परस्परालोकनमत्र याते ददाति पुत्रान्विपुलाञ्च लक्ष्मीम् ॥ चतुर्थसौरिर्यदि सोमपुत्रैः कम्बूलवर्ती यदि पञ्चमांशे ॥ महाबलम्भूरिधनं च धत्ते मित्रागमं कार्यविलासयुक्तम् ॥ मित्रस्य गेहे यदि भूमिपुत्रो ग्रहैस्स्थितैस्स्वोच्चगृहे कबूली ॥ ददाति राज्यं विपुलम्मनोज्ञान्नारी धनं वाजिगजादिलाभम् ॥ यदीन्दुसौम्येज्यसुरारिपूज्याः स्वोच्चङ्गतास्स्वांशगता यदि स्युः ॥ लग्नात्रिकेन्द्रायगतास्स्वामित्रैर्दृष्टाश्च युक्ता निजवीर्ययुक्ताः ॥ गजाश्वरत्नाम्बरदेशलाभं स्त्रीपुत्रलाभं विविधञ्च सौख्यम् ॥ यच्छन्ति खेटाः परमर्दनञ्च कुर्वन्ति सर्वे बलिनो नराणाम् ॥ भाग्याधिपः स्वोच्चमुपागतो बली रवीन्दुवाचस्पतिभिर्निरीक्षितः ॥ भाग्योदयः स्याद्धनधान्यला

मो नृपप्रसादो नियतन्नराणाम् ॥ यदार्कपुत्रो बलवान्स्वतुङ्गसंस्थोप्यतुङ्गे भृगुजो बलाढ्यः ॥ यदा तदा म्लेच्छजनप्रसादा द्भुनक्ति राज्यं विपुलाञ्च लक्ष्मीम् ॥ वर्षतन्त्रे ॥ यदा सत्रोयौ मुथहाधिनाथो लग्नाधिपो जन्मनि लग्नपो वा ॥ केंद्रत्रिकोणायधनास्थितास्ते सुखार्थहेमाम्बरलाभदाः स्युः ॥ तुङ्गे शनिर्वा भृगुजो गुरुर्वा शुभेत्थशालाच्चनाद्धनाप्तिम् ॥ ताजिकसर्वस्वसारे ॥ स्यादिक्कवाले खलु राजयोगस्स्यादिन्दुवारे नृपराज्यविच्युतिः ॥ नृपान्मजानामिह राज्यलाभोन्येषां प्रतिष्ठा वसुलब्धयःस्युः ॥ ताजिकालंकारेपि ॥ जनने जननेत्रगोचराः खचराःस्वस्वगृहोच्चसंस्थिताः ॥ अरिभम्प्रविहाय हायने यदि ते स्युस्सकलार्थसिद्धिदा इति ॥ अथ राजयोगभङ्गः ॥ मणित्थः ॥ व्यये शशांको यदि तत्र सौरिः षष्ठे भृगुर्हानिकरस्समन्तात् ॥ धनाश्वरत्नादिमहाद्भुतानां स्वचित्तवैकल्यकरो ह्यकस्मात् ॥ धर्माधिपे वा विबले च वित्तनाथे विलग्ने शुभदृष्टिहीने ॥ क्रूरैर्युते नाशमुपैति लक्ष्मीस्सुसाश्रिता शक्रसुरक्षितापि ॥ ताजिकभूषणे ॥ नीचस्थिताश्चास्तमिताश्च पापा नृपालयोगं दलयन्त्यलन्ते ॥ खलाः कुवर्गे विबलाश्च सौम्याः कृतार्गलाः स्युर्नरपालयोगाः ॥ ताजिकसारेपि ॥ नीचोपगा वैरिगृहोपजाता पापैर्युता वास्तुगता ग्रहेंद्राः ॥ हरन्ति राज्यं विपुलन्नराणान्तदा सुखं नाल्पतरं विहर्षे ॥ दुष्टवर्गोपगाः पापास्सौम्याश्चेद्बलवर्जिताः ॥ अपाकुर्वंति ते राज्यं कष्टं कुर्वन्ति देहिनाम् ॥ अस्तङ्गतौ नीचमुपागतौ वा क्रूरारिसंपीडितमूर्तिकौ वा ॥ देवेज्यशुक्रौ मनुजाधिपत्यं सुखार्थलाभं हरतो नराणाम् ॥ सूतौ व्योमपतिर्ग्रहस्स यदि चेत्तद्वत्सदाधिष्ठितो नीचश्चास्तमुपागतः शुभहरः प्रोक्तोब्दवेशे बुधैः ॥ सौम्याश्चेत्पतिताश्रिताः खलखगाः केन्द्राश्रिता वक्रिणो निर्वीर्या यदि वा तदाब्दसमये लक्ष्मीः परिक्षीयते ॥ जनौ व्ययेथो दशमे च वर्षे स्वस्वामिसौम्येक्षणयोगहीनः ॥ खेशारिदुष्टर्क्षयुतःश्रियं हरेत्तृष्णैत्रधैर्यम्पुरुषस्य पूज्यम् ॥ अब्देशः पदपोथवास्तमयगो नीचारिगो वा भवेल्लग्नेशेन कृतेशराफयुतिकः खेशोथ रात्रीश्वरः ॥ क्षीणो नीचयुतश्शुभो हितयुतिस्सूर्योपि ॥४४॥
दुष्टाश्रयी राज्यन्नीतिबलेन विस्तृतमिव क्षीणो विदेहे रुजम् ॥ पञ्चाधिकारिष्वपि नैव केंद्रत्रिकोणलाभक्रमगो बलीयान् ॥ परेपि दुष्टाश्रयगाविवीर्यास्तदा भवेद्भूरिसुखार्थनाशः ॥ लग्नेश्वरे नीचपतीत्थशाले स्याद्राष्ट्रमस्य क्षितिपस्य शून्यम् ॥ वर्षतन्त्रे ॥

अब्देन्थिहेशादिखगाः खलैश्चेद्युतेक्षिता अस्तगनीचगा वा ॥ सौम्या बलोना नृपयोगभंगं तदा वदेद्वित्तसुखक्षयं च ॥ इत्थं जन्मानि वर्षे च योगकर्तुर्बलाबलम् ॥ विमृश्य कथयेद्राजयोगं तद्भंगमेव च ॥ इति श्रीमद्दैवज्ञवर्य्यपण्डितदामोदरात्मजबलभद्रविरचिते हायनरत्ने वर्षेशादिविचाराध्यायः समाप्तः॥ ॥श्रीगणेशाय नमः ॥ अथ तन्वादिद्वादशभावविचाराध्यायः ॥ उक्तञ्च यादवेन ॥ भावम्परस्यानधिगम्य धीमान्दृष्टेपि वक्तुं सहिताहितं क्षमः ॥ तथैव तत्त्वादिकभावजातं शुभाशुभन्तद्विवृणोम्यथाहम् ॥ द्वादशभावानां संज्ञा समरसिंहेनोक्ता ॥ तनु १ धन २ सहज ३ सुहृत् ४ सुत ५ रिपु ६ जाया ७ मृत्यु ८ धर्म ९ कर्म १० याः ११ ॥व्यय १२ इति भावा द्वादश कार्यस्थानानि लग्नाद्या इति ॥ अथ सामान्यतो भावविचार उक्तोब्दतन्त्रे ॥ यो भावस्स्वामिसौम्याभ्यां दृष्टो युक्तोयमेधते ॥ पापदृष्टयुतो नाशो मिश्रैर्मिश्रफलं वदेत् ॥ अत्रस्वामिशुभग्रहाभ्यां युतो दृष्टो वा तद्भावसंबन्धि स्वस्य सौख्यं कोर्थः तद्भावोक्तशुभपदार्थानां वृद्धया अशुभपदार्थानान्नाशेन च सुखम् ॥ पापैस्तद्भावोक्तोऽशुभपदार्थवृद्धया शुभपदार्थनाशेन च स्वस्य दुःखमेवम्मिश्रैः सौम्यपापैर्मिश्रं शुभमशुभञ्च ॥ तत्र सौम्याधिक्ये सुखाधिक्यं दुष्टं फलं पापाधिक्ये दुःखाधिक्यशुभफलं ज्ञेयम् ॥ तुल्यत्वे क्रूरसौम्यानां बलाबलविवेकेन फलनिर्देशः ॥ अत्र भावेशमित्रग्रहेण दृष्टो युतो वा भावः ॥ स्वफलप्रदो वा ज्ञेयः ॥ भावेशशत्रुणा सौम्येनापि युतो दृष्टो वा भावः स्वफलनाशको ज्ञेयः ॥ भावाधीशोपि लग्नाद्भावाद्वा केंद्रगो भावशुभफलवृद्धिदः ॥ षष्ठाष्टमद्वादशस्थो भावफलनाशको ज्ञेय इति विशेषः ॥ भावनाथो यथा पश्येद्भावं कार्यकरस्स्मृतः ॥ आक्रांतोपि च यः पश्येत्परतः कार्यसिद्धिकृदिति ॥ जीर्णताजिके ॥ अत्र विशेषो भगवता गर्गेणोक्तः ॥ नीचस्थो रिपुगेहस्थो ग्रहो भावविनाशकृत् ॥ उदासीनगृहे मध्यो मित्रस्वर्क्षत्रिकोणगः ॥ स्वोच्चगश्च ग्रहोवश्यं भाववृद्धिकरः स्मृत इति ॥ षष्ठाष्टव्ययभावेषु विचारे वैपरीत्यमाह सत्याचार्यः ॥ सौम्याः पुष्टिम्पापा विपर्यये संश्रिता ग्रहाः कुर्युः ॥ मृत्यादिषु निधनान्ता रिपुभावेषूत्क्रमात्फलं दद्युरिति ॥ अयमर्थः ॥ अष्टमस्थाः सौम्या मृत्युहानिं कुर्वंति ॥ पापा मृत्युवृद्धिं कुर्वंति ॥ द्वादशे सौम्या व्ययहानिं क्रूरा व्ययवृद्धिं षष्ठभावस्थाः सौम्याः शत्रुहानिं क्रूराः शत्रुवृद्धिं कुर्वंतीति सत्याचार्यमतम् ॥ षष्ठे सौम्याः शत्रुवृद्धिं क्रूराः शत्रुहानिं कुर्वंतीति ताजिककर्तृमतम् ॥ तदग्रे ग्रहाणां भावफले प्रकटीभविष्यति ॥ अत्र विशेष

माह समरसिंहः ॥ जन्मनि यस्मिन् राशौ शुभोशुभो वा सवर्षलग्नेपि ॥ यदि भवति तदा पूर्णं शुभं यच्छति स्वधातुवशात् ॥ अत्र विशेषांतरमाह तेजसिंहः ॥ लग्नप्रभृत्यखिलभावपतौ विनष्टे तद्भावजात्र विषयक्षतिरित्थमत्र ॥ नष्टेरिपेरिपुरुजोपनयोन्त्यनाथे नार्थव्ययश्च मृतिपे मृतिहानिरित्थमिति ॥ अथ भावेषु बलिष्ठग्रहलक्षणमुक्तं संज्ञातंत्रे ॥ लग्न १ कर्मा १० स्त ७ तुर्या ४ य ११ सुतां ५ क ९ स्थो बली ग्रहः ॥ यथादिमं विशेषेण सत्रिवित्तेषु १ । १० । ४ । ७ । ११ । ५ । ९ । ३ । २ चंद्रमाः ॥ कुजस्सत्रिषु १ । १० । ७ । ४ । ११ । ५ । ९ । ३ पृच्छायां सूतौ वर्षे च चिन्तयेत् ॥ भावा नवेत्थं शस्तास्स्यू रिःफाष्टरिपवोशुभाः ॥ दीप्तांशातिक्रमे शस्ता इमेपीति विचिन्तयेत् ॥ अत्र सर्वापेक्षया लग्नस्थो ग्रहो बली तस्माद्दशमस्थो हीनबलः ॥ एवं सर्वत्र द्वादशाष्टमषष्ठभावा गणितागता अधिष्ठितग्रहदीप्तांशानतिक्रम्य वर्तंते तदा शुभफलदा इति ॥ एवं शुभभावेषु ग्रहास्स्वदीप्तांशमध्येष्वत्यन्तं शुभाः ॥ तदतिक्रमे ल्यूनफलदा इत्यनुक्तमपि ज्ञेयम् ॥ भावविचारे विशेषमाह यादवः ॥ यद्यद्भावपतिर्ग्रहो जनुषि सोत्राब्देऽधिकारी बली तत्तत्प्राप्तिकरोथवाजनुषि यद्भावाधिपोब्दे स च ॥ पश्येत्तं स तथाविधो यदि च नो पश्येत्फलं स्वप्नवद्यः कश्चित्खचरो जनौ शरदि यद्भस्थोत्र तत्प्राप्तिद इति ॥ अन्योपि विशेष उक्तो हायनसुंदरे ॥ यस्मिन् भावे भावनाथेन युक्तो लग्नस्वामी तस्य भावस्य वृद्धिम् ॥ कुर्यान्नित्यं मृत्युनाथेन युक्तो यस्मिन् भावे तस्य हानिं सदैवेति ॥ अथ लग्नेशो यद्भावस्वामिना सहेत्थशालं करोति तद्भावसम्बन्धिपदार्थाना वर्षे लाभसुखादिकं वाच्यम् । तत्रापि मणऊखल्लासरहद्दयोगादिसंभवे इत्थशालफलं न वाच्यम् ॥ एवमित्थशालासंभवेपि यमयानक्तंबीरयोगादौ फलं ग्रंथोक्तं वाच्यमिति भावविचाराध्यायानुक्तमपि ज्ञेयम् ॥ अत्र जातकवर्षप्रश्नादौ लग्नादिद्वादशभावाः साध्यास्ततो यत्रयत्र भावे यद्यद्वस्तु कथितं तत्तद्वस्त्वभिप्रायादिग्रहयोगतो वाच्यम् ॥ उक्तं च चंडेश्वरेण ॥ यद्यद्भावे तु यद्वस्तु कथितं यवनादिभिः ॥ तत्कार्यसंज्ञमाख्यातं ततः प्रश्नादिचिंतयेत् ॥ इति सामान्यतो भावविचारः ॥ अथविशेषभावविचारे आदौ तनुभावविचारस्तत्र तनुभावे किंचिंतनीयमित्युक्तं चंडेश्वरेण ॥ आरोग्यपूजागुणमानवृत्तमायुर्वयोज्ञाति जदोषसौख्यम् ॥ क्लेशाकृती लक्षणवर्णरक्षा तद्भागिनेयस्य वधूस्तनौ स्यात् ॥ अत्र तनुभावश्चेत्स्वामिसौम्याभ्यां दृष्टो युक्तो वा स्याच्चदा देहे आरोग्यं लोकतः पूजालाभःगुणोदयः ॥ सन्मानाधिक्यम् ॥ शुभाचरणम् आयुषि निर्विघ्नता लग्नेशवयसा पुरुषेण सुखाऽधिकं स्वज्ञातिसौख्य क्लेश

नाशः शुभाकृतित्वं नाम कांतिवर्द्धनं देहे शुभलक्षणोद्यमः लग्नाधीशस्य संज्ञातंत्रोक्तं ब्राह्मणादिवर्णद्वारया सुखमंगरक्षाभागिनेयजायादेहेसुखं भागिनेय विवाहाद्युत्सवेनवा सुखमेवं पापैः सर्वं विपरीतं ज्ञेयम्॥मिश्रैर्मिश्रं च पूर्ववत् ज्ञेयम्॥अथ विशेषयोगास्ताजिकसारे॥लग्नाधिपे पूर्णबलेतिसौख्यमारोग्यता कान्तिविवर्द्धनञ्च ॥ अल्पं सुखम्मध्यबले विनष्टे कष्टं व्ययाष्टारिगतेल्पसौख्यम् ॥ अत्र वर्षलग्नेशो जन्मन्यपि पूर्णबलोपेक्षित इत्युक्तन्तेजस्सिंहेन ॥ लग्नेश्वरेऽब्दजनुषोरपि पूर्णवीर्ये नीरोग्यतामतिमहत्त्ववपुस्सुखानि ॥ लग्नेथ दृष्टसहिते विभुनाशुभैर्वा भावेषु चैवमखिलेषु फलं विलोक्यम् ॥ एवम्पापैस्सर्वं विपरीतं ज्ञेयं मिश्रैर्मिश्रफलम्भवेत् ॥ केन्द्रस्थिते लग्नपतौ च सौम्यैर्दृष्टे युते वा नवपञ्चमस्थे ॥ सौख्यं विलासो विजयो भवेद्वा कम्बूलगे रात्रिपतौ बलाढ्ये ॥ लग्नं यदा पापखगैस्समेतं सौम्यग्रहैर्नोसहितञ्च दृष्टम् ॥ ददाति मांद्यं बहुलं समान्ते तथा विवादं कुजनैर्नराणाम् ॥ शुभग्रहाः केन्द्रगता बलान्वितास्सद्योर्थलाभाय सुकार्यसिद्धये ॥ पापग्रहाः पञ्चमकेन्द्रगा वा दारिद्र्यदुःखाय भवन्ति तत्र ॥ सौम्यग्रहैरुपचयोपगतैस्समस्तैर्लग्नात्तथा हिमकरात्सबलैर्नराणाम् ॥ दद्युर्धनानि विविधानि विलासहास्यं सौख्यागमन्निखिलयोगजनात्पृथिव्याम् ॥ समरसिंहः ॥ लग्नेशे केन्द्रस्थे शुभग्रहे लग्नगे शुभैर्दृष्टे ॥ लग्नात्त्रिकोणसंस्थे क्षेमन्देहस्य चन्द्रमूथशिले ॥ जातकलग्नाद्वर्षे षष्ठेन्त्ये वा दशाग्रहैः क्रूरैः ॥ दृष्टे युते च वाच्यन्तद्वर्षे न शुभमन्ययोगेपि ॥ जन्मनि पापे वर्षे लग्नगता मुन्थहा नहि श्रेष्ठा ॥ क्रूरयुतदृष्टचन्द्रे लग्नस्थे वा शुम्भबहुशः ॥ लग्नात्सप्ताष्टमगे भौमे वर्षे न शोभनं वाच्यम् ॥ जीर्णताजिके ॥ उदितो लग्नपो लग्नं पश्येत्सर्वग्रहेक्षितम् ॥ सार्वभौमस्तदा योगो महाभाग्यस्य जायते ॥ यद्राशिजो नरस्तस्य समुदेति पतिर्यदा ॥ राशीशस्योदयोवा स्यादुदयस्तत्र वत्सरे ॥ उदितः स्वोच्चगो वापि राशिपोलग्नपोऽथवा॥शुभं तद्वत्सरे तस्य कुर्याद्युक्तोथवा ग्रहः ॥ लग्नेशो वीक्ष्यते लग्नं वीक्ष्यन्ते च शुभग्रहाः ॥ तदा देहसुखं विद्याल्लग्ने लग्नेश्वरोऽथवा॥ लग्नं लग्नेश्वरः पश्येद्भावं पश्यति भावपः॥तावुभौ भावगौ स्यातां तदा तद्भावजं सुखम् ॥ स्वक्षेत्रस्थो लग्नपतिर्लाभपेन युतः शशी ॥ श्रेष्ठो धनाधिपश्चेत्स्यात्तदा श्रेष्ठफलाप्तिकृत् ॥ केंद्रगो यदि लग्नेशः शुभो दृष्टः शुभैरपि ॥ त्रिकोणलाभगो वापि चेद्राज्ये क्षेमकारकः ॥ जीवेब्दपे क्रूरयुते लग्ने हानिर्भयं नृपात् ॥ षष्ठो लग्नाधिपो नूनं स्वयमेव रिपुर्भवेत् ॥ अष्टमो मृत्युकृच्चैव

व्ययगो व्ययकारकः ॥ लग्ननाथे विनष्टे स्याद्विनष्टावयवः पुमान् ॥ तेजो वर्णादिकं नष्टमुदिते निखिलं शुभम् ॥ लग्ननाथो राशिनाथः केंद्रनाथोथ भावपः ॥ उदेति यत्र मासे च तन्मासे तत्सुखं बहु ॥ उदितावुत्तमे भागे राशिलग्नपती स्थितौ ॥ केंद्रे वा स्युः शुभाः ह्येवं तदा श्रेष्ठं फलं स्मृतम् ॥ यस्मिन् गेहे लग्नपतिस्तदीशः स्याच्छुभे गृहे ॥ शुभकार्य्यस्य सिद्धिः स्याद्विपरीते न संभवः॥ नीचस्थिते चास्तमिते अशुभर्क्षस्थिते तथा॥लग्नेशभपतौ कार्यमशुभं तत्र सिद्ध्यति॥लग्नकार्यपयोर्योगः शुभयोः सिद्धिकृद्भवेत् ॥ पापयोश्च तयोर्योग अल्पकार्यकरोमतः ॥ हिल्लाजः॥विलग्नात्पंचमं तस्मात्पुण्यभं च ततस्तनुः॥स्थानत्रये यदा सौम्याः सुखसंपत्तिदो भवेत् ॥ स्वोच्चे तत्र यदा सौम्यास्तत्र राज्यं महासुखम् ॥ स्वोच्चे लग्ने श्रियं तुर्ये सौख्यं योषिद्द्युने भवेत् ॥ व्योम्नि राज्यं ग्रहे सम्यग् विचार्य्य फलमादिशेत् ॥ यादवः ॥ जन्मांगाब्दपतिः समातनुपतिर्वाब्दे भवेद्यद्गगस्तद्देशेन कृतेत्थशालयुतिकस्तत्प्राप्तिदश्चेच्छुभः ॥ यद्वा भावनृपोऽथवा सहमपो वर्षाधिनाथेन वा लग्नेशेन करोति चेद्युतिमिहास्याप्तिप्रदो हायने ॥ लग्नेश्वरे वा शरदीश्वरे वा वीर्यान्विते सौम्ययुतेक्षिते च ॥ शरीरसौख्यं बहुदुःखमष्टषष्ठास्थिते तत्पतिना च युक्ते ॥ जन्मलग्नपतिरुत्तमवीर्यो यद्गृह जनुषि तत्र च दृष्टे ॥ तेन वा सहित अस्य च लब्धिस्तद्व्यथाङ्गसुखमब्दतनौ स्यात् ॥ भावा जन्मनि हायन स्वफलदाः सौम्यैस्स्वपत्या युता व्यस्ताव्यस्तफलाश्च तत्परिहढास्सादास्समेशोपि च ॥ एवञ्चापि विलग्नवर्द्धनसुखश्चक्रं विधायात्र तद्दृष्टादुष्टखगाश्रयास्तदिनतो ब्रूयाच्छुभञ्चाशुभम् ॥ सूतौ यद्भवने शुभोब्दसमये तद्धर्मतोब्दाङ्गतो मुन्थातोपि तदाप्तिकृत्क्षतिकरः क्रूरोथ वर्षेश्वरः ॥ यद्भावे सहमेतिवीर्यसहितो लग्नेश्वरेणापि वा तत्पेनाथकृतेत्थशालयुतिकस्तत्प्राप्तिकृद्धायने ॥ तेजस्सिंहः ॥ वर्षाङ्गपो जनुषि यद्गृहगोवली स्याद्वर्षे च लग्नमथ तद्गृहमाश्रितश्चेत् ॥ तद्भावजङ्खलु फलं सकलन्ददाति चेत्थं सदात्र मुथहाब्दपती विचिन्त्यौ ॥

अथ वर्षलग्ने फलमाह समरसिंहः ॥ यदि लग्नेशस्सूर्यो दुःखं व्याकुलत्वपरवशते ॥ यदि सोमस्तु परान्नभुक्कुलतो नाश्रयो विगतधातुः ॥ भौमे लग्नाधिपतौ सर्वविरोधी विवादकृद्रोगी ॥ सौम्ये च पतौ विद्याबुद्धिप्रभृतीनि जायन्ते ॥ गुरुसितयोश्च पतिवातिसुखानि पूर्णानि सर्वाणि ॥ मन्दपतित्वे कलहोद्वेगविकाराऽशुभानि च स्युरिति ॥ अथ विशेषमाह हिल्लाजः ॥ जन्मनि ये बलयुक्ता हीनबला

द्यास्तथा वर्षे ॥ ते वर्षपूर्वभागे शुभफलदाश्चोत्तरे त्वशुभाः ॥ ये जन्मनि बलहीना वर्षे बलसंयुताः खेटाः ॥ ते वर्षे चरमभागे शुभफलदाः पूर्वभागके त्वशुभाः ॥ उभयत्र ये बलाढ्याः संपूर्णेब्दे शुभप्रदास्ते स्युः ॥ उभयत्र वीर्यरहितास्ते वर्षेनिष्टदाः सकलेपि ॥ अथ लग्नभावस्थितानां सूर्यादीनां फलम् ॥ ताजिकपद्मकोशे ॥ अथ प्रवक्ष्ये यवनादितत्त्वं तन्वादिगानां रविपूर्वकाणाम् ॥ सामान्यतो भावफलं खगानां कौतूहलं दैवविदां हिताय ॥ रविर्लग्नगो वातपित्तं करोति कलत्रांगपीडां शिरोत्यक्षिरोगम् ॥ विवादश्चनानां भवे द्वृत्तचिन्ता दशानेष्टकारी भवेद्धायनेस्मिन् ॥ १ ॥ तनुगतस्तनुते रजनीकरो विकलताञ्च कफज्वरपीडनम् ॥ भवति पापखगान्वि तदृग्यदा तनुविनाशकरो बलवर्जितः ॥ २ ॥ धरणितनयलग्ने स्याद्व्रणो वातपीडा भवति रिपुविवादो नेत्रशीर्षे च रोगः ॥ ज्वरवम नविकारादंगनांगे च कष्टं नृपभयमथ लोहादग्नितो वा भयं स्यात् ॥ ३ ॥ रजनिकरसुतः स्याल्लग्नगो हायनस्य बहुलबलविवृद्धिर्योषितां चापि सौख्यम् ॥ भवति रिपुविनाशो भूपपक्षाच्च लाभो धनजनसुखकारी मित्रलाभं करोति ॥ ४ ॥ जीवे लग्नगते हयांबर सुखं प्राप्नोति वृद्धिं पराम् ॥ राज्यात्सौख्यसमागमं च बहुलं व्यापारतस्स्याज्जयः ॥ कीर्तेश्चापि विवर्द्धनं रिपुजना नश्यंत्यवश्यं तथा ॥ जायासौख्यमथापि मौक्तिकधनं हेम्नश्च लाभो भवेत् ॥ तनुस्थानगो भार्गवश्चेदिह स्यात्प्रतिष्ठाविवृद्धिं समृद्ध्यागमं च ॥ रिपूणां विनाशं तथा भूपमानं जयं भूपणाढ्यं नराणां करोति ॥ ६ ॥ मूर्तिस्थितो रविसुतः सुतलाभकारी स्वोच्च ७ स्थितः स्व भवने १० । ११ च करोति लब्धिम् ॥ शेषेषु वैरिभयवायुकृता च पीडा जायांगकष्टमथ रोगकृदब्दमध्ये ॥ ७ ॥ तमो लग्नगः कामिनीनाञ्च पीडा रिपोर्भीतिचिन्ताव्ययो व्यग्रता च ॥ शिरोर्तिश्च भूपाद्भयं मानभङ्गन्तथा नेत्रपीडाङ्करोतीह वर्षे ॥ ८ ॥ केतुफलं सर्वत्र राहुवज्ज्ञेयम् ॥ मणित्थः ॥ बहुचिन्ता तथोद्वेगः शिरोक्षिमुखपीडनम् ॥ बहुरोगोऽङ्गनापीडा वर्षादौ लग्नगे रवौ ॥ १ ॥ प्रक्षीणश्चन्द्रमा क्रूरश्चाक्षीणस्सौम्य एव च ॥ सौम्यदृष्टस्तथा सौम्यः पापदृष्टस्त्वशोभनः ॥ शुक्लाष्टम्युत्तरदलाद्याव त्कृष्णाष्टमीदलम् ॥ तावच्छुभश्च शीतांशुः प्रोक्तस्थानेषु शोभनः ॥ लग्ने शीतकरे पुंसां श्वासकासादिपीडनम् ॥ वदनाक्षिविकारैश्च पीडितः कफरोगतः ॥ २ ॥ मूर्द्धवक्रादिरोगांश्च कलहञ्च धनक्षयम् ॥ रक्तपित्तप्रकोपञ्च कुरुते लग्नगः कुजः ॥ ३ ॥ देहे सौख्य

न्धियो वृद्धिर्नृपमानो धनागमम् ॥ तेजो धैर्यस्य वृद्धिश्च वर्षे सौम्ये विलग्नगे ॥ ४ ॥ सौख्यं पुत्रकलत्रादेर्वपुरारोग्यसन्मती ॥ लाभः सेवासुख भूपमानो लग्नगते गुरौ ॥ ५ ॥ सौख्यं लाभं प्रमोदश्च कुलवृद्धिर्भवेन्नृणाम् ॥ मानं भूमिपतेर्दत्ते दैत्येज्यो लग्नगो यदि ॥ ६ ॥ कफमारुतकोपश्च शिरोजठरपीडनम् ॥ इष्टद्वेषं वक्रपीडां वर्षे लग्नगते शनौ ॥ ७ ॥ देहे मरुत्कृता पीडा कलहं विभवक्षयम् ॥ पुत्रमित्रादिकं कष्टं राहौ वर्षविलग्नगे ॥ ८ ॥ इति तनुभावविचारः ॥ १ ॥ अथ धनभावविचारः ॥ तत्र धनभावे किञ्चिंतनीयमित्युक्तश्चण्डेश्वरेण ॥ माणिक्यमुक्ताफलरत्नधातुवस्त्राम्बरस्वर्णहयादिसर्वम् ॥ रौप्यादि धान्यं क्रयविक्रयादिसाधारणन्तत्कथितं द्वितीये ॥ २ ॥ अत्र धनभावश्चेत्स्वामिसौम्याभ्यां दृष्टो युक्तो वा स्यात्तदा माणिक्यमुक्ताफलरत्नवस्त्राम्बरस्वर्णादिनाआगमात्सुखमश्वादितस्सुखं क्रयविक्रयाद्धनागमः ॥ धान्य व्यापारादितो लाभः ॥ क्रूरैः सर्वं विपरीतं मिश्रैर्मिश्रम् ॥ अथ योगा वर्षतन्त्रे ॥ वित्ताधिपो जन्मनि वित्तगोऽब्दे जीवो यदा लग्नपतीत्थशाली ॥ तदा धनाप्तिः सकलेऽपि वर्षे क्रूरेसराफे धनधान्यहानिः ॥ यादवेन तु जन्मनि धनभावस्थगुरोर्योग उक्तः ॥ यदि देवगुरुर्धने जनौ शरदि स्यादपि तत्र तद्युतः ॥ मुथशीलयुतौ तदा धनं बहुलं स्यादिति निश्चितं वदेत् ॥ ताजिकसारे मुथशिलं विनैव योग उक्तः ॥ वित्तेश्वरो जन्मनि देवपूज्यो वर्षे धनस्थो धनलाभकृत्स्यात् ॥ वर्षाधिनाथेन युतेक्षितो वा जीवस्तथा वर्षपतिर्बलाढ्यः ॥ धनपतिः कुरुते धनगो धनं यदि सुराधिपपूज्यसमन्वित इति ॥ वर्षतन्त्रे ॥ जन्मन्यर्थावलोकीज्योऽब्देऽब्देशो बलवान् यदा ॥ तदा धनाप्तिर्बहुला विनायासेन जायते ॥ एवंविधो गुरुर्धनभावे चेद्भवति तदा विशेषेणोत्तमफलमुक्तं यादवेन ॥ जनने धनदृष्टिके गुरौ शरदीशे शरदीप्सितं धनम् ॥ धनगेहगते तथा धनैर्बहुभिः सेव्य इहार्थवान्नरः ॥ वामनेन तु गुरोर्धनभावे दृष्टिं विनैव योग उक्तः ॥ गुरौवर्षाधिपत्यं च सबलत्वं च बिभ्रति ॥ धनाप्तिर्महती तत्र वर्षे भवति निश्चयात् ॥ एवंविधे सिते सौम्येऽथवा बहुधनं भवेत् ॥ धनस्थाने शुभयुते धनाप्तिर्बहुधा भवेत् ॥ निर्बले पापयुक्ते च धनहानिस्तु जायते ॥ वर्षतंत्रे ॥ एवं यद्भावपो जन्मन्यब्दे तद्भावगो गुरुः ॥ लग्नेशेनेत्थशाली चेत्तद्भावजसुखम्भवेत् ॥ तथा जनुषि यं पश्येद्भावमब्देऽब्दपो गुरुः ॥ तदा तद्भावजं सौख्यमुक्तं ताजिकवेदिभिः ॥ सूतौ धनप्रदः खेटो धनाधीशश्च तौयदि ॥ वर्षे नष्टौ वित्तनाशावन्यानि

क्षेपवाददौ ॥ एवं समस्तभावानां सूतौ नाथाश्च पोषकाः ॥ वर्षे नष्टबलास्तेषान्नाशायोह्या विचक्षणैः ॥ लग्नवित्तेशसंयोगो वित्तसौ
ख्यविलासदः ॥ वामनः॥ योगे लग्नेशवित्तेशोर्वित्तसौख्यं न जायते ॥ अत्र वर्षतन्त्रे लग्नेशधनेशयोर्योगः शुभफलप्रद उक्तः॥ वामनेनाशुभफलद
उक्तस्तत्रानयोर्व्यवस्था॥एकराशौ तयोर्मुथशिले शुभम्फलम्मूसरिःफे अशुभं फलम् ॥ तदुक्तन्तेजसिंहेन ॥ स्वाङ्गेशयोर्मुथशिले सुखतोर्थलाभो
नैस्स्वव्ययौ तनुपतेर्धनपेसराफा दिति॥समरसिंहः॥जन्मनि च सोमजन्मनि षष्ठपतौ तत्स्थिते च वर्षान्तः॥लघुवित्तकलाभस्स्यादेवं
भौमे भवेद्रोगः ॥ यादवेन तु जन्मनिषष्ठभावस्थबुधस्य योग उक्तः ॥ जनने शशिजे रिपुस्थिते शरदीहापि गतेऽब्दके धनम् ॥ लघुभूमि
सुते तथाविधे निजधातूत्थगदो निरूपितः ॥ वर्षेशे सति शुक्रे धनगे सौम्येक्षिते च भूरिधनलाभः ॥ सौम्येप्येवं सबले व्यवसाय
ज्ञानालिखनतो वित्तम् ॥ वित्तस्थिते गुरौ स्याच्छुभयुतदृष्टे धनी च बहुसेव्यः ॥ मुथहा राशिं जन्मनि पश्यन् वर्षेपि तादृशि विशे
षात् ॥ मातुः सहमे ज्ञजीवे शुक्रे वा सौम्यदृष्टियुजि॥ स्वकुलोचितश्च वित्तं राज्यं भूयस्तरम्भवति ॥ मन्दे च धनोपगते धनव्ययो भीः
क्षतिश्च कार्याणाम् ॥ गुरुयुक्ते भ्रातृसुखं शुभदृष्ट्या तस्य भूतयो भ्रातुः ॥ रन्ध्रे द्वितीयके वा गुरौ च पापार्दिते हानिः ॥ हृ
द्वाधिपतौ जीवे शुभदृष्टियुते धनप्राप्तिः ॥ विपरीते धनहानिर्मन्दस्थाने गुरौ तथाप्येवम् ॥ द्विपदश्चतुष्पदं वा विचार्यराशिग्रहो
क्तधातुश्च ॥ धनसुहृदादिगृहाणां यथोक्तकार्या अथो ज्ञेयाः ॥ धनलाभस्य च प्रश्ने लग्नेशेनेन्दुना च नाथः ॥ कुरुते यदीत्थशालं
शुभयुतिदृग्भ्यां भवेल्लाभः ॥ लग्नेशधनेश्वरयोर्नक्तश्च वान्यमानुपाल्लाभः ॥ धनयोगेपि तथा शुभयुक्ते वा धनेभद्रम् ॥ क्रूरग्रहैर्द्धन
स्थैर्दूरे लाभोन्यदा स्यादशुभम् ॥ क्रूरमुथशिले च तयोर्म्रियते प्रष्टी कथंचिदपि ॥ वामनः ॥ गुरुर्जन्मनि यद्राशौ तद्राशौ वर्षल
ग्नगे ॥ जायते वित्तनीरुक्त्वं शुभस्वामियुतेक्षिते॥जन्मन्यर्के लग्नगतेऽब्दे धनस्थे धनं भवेत् ॥ गुरौ पापार्दिते रंध्रे धनस्थे वा नृपाद्भ
यम् ॥ सबलेऽब्दपतौ ज्ञे च लिपिज्ञानोद्यमैर्द्धनम् ॥वर्षतंत्रे ॥ जन्मलग्नगताः सौम्या वर्षेथ धनलाभदाः ॥ यादवेनतु बुधस्यैवं योग उक्तः॥
विदि जन्मविलग्नगेब्दके धनयाते धनलब्धिरुत्तमा इति ॥ वर्षतंत्रे ॥ अर्थार्थसहमेशोचेच्छुभैर्मित्रदृशेक्षितौ ॥ बलिनौ सुखतो लाभ
प्रदौ यत्नादरेदृशा ॥ मित्रदृष्ट्या मुथशिलेऽर्थांगयोः सुखतो धनम् ॥ तयोर्मूसरिफे वित्तनाशदुर्नयभीतयः ॥ क्रूरयोगेक्षणात्सर्वं

विपरीतं फलं भवेत् ॥ वित्तेशो जन्मनि गुरुर्वर्षे वर्षेशतां दधत् ॥ यद्भावगस्तमाश्रित्य लाभदो लग्न आत्मनः ॥ वित्ते सुवर्णद्रव्या
देर्भ्रात्रादेस्सहजर्क्षगः ॥ पितृमातृक्ष्मादिभ्यो वित्तं सुहृदि पंचमे॥सुहृत्तनयतः षष्ठेरिवर्गाद्धरिभीतिदः॥ स्त्रीभ्यो द्यूनेऽष्टमे मृत्युरर्थहेतुः
पथोङ्क ९ गे ॥ खे १० नृपादेर्नृपकुलादाये ११ त्ये १२ व्ययदो भवेत् ॥ यादवः ॥ तनुगे सबले जनौ धने शरदर्के तनुपेत्थशा
लिनि ॥ शुभदृश्यथ तुंगगेहगे बहुवित्तं निजवंशजं नृपात् ॥ जननाब्दकयोर्धने तमो ग्रसति द्रव्यमसौम्यदृग्युतः ॥ जीर्णताजिके ॥
चंद्रो लग्नपतिर्वापि धनपस्याग्रगो भवेत् ॥ तदा न धनलाभः स्याद्धनहानिर्भवेद्ध्रुवम् ॥ धने लग्नपतिर्द्यूने वित्तपो धनलाभकृत् ॥
धने शुक्रेंदुगुरवो यदा लाभस्तदा नहि ॥ चरराशौ लग्नगते पापे च समवस्थिते ॥ अर्थानामादिशेद्धानिं तत्र वर्षे सुनिश्चितम् ॥
तेजःसिंहः ॥ अर्थे गुरौ जनुषि तद्दृशि वा नृपादेः प्राप्तिस्सवांगगशुभैर्द्धनगैश्च वर्षे ॥ सौम्यग्रहो जनुषि पूर्णबलो धने चेत्तत्र स्थितोऽब्द
समयेपि तदा धनं स्यात् ॥ द्रव्ये च वीर्ययुजि किम्बहुधा धनं स्याद् द्रव्यस्य हानिरधमेऽखिलमित्थमूह्यम् ॥ भानौ नभोयुजि सिवेच्च
नभःस्थितेऽब्दे स्याल्लग्नयुग्मुथशिले विभुता स्वमानात् ॥ मन्दोऽब्दपोऽब्दसमयेपि मृतावसौम्यदृग्भुक्तिभाङ्मृतिकरस्तनुपेत्थशाली ॥
उत्तरतन्त्रे ॥ शीतांशुलग्नेश्वरवित्तनाथाः परस्परं संयुतवीक्षिताश्च ॥ धनत्रिकोणोदयगा यदा स्युस्तदार्थलाभम्प्रवदेन्नराणाम् ॥
शशांकजीवज्ञसिता बलाढ्या वित्ताय धर्मात्मजकण्टकस्थाः ॥ स्वोच्चादिगास्स्युर्न च पापयुक्ताः कुर्वन्ति लाभम्प्रचुरं सुशीघ्रम् ॥
शीतांशुवित्तेश्वरलग्नपानां कम्बूलयोगे प्रचुरोर्थलाभः ॥ लग्नेशवित्तेश्वरयोश्च नक्तयोगेऽन्यमर्त्याद्धनमेति पृच्छकः ॥ वित्तश्चवीर्याढ्य
यमयाख्ययोगे द्वयोश्च पापार्दितयोर्न वित्तभाक् ॥ क्रूरैर्द्धनस्थैश्शुभदृष्ट्युतैर्दूरे चिरादल्पधनस्य लाभः ॥ पापेक्षितैर्वित्तगतैश्च
पापैर्द्धनस्य नाशश्चिरसञ्चितस्य ॥ लग्नेशवित्ताधिपतीत्थशालो यस्मिन् हि भावे शुभवीक्षितः स्यात् ॥ तन्व१ र्थ २ भ्रातृ३सुहृ४
त्सुता ५ रि ६ जायासु ७ तद्धारत एति लाभम् ॥ धर्मे ९ थ धर्माद्गगने १० क्षितीशाल्लाभे स्वमित्राद्व्ययगेव्ययादिः ॥ लग्नेश
वित्ताधिपतीत्थशाले रंध्रे धनाप्तिर्धनबन्धयुद्धात् ॥ वित्तेश्वरो लग्नगतः कुटुम्बे २ लग्नेश्वरः स्याद्धनगे नराणाम् ॥ लग्नार्थपौ
वित्तगतौ विलग्ने वित्तोदयेशौ सुखवित्तदौ स्तः ॥ लग्नेशवित्ताधिपती विलग्ने निरीक्ष्यमाणौ गुरुचन्द्रमोभ्याम् ॥ शुभौ च तौ वीर्य

युतौ विशेषात् प्रष्टुः प्रकुर्युः प्रचुरार्थलाभम् ॥ वित्तेशजीवस्सित इन्दुजो वा पूर्णश्शशांको वृषकर्कमाश्रितः॥ निरीक्षितो वा सहितः शुभग्रहैः पापैर्विहीनो गगनार्थलाभगः ॥ प्रष्टुः प्रभूतार्थसुखास्पदप्रदः देवेज्यचंद्रात्मजभार्गवाणाम् ॥ एकोपि तुङ्गे स्वगृहे बलाढ्यो लग्ने धने कर्मणि वा त्रिकोणे स्थितः प्रकुर्यात्सहसार्थलाभम् ॥ अथ धर्मभावस्थितानां सूर्यादीनां फलानि पद्मकोशे ॥ कुटुम्बाद्विरोधो नृपाद्भीतिकष्टं धनार्तिर्धनस्थे रवौ मानवानाम् ॥ पशूनाम्प्रपीडोदरे चापदः स्युः ससौम्यान्वितो द्रव्यलाभं करोति ॥ १ ॥ कुटुंबाज्जयं मित्रपक्षाच्च लाभन्धनाढ्यन्धनस्थश्शशांकः प्रकुर्यात् ॥ रिपूणां विनाशन्तथा नेत्रपीडाम्भवेदब्दमध्ये नृपात्सौख्यकारी ॥ २ ॥ धनस्थो धरण्यात्मजो द्रव्यलाभं शिरोर्तिञ्जनानां विरोधं करोति ॥ तथौदर्य्यवह्नेर्भयं शोकमोहौ कलत्रेक्षि रोगं करोतीह वर्षे ॥ ३ ॥ धनस्थः सुतः स्याद्यदा शीतरश्मेर्भवेद्द्रव्यलाभः कुटुंबाज्जयश्च ॥ रिपोर्नाशनं मानकीर्त्योर्हि लाभः प्रतिष्ठाधिका हायने स्यात्सुखं च ॥ ४ ॥ कुटुम्बराशौ च गते सुरेज्ये धनादिभोगाँल्लभते मनुष्यः ॥ चतुष्पदानाञ्च समागमः स्यात्तद्धायने भूपजनाच्च लाभः ॥ ५ ॥ धनस्थे कवौ धान्यलाभो धनाप्तिर्भवेन्म्लेच्छजातेः सुखं सम्पदाञ्च ॥ नरो राजतुल्यो भवत्यत्र वर्षे पशूनां हयानां गृहे स्यात्सुखं च ॥ ६ ॥ दिवानाथपुत्रो धनस्थो धनानां विनाशं विधत्ते कुटुंबाद्विरोधम् ॥ प्रकुर्याच्च नेत्रोदरेषु प्रपीडां कफार्तिश्च वर्षे भवेत्सर्वदैव ॥ ७ ॥ जनापवादश्च कुटुंबगश्चेत्तमस्तथा भूपभयं करोति ॥ नेत्रोदरव्याधिभयार्ति दोषाद्धनापहारश्च भयं तथाब्दे ॥ ८ ॥ मणित्थः ॥ रिपुराजानलैश्चौरैर्विवादं विभवव्ययम् ॥ कुटुम्बकलहं वर्षे द्वितीयो भास्करो यदि ॥ १ ॥ इष्टस्थानगतं सौख्यन्धनाप्तिश्श्वेतवस्तुतः ॥ शरीरं परमारोग्यं द्वितीये रजनीकरे ॥ २ ॥ वह्निचौरनृपादिभ्यो भयं वा विभवक्षयम् ॥ दृशो रुक्कामिनीकष्टन्धनस्थे धरणीसुते ॥ ३ ॥ शरीरन्नीरुजन्नित्यन्द्रव्यलाभो भवेन्नृणाम् ॥ इष्टस्वजनजं सौख्यं रौहिणेये कुटुम्बगे ॥ ४ ॥ धनलाभन्तथारोग्यम्प्रमोदो बंधुवर्गतः ॥ प्रचण्डैस्सदृशम्भोगन्देवेज्यो धनगो भवेत् ॥ ५ ॥ धनलाभं सुहृद्वृद्धिः स्त्रीसुखं शत्रुसंक्षयम् ॥ कान्तिवृद्धिर्नृणां देहे दैत्येज्यो धनगो यदि ॥ ६ ॥ पीडा वक्रे तथा नेत्रे धननाशो नृपाद्भयम् ॥ पुत्रजायादिकष्टश्च द्वितीये रविनंदने ॥ ७ ॥ धनव्ययमनारोग्यं चिंतावस्थादिपीडनम् ॥ वक्रे लोचनपीडा च धनस्थे सिंहिकासु

ते ॥ ८ ॥ इति धनभावविचारः ॥ अथ सहजभावविचारः ॥ तत्र सहजभावे किं चिंतनीयमित्युक्तं चंण्डेश्वरेण ॥ शूरानुजक्षेत्रसमृद्धिलाभभृत्यादिमार्गं च वदेच्च कर्तुः॥यात्रादिचिन्तानिनयं समग्रं पर्य्यायमेतत्कथितं तृतीये॥अत्रापि सौम्यस्वामियुतदृशैः पूर्ववद्विचारः ॥ वामनः॥सूर्ये सिते वा वर्षेशं सहजे भ्रातृतः सुखम्॥शुभदृष्ट धनैः सार्धं कलहः पापवीक्षिते ॥ शुक्रे दग्धे झकटकस्तैः सार्द्धं कष्टदं फलम् ॥ जीवे सहजगेसौख्यं सोदराणां प्रजायते॥अत्र जीवे तृतीयभावे पितुराकुलता सोदाराणाञ्चेति समरसिंहोक्तं दृष्टफलं निर्बलगुरोर्ज्ञेयम्॥तदुक्तं यादवेन॥ धिषणे सबले समाधिकारे सहजस्थे सहजोत्थसौख्यमस्मिन् ॥ अशुभेक्षितयुग्विनष्टदग्धे सहजाद्व्याकुलतातिदुःखिता च ॥ भ्रातृसौख्यं विलग्नाब्दनाथयुक्सहजेश्वरे विधौ सहजगे सारे भ्रातॄणामरुचिर्भवेत् ॥ तत्र स्थितो वधः सौम्येक्षितोनुजाविवृद्धिकृत् ॥ भ्रातृसद्मेश्वरे नष्टे रुजो नाशस्तदा भवेत् ॥ तस्मिन् चाप्युदिते वीर्ये युते भ्रातृसुखं भवेत् ॥ तेजःसिंहः ॥ स्वस्वामिसौम्येक्षित भ्रातृगेहे लग्नाधिनाथेन निरीक्षितो वा ॥ केन्द्रे त्रिकोणायगते तदीश सुखं समुत्थैर्बहुलं प्रकल्प्यम् ॥ लग्नाब्दमुग्मुथशिले सहजे तदीशे दूरेहि सोदरगणे युतसौख्यदेपि ॥ वादस्तु मूसरिफतोत्र मिथो शुभेक्षे सारे त्रिधौ सहजगे सहजातुरत्वम्॥ जन्माब्दपस्तु सबलो न च वृद्धिराज्ञो ह्येवं गुरौ सहजगेऽखिलबंधुयोगः॥युक्ते निजेशसहमे सदृशाब्दपः स्युर्भ्रातर्यमी शुभयुते तु निजेशनाशात् ॥ अस्ते तृतीयपतितस्तनुपेब्दपे वा वादो मिथः स्वपरभावपतेरपीत्थम्॥भ्रात्रीश्वरे जनुषि तादृशि वापि वर्षे तत्स्थे शुभेक्षितयुते सहजेषु सौख्यम्॥समरसिंहः॥ सहजपतौ सहजस्थेधिकारवर्त्तिलग्नपस्य मुथशिलिनि ॥ वर्षपतेर्वा सोदरयोगात् प्रीतिर्द्वयोः सौख्यम् ॥ वर्षतन्त्रे ॥ क्रूरेसराफे कलहः शनौ भौमर्क्षे १ । ८गे रुजः ॥ज्ञर्क्षे ३ । ६ सृज्यनुजे मांद्यं वदेत्सहजगे स्फुटम् ॥ क्रूरेसराफं क्रूरदृशा लग्नेशाब्देशयोः सहजेशेनेसराफयोगे मंदर्क्षगे १० । ११ मृतिबुधे कजर्क्षे सहजे शुभैः युतेक्षिते सोदराणां मिथः सौख्यं बहु ॥ वीर्यान्वितेन्दुगृहगो भृगुजोऽधिकारी सूत्यब्दपोः सहजबंधुगणस्य वृद्ध्यै ॥ अत्र तेजःसिंहेन ग्रहाणा स्थानान्युक्तानि स्थाने कुजशुक्रे इति जीर्णताजिके ॥ जन्मलग्नाब्दलग्नेशौ बुधशुक्रौ बलान्वितौ ॥ सहजे सहजातसौख्यं गुरौ चत्र फलं वदेत् ॥ विक्रम ३ स्तत्पतिर्वापि यदि सौम्यग्रहेक्षितः ॥ निराकुलस्तदा बन्धुर्दुःस्थः क्रूरग्रहे स्थितः ॥ रिपौ विक्रमयंस्तिष्ठेत्तद्गृहे ३ रिपु

राशिपः ॥ भ्रातृपे क्रूरदृष्टे वा भ्राता रोगेण पीडितः ॥ सहजाधिपतिः केन्द्रे बली सहजसौख्यदः ॥ सहजे पापसंयुक्ते स्वाम्यदृष्टेनुजे भयम् ॥ एवञ्च भ्रातृसहमे फलं ज्ञेयं प्रयत्नतः ॥ अधिकारी भृगुर्वर्षे सर्वे वा चन्द्रसंयुतः ॥ वर्षे स्याद्यत्र कुत्रापि सहजानां सुखप्रदः ॥ यादवः ॥ अशुभेक्षितयुते सरोजबन्धौ सति दग्धे स्वपतौ न तेन दृष्टे ॥ जननीसहमेशदृष्टिहीने व्यसनं बन्धषु नूनमत्र वाच्यम् ॥ जनिबंधुपतौ समाविनष्टे जननीसद्मपतावपीह नष्टे ॥ खलखेचरयोगदृष्टिहीने व्यसनं बन्धुषु उग्रमेव वाच्यम् ॥ जनिबन्धुगतेब्दवन्धुगेस्मिन्सबलेंगाब्दपतीत्थशालयोगे ॥ परदेशगबन्धुयोगसौख्ये खलदृष्ट्या मुसरीफके बालिस्तैः ॥ जीवास्पदब्द सहजे सुरेज्ये बलोत्कटे वन्धुसुतादिहर्षाः ॥ सक्रूरयोर्बन्धुभसद्मनोर्वा दग्धेशयोस्स्याद्व्यसनाप्तिरेषाम् ॥ सहजाधिपतौ च केन्द्रग सहजे वा सहजात्सुखं प्रदिष्टम् ॥ स च बन्धुसमाज्ञसौम्यखेटाधिकृतौ बन्धुजसौख्यमस्य वर्षे ॥ सहजस्य तु सौम्यपापयोगात्सहशे सशुभेपि सौख्यमेवम् ॥ उत्तरतंत्रे ॥ दुश्चिक्यनाथस्सहजं प्रपश्येत्सौम्यास्तृतीयं सहजेश्वरञ्च ॥ पश्यन्ति नान्ये त्वशुभास्तदास्य स्वस्थः प्रवाच्याः खलु बान्धवाश्च ॥ षष्ठेशदुश्चिक्यपतीत्थशाले षष्ठे स्थिते वा सहजेश्वरे वा ॥ तृतीयगे षष्ठपतौ च पापे क्रूरेक्षिते वा सहजागदार्ताः ॥ अथ सहजभावस्थितानां सूर्यादीनां फलानि पद्मकोशे ॥ तृतीयगोर्कोपि सहोदराणां पीडां करोत्येव हि वर्षमध्ये ॥ पराक्रमं राजक्रियाञ्च लक्ष्मीं रिपुक्षयं कान्तिविवर्द्धनञ्च ॥ १ ॥ तृतीयस्थितः शीतरश्मिर्यदा स्यात्तदा सोदराणां भवेत्सौख्यकारी ॥ धनाप्तिञ्च पुण्योदयं गुप्तसाख्यं प्रतिष्ठाविवृद्धिं करोतीह वर्षे ॥ २ ॥ तृतीयस्थिते क्ष्मासुते बान्धवानां भवेदंगकष्टं सुखं वाहनानाम् ॥ रिपूणां विनाशस्तथा द्रव्यलाभो नृपान्मित्रपक्षाज्जयो हायनेस्मिन् ॥ ३ ॥ शशिसुतः सहजे यदि संस्थितस्सकलतापविनाशकरस्तदा ॥ भवति मानविवृद्धिरथो यशस्तनुसुखं च करोति धनागमम् ॥ ४ ॥ तृतीयसंस्थः सुरराजमंत्री भूपाज्जयं कीर्तिविवर्द्धनञ्च ॥ सस्याम्बराणाञ्च तथा धनानां करोति वृद्धिं महतीं च वर्षे ॥ ५ ॥ भृगुस्तृतीयो हि सहोदराणां सुखं प्रकुर्याद्विविधैः प्रकारैः ॥ अर्थागमं कांतिविवर्द्धनञ्च जनोपकारञ्च करोति वर्षे ॥ ६ ॥ रविसुतो भवतीह तृतीयगो रिपुविनाशकरो हि धनप्रदः ॥ भवति भूधनलाभकरस्तदा ॥ स्वजनबंधुविरोधकरश्च सः ॥ ७ ॥ शशिविमर्दकरस्तु तृतीयगो धनयु

तन्नरराजसमन्नरम् ॥ प्रकुरुते पशुवाहनसंयुतं सहजपीडनमाशु करोत्यसौ ॥ ८ ॥ मणित्थः ॥ राजमानं तथारोग्यं धनलाभं रि
पुक्षयम् ॥ सर्वोपक्रमसिद्धिश्च तृतीयेऽब्दे दिनाधिपे ॥ १ ॥ सुखं लाभं भयं पुंसां धनागममनुक्रमात् ॥ धर्मे बुद्धिर्भवेत्पुंसां तृती
यस्थे हिमद्युतौ ॥ २ ॥ नृपमानधनप्राप्तिरिपुनाशो निरामयम् ॥ गेहे महोत्सवं नित्यं तृतीये भूमिनंदने ॥ ३ ॥ लाभाला
भं सुखं दुःखं शत्रुमित्रैश्च संगमम् ॥ वर्षकाले यदा चान्द्रिः सहमे कुरुते नृणाम् ॥ ४ ॥ तृतीयेऽल्पसुखं लाभं सुहृद्बंधुसमागमम् ॥
नृणां स्त्रीपक्षतः सौख्यं सेवायाश्च सुखं गुरौ ॥ ५ ॥ तृतीयेल्पसुखं पुंसां धनव्यय उपद्रवः ॥ विवादस्स्वजनैस्सार्द्धं वर्षे दैत्य
पुरोहिते ॥ ६ ॥ सर्वदुःखादिमोक्षश्च राजमानन्धनागमम् ॥ वर्षकाले यदा सौरिस्तृतीये कुरुते नृणाम् ॥ ७ ॥ राजमानन्तथैश्वर्य
मारोग्यं विभवागमम् ॥ शत्रुक्षयं सुहृत्सौख्यं राहौ वर्षे तृतीयगे ॥ ८ ॥ इति सहजभावविचारः ॥ अथ चतुर्थभावविचारः ॥ तत्र चतुर्थ
भावे किंचिंतनीयमित्युक्तश्चण्डेश्वरेण ॥ गृहं विधानं विवरप्रवेशो लतौषधिक्षेत्रखलादिवापी ॥ मित्रन्धृतस्त्रीपरपुम्प्रयोगो गमागमौ यान
सुखादिकञ्च ॥ स्थानच्युतिर्लाभगृहप्रवेशौ बुद्धिर्जनित्री जनकश्च तद्वत् ॥ देशादिकार्याण्यपि लाभमस्य विचिंत्यमेतत्तु चतुर्थभावे
॥ ३ ॥ अत्रापि विचारः पूर्ववज्ज्ञेयः ॥ यादवः ॥ अर्के च चन्द्रे सखले चतुर्थे पितुश्च मातुः क्रमशः प्रपीडा ॥ सूर्ये दुष्टस्थानगतेर्के
जेत्र ताभ्यां विरोधो ह्यपमानता च ॥ जन्मस्थे सूर्य्यचंद्रराशिगे शनौ वर्षे ॥ जन्माब्दयोस्तुर्यपती सवीर्यौ नष्टान्यभस्थौ तु ससौम्यमम्बु ॥
सुखं तयोस्स्यादसुखं विलोमादर्केन्दुमेतत्सुखमीज्यकाव्ययोः ॥ भेस्थाने सूतौ भवेद्योहिबुकेऽब्दके च तस्मिंस्तु मंदारयुते विशेषात्पित्रोर्वीर्थं
स्यादपवादगेहक्षेत्रादिकानामिदेव मूह्यम् ॥ तेजःसिंहेन ॥ जन्मचतुर्थभावाधीशस्थानेशनिभौमयुते पित्रोरशुभमित्युक्तम् ॥ पित्रोरुजोऽब्दजनुषोश्च
सुखेशदग्धे शन्यारयोस्सनसुखेशपदेपि चैवमिति ॥ ताजिकभूषणे कुर्याद्विलुप्तो विजितोरिभीतिम्पितुस्सुखेशस्सहमेश्वरो वा ॥ जीर्णता
जिके ॥ सुखसंस्थे सुखाधीशे वा लग्नेशेत्थशालके ॥ पित्रोस्सुखं मूसारिःफे तयोर्दुःखं प्रजायते ॥ सुखं पश्यति तुर्येशो तुर्ये च सहमे
श्वरौ ॥ मातापित्रोः सुखं तत्र वर्षे भवति निश्चयात् ॥ मातापित्रोश्च सहमे क्रूरिते मुथहा तयोः ॥ दशमस्था तदा दुःखम्पित्रोस्स्या
द्यवनाविदुः ॥ जन्मकालेम्बु भवनं तदीशो वाब्दवेशने ॥ दग्धे क्लेशो भवेत्पित्रोर्वातत्स्थानेऽर्कभूमिजौ ॥ वामनः ॥ मातापित्रोः सद्मनाथे

नष्टेनाशस्तयोर्भवेत् ॥ उदिते वीर्ययुक्ते च तयोः सौख्यं प्रजायते ॥ वर्षतंत्रे ॥ मातुः पितुश्च सहमे तनुपेत्थशाले तुर्येपि वेत्थमवगच्छ सुखानि पित्रोः ॥ चेदष्टमाधिपतिना कृतमित्थशालं पित्रोर्विपद्भयमनिष्टखगेसराफे ॥ १ ॥ ग्रन्थान्तरे ॥ लग्नाधिपेनेंदुना च मुथशीलं सुखेश्वरः कुरुते सौम्ययुग्दृष्टो गृहभूम्यादिलाभदः ॥ लग्ने सुखेश्वरश्चन्द्रस्तद्राशौ तुर्यसंस्थितौ ॥ सौम्ययुक्तेक्षितौ वर्षे गृहभूम्यादिलाभदौ ॥ लग्ने लग्नेशतुर्येशौ तुर्ये वा लग्नतुर्यपौ ॥ चन्द्रान्वितौ वा सौम्याढ्यौ गृहभूम्यादिलाभदौ ॥ हायनसिंधौ ॥ जीवेंदू केंद्रगौ स्यातां सुखे वा जीवभार्गवौ ॥ निधानस्य भवेल्लाभः कृते यत्ने च वत्सरे ॥ चंद्रार्कगुरुशुक्राणामेकः स्वांशे सुखेश्वरः स्वकीयां परकीयां वा निधिं दद्याद्बली ग्रहः ॥ तुर्यलग्नेश्वरौ युक्तौ दृष्टौ सौम्यग्रहेण वा ॥ तत्र मित्रेण संयोगे वर्षे भवति निश्चयात् ॥ लाभेशस्य फलं ज्ञेयं पूर्ववन्मित्रसंगमे ॥ लग्नं स्वस्वामिना दृष्टं तन्मित्रेणाथ संयुतम् ॥ चतुर्थे च तदा वर्षे देशसंपत्तिमादिशेत् ॥ सुहृदंशेन संयुक्ताद्वीक्षिताद्वा चतुर्थभात् ॥ गुरुज्ञशुक्रैर्युक्ताद्वा वीक्षिताच्छशिनापि वा ॥ सुखवाहनवृद्धिं च वर्षे तत्र विनिर्दिशेत् ॥ लाभे वा निधने वापि यदि पापो व्ययस्थितः ॥ चतुर्थे च सपापे च तदा दुःखागमं वदेत् ॥ हिल्लाजः ॥ सुखाधीशस्य दशमं तस्मात्सप्तमकर्मभे ॥ शुभे लाभाय सौख्यस्य विनाशायाशुभान्विते ॥ सुखभावे शुभैर्दृष्टे शुभग्रहयुतेथवा ॥ धृतभार्यालाभयोगः शुक्रदृष्टो विशेषतः ॥ चतुर्थे क्रूरदृष्टस्तु शुभदृष्टिविवर्जितः ॥ धृतभार्यामरणदो वर्षे प्रोक्तः पुरातनैः ॥ अथ चतुर्थभावस्थितानां सूर्यादीनां फलानि पद्मकोशे ॥ पशोः पीडनं तुर्यसंस्थे रवौ स्यात्कृपेः कर्मणो हानिरत्यन्तमुक्ता ॥ नृपाद्भीतिकष्टं भवेन्मातृपीडोदरे हृद्यपि स्यात्प्रपीडाब्दमध्ये ॥ १ ॥ शशांके चतुर्थे च भूपाज्जयस्स्यात्कृपेः कर्मणो लाभवान्स्यात्सुखीच ॥ धनाप्तिःक्रये विक्रये वाब्दमध्ये सुखं वाहनानां रिपोर्नाशनञ्च ॥ २ ॥ चतुर्थे कुजे वह्निपीडान्तथार्तिम्पशोः पीडनं व्यग्रतां क्लेशकष्टम् ॥ कृशे कर्मणो हानिमप्येव कुर्यात्क्रये विक्रये चाब्दमध्ये तथैव ॥ ३ ॥ बुधश्चतुर्थः प्रकरोति सौख्यं द्रव्यागमं मित्रसमागमञ्च ॥ गोभूहिरण्यादि लभेत सौख्यं महत्सुखं वाहनमत्र वर्षे ॥ ४ ॥ सुरेज्ये सुखस्थे सुखं वाहनाना क्रये विक्रये लाभकारी जनस्य ॥ भवेद्भूपपक्षाज्जयो हायनेस्मिन् महालाभदः स्यात्कृपेः कर्मणा च ॥ ५ ॥ प्रथमदैत्यगुरुस्सुखगो यदा सुखकरः कृषिवाहनयोस्तदा ॥

धरणिवाजिसुवर्णसमागमो भवति भूपसमो मनुजस्तदा ॥ ६ ॥ बन्धुस्थानगतो दिवाकरसुतस्स्याद्धायने कष्टदो भीतिं हानिमुपक्रमे च कुरुते नेत्रोदरे पीडनम् ॥ बन्धूनामथ पीडनम्प्रकुरुते लोकापवादं वृथा वह्नेश्चापि भयं पशोश्च मरणं हानिं कृषीणान्तथा ॥ ७ ॥ हिमांशो रिपुस्तुर्यगो वाहनानां विनाशन्तथा भूपपक्षाद्भयञ्च ॥ कफार्तिञ्च कष्टन्तथा वायुपीडां विदेशे भ्रमं हायनेस्मिन् करोति ॥ ८ ॥ मणित्थः ॥ इष्टस्तु जनविद्वेषं भयं भूपालसंभवम् ॥ चतुष्पदमनुष्याणां भयं सूर्ये चतुर्थगे ॥ १ ॥ सुहृद्बंधुकलत्रादिसौख्यञ्चैव धनागमम् ॥ गोमहिष्यादिलाभश्च चतुर्थे यदि चंद्रमाः ॥२॥ देशाटनं च संकष्टं सुहृद्दुःखं सुहृत्क्षयम् ॥ कुटुम्बकलहश्चैव चतुर्थे भूमिनन्दने ॥ ३ ॥ मित्रस्त्रीबन्धुजं सौख्यं चतुरंघ्रिधनागमम् ॥ वर्षे चतुर्थगश्चांद्रिः कुरुते नियतन्नृणाम् ॥ ४ ॥ जायापुत्रसुहृत्सौख्यं नृपमानं धनागमम् ॥ भूमिवाहनविख्यातिश्चतुर्थे हायने गुरौ ॥ ५ ॥ नृपमानमथैश्वर्यमारोग्यं विभवागमम् ॥ मित्रस्वजनजं सौख्यं हायने हिबुके भृगौ ॥ ६ ॥ मातृपक्षे भवेत्कष्टं प्रवासं च धनक्षयम् ॥ असंतोषो राजपीडा चतुर्थे रविनंदने ॥ ७ ॥ चिंता दुःखं प्रवासश्च प्रवादस्स्वजनैस्सह ॥ चतुष्पदाः क्षयं यांति राहुस्तुर्यगतो यदि ॥ ८ ॥ इति चतुर्थभावः ॥ ४ ॥ अथ पञ्चमभावविचारः ॥ तत्र पञ्चमभावे किं विचारणीयमित्युक्तं चण्डेश्वरेण ॥ ५ ॥ नानाप्रयोगो विनयप्रबंधा विनेयविद्यानयबुद्धिमंत्राः ॥ संधानगर्भाङ्गभवादिकिञ्चित्प्रज्ञासुताख्यं सुतसंज्ञभावे ॥ ६ ॥ अत्रापिविचारः पूर्ववत् ॥ समरसिंहः ॥ वर्षपतौ सति जीवे पुत्रे चापे च पुत्रतः सौख्यम् ॥ क्रूरार्दिते च दुःखं भौमेप्येवं फलं तादृक् ॥ रविबुधयोरप्येवंस्थितयोः शुभसंयुते फलं पूर्णम् ॥ वर्षपतौ सुतसहमे शुभदृष्टेऽपत्यसंतोषः ॥ शुक्रे सुतसप्तपतौ वर्षे तत्स्थानगे च तनुपतिना ॥ कृतमुथशिले च तनयं युवतिप्राप्तिः स्वबलप्रमाणेन ॥ अत्र जन्मनि पंचमसप्तमभावाधिशे शुक्रे वर्षे पंचमस्थे लग्नेशेन कृतेत्थशाले क्रमेण पुत्रस्त्रीप्राप्तिः स्यादित्यर्थः ॥ तेजःसिंहः ॥ जीवास्पदे जनुषि तत्र गतेत्र चाब्दे सौख्यं सुतादसुखमित्थमिनात्मजे तु ॥ एवं बुधे सुतसुखं न च तत्सभौमे चैवं सुते शनिपदेप्यबले तदीशे ॥ अत्र विशेषमाह समरसिंहः ॥ मन्दस्थानगपुत्रे तन्नाथे ज्ञेधिकारिणि तु पुत्राप्तिः ॥ भौमेन्दुजौ शुभगृहे शुभवीक्षितौ चेल्लाभे सुतेपि च तदा सदपत्यसौख्यम् ॥ पुत्राधिपे भृगुसुते तु कलत्रपांगनाथेत्थशालकृति पुत्रकलत्रसौख्यम् ॥

ताजिकसारे ॥ देवार्चिते जन्मनि यत्र राशौ वर्षेशराशिर्यदि पञ्चमस्थः ॥ तत्र स्थिते वर्षपतौ बुधे वा भौमेपि वा पुत्रसमुद्भवस्स्यात् ॥ यद्राशिगो जन्मनि भानुसूनुर्वर्षे च तद्राशिगतं विलग्नम् ॥ सन्तानकष्टश्च कुजस्सुतस्थो त्रिलोमगः पुत्रहरो निरुक्तः ॥ सुतगतस्सुतपस्सबलो यदा सुतसुखं बहुलं कुरुते तदा ॥ यादवः ॥ सुते सवीर्ये शुभयुग्निरीक्षिते सुतेश्वरे केन्द्रगते बलान्विते ॥ तथैव साब्दे सुतसौख्यमीरितं सुतात्ययस्याद्विपरीतगे तथा ॥ बुधक्ष्माजौ च शुभा ९ स्पदा १० य ११ धी ५ गतौ भवेतां शुभदृग्युतौ सुखम् ॥ जनुस्सुतेशेब्दकलत्रगे भृगौ तनूपमुख्याख्ययुतौ सुखं भवेत् ॥ सुतौ पुत्रगतौ समा तनुगतेङ्गेशेत्थशाले बलोद्रिक्ते पुत्रसुखं जनुस्सुतपतौ साब्दे खेरेऽब्देथवा ॥ व्यस्ते वा सुतगे शुभे शुभमथो क्रूरार्दिते निर्बले सूतौ सूनुपतौ च दुःखमतुलं साब्देपि साब्देश्वरे ॥ वामनः ॥ पुण्यसद्मनि पुत्रस्थे पुत्राप्तिः शुभवीक्षिते ॥ लग्नपुत्रेश्वरौ पुत्रे शुक्रश्चंद्रोथवा गुरुः ॥ पुत्रदः पुत्रभवनं यदुच्चं सद्ग्रहो यदि ॥ स्वोच्चम्प्रयाति त्वरितं पुत्राप्तिस्तु तदा भवेत् ॥ पुत्रसद्मेश्वरे नष्टे पुत्रनाशं समादिशेत् ॥ तस्मिन्नभ्युदिते पुत्रस्थिते पुत्राप्तिमादिशेत् ॥ वर्षतन्त्रे ॥ यत्रेज्यो जनुपि गृहे त्रिलग्नमे तत्पुत्राप्त्यै बुधसितयोरपीत्थमूह्यम् ॥ यद्राशौ जनुपि शनिः कुजश्च सोब्दे पुत्रार्तिं तनु १ सुतगः ५ करोति नूनम् ॥ यद्राशिगो ग्रहस्सूतौ स राशिस्तत्पदाभिधः ॥ बली जन्मोक्तसौख्याय वर्षे तद्दुःखदोऽन्यथा ॥ चेत्पदाभिधो राशिर्वर्षे बली तदा जन्मकालीनतद्भावोत्थशुभफलजनको भवति निर्बलश्चेत्तदा तद्भावोत्थाशुभफलजनको भवतीति ज्ञेयम् ॥ हिल्लाजः ॥ यदि लग्नेशपुत्रेशौ मित्रोच्चोपचयर्क्षगौ ॥ गुरुज्ञवीक्षितौ युक्तौ पुत्रसौख्यकरौ मतौ ॥ लग्नात्केन्द्रत्रिकोणस्थौ विषमांशगतावुभौ ॥ पुत्रजन्मप्रदावेतौसमांशे स्त्रीजनिप्रदौ नीचास्तारिगतावेतौ यदि वक्रग्रहान्वितौ ॥ तद्योगघातकावेतौ समर्क्षे विषमेपि वा ॥ अत्र संतानयोगकर्तारो ग्रहा विषमर्क्षेविषमनवांशे वा स्थिताः पुत्रजन्मकराः समभे समनवांशे च कन्याजन्मकरास्स्युरिति विशेषः ॥ जीर्णताजिके ॥ लग्ने पुत्राधिपः पुत्रे लग्नेशो यदि संस्थितः भावी पुत्रस्तदा वर्षे वक्तव्य इति निश्चितम् ॥ शुक्रेन्दू लाभसुतगौ पश्यतो वा यथाक्रमम् ॥ सुतात्सौख्यं सुतं लाभात्संततिस्तत्र वत्सरे ॥ गर्भे गर्भाधिपस्तुङ्गे पुमान्सर्वग्रहेक्षितः ॥ भावी नृपस्तदा पुत्रः स्त्रीग्रहः स्यात्तदाङ्गना ॥ पापखेटस्थितो गर्भे

५ गर्भेशेनैव वीक्षिते ॥ तदा गर्भच्युतिर्वाच्यान्यथा चेद्गर्भसंस्थितिः ॥ सुतार्धीश लाभगते शुभयुक्तेऽथ वीक्षितं ॥ वा लग्नपात्रि
कोणस्थे पंचमेशे शुभेक्षिते ॥ तथैव गर्भसहमे शुभस्वामियुतेक्षिते ॥ तस्मिन्वर्षे भवेद्गर्भमित्याह यवनेश्वरः ॥ जीवक्षेत्रगते चन्द्रे
शुक्रक्षेत्रगते कुजे ॥ स्वक्षेत्रस्थे भृगुसुते तदा गर्भन्न संशयः ॥ लग्नाधिपस्सुतस्थाने जायास्थानगतोपि वा ॥ सुतजायाधिपौ लग्ने
तदा गर्भस्तु योषितः ॥ जन्मलग्नात्त्रिकोणस्थः शनिः पुत्रे गुरुर्यदि ॥ तस्मिन्वर्षे भवेद्गर्भे देवशालमुनेर्मतम् ॥ विद्यागृहं चंद्र
बुधेज्यशुक्रैर्युतेक्षितं वा स्वनवांशकं वा ॥ वा स्वामिना दृष्टयुतं तदाब्दे सत्स्फूर्तिविद्यारुचिबुद्धिभावः ॥ विद्यागृहं क्रूरखगेन
युक्तं न स्वामिना नष्टशरीरकेण ॥ चंद्रेण दृष्टं सहितं तदाब्दे फलं पुरोक्तं विपरीतकं स्यात् ॥ समरसिंहः ॥ अस्मिन्वपपत्यं मम
भविता लग्नपंचमाधीशौ ॥ भवतो यदीत्थशालं तत्रैवाब्दे भवेन्नूनम् ॥ यदि वा मिथोगृहगतौ स्यातां चेत्संततिस्तदपि वाच्या ॥
तस्मिन्वर्षे शुभयोगादन्यथा न पुनः ॥ लग्नपपुत्राधिपती न पश्यतश्चेन्मिथो भवनमूर्तम् ॥ क्रूरयुतीक्षामुथशिलमनयोस्तत्संतति
र्न स्यात् ॥ यदि सुतपतिर्विलग्ने लग्नपचंद्रौ सुतेथवा स्याताम् ॥ त्वरितमेव वाच्यं सविलंबं नक्तयोगेन ॥ द्विःशरीरे चैव लग्ने
शुभयुतपुत्रे व्यपत्यगर्भोस्ति ॥ यदि लग्नपपुत्रपती पुंखेटौ तत्सुतो गर्भे ॥ अथ चंद्रः पुंराशौ पुंग्रहकृन्मुथशिलस्तदापि सुतगर्भम्
पूर्वोदितमिश्रत्वे सूर्ये पुंखेटसंश्रिते पुत्र इति ॥ अथ पंचमभावस्थितानां सूर्यादीनाम्फलानि पद्मकोशे ॥ दिनेशे सुतस्थे सुतांगेषु
पीडा स्वबुद्धेश्च हानिर्विवादो जनानाम् ॥ भवेच्छोकमोहादिकांगे सुरागो धनार्तिश्च भूपाद्भयन्तद्दशायाम् ॥ १ ॥
सुतस्थानगो रात्रिनाथः स्वबुद्ध्या जयन्मित्रपक्षाच्चलाभं करोति ॥ सुतांगेषु पीडा भवेत्पापदृष्टस्सुतस्यापि लाभं यदा
सौम्यदृष्टः ॥ २ ॥ सुतानां प्रपीडा कुजे पंचमस्थे रिपूणां विवादो भवेद्व्यग्रता च स्वबुद्धेर्विनाशो भवेच्चापि घातस्सशो
कोदरे गुप्तपीडाब्दमध्ये ॥ ३ ॥ सुतभवनगतश्चेत्सोमपुत्रस्सुतानाम्प्रबलसुखकरस्स्यादर्थलाभप्रदश्च ॥ भृतकजनसुखं ॥५२॥
स्याद्देहशय्याम्बराणां सुखमपि नृपपक्षान्मित्रपक्षाज्जयश्च ॥ ४ ॥ सुतस्थानगो देवमंत्री सुतानाम्प्रवृद्धिस्स्वबुद्ध्या जयो हायने
स्मिन् ॥ रिपूणां विनाशं सुखं चापि भोगन्तथा गोहिरण्यांबरार्ति करोति ॥ ५ ॥ सुतानाम्प्रवृद्धिर्भृगौ पंचमस्थे भयक्लेश

चिंतापदां वै विनाशम् ॥ रिपूणां विनाशं तथा वर्षमध्ये महाभोगवन्तं धनाढ्यं करोति ॥ ६ ॥ सुतगतस्सुतहानिकरश्शनिर्भवाति चोदरपीडनकष्टदः ॥ विकलतावहुतापकरो भवेन्नृपभयं प्रकरोति च हायने ॥ ७ ॥ स्वबुद्धेर्विनाशं सुतस्थानगश्चेद्धिमांशोरिपुस्संततेः पीडनञ्च ॥ स्वकीयोदरे वायुबाधान्धनार्तिन्तथा सर्वथा क्लेशचिन्तां करोति ॥ ८॥ मणित्थः ॥ पुत्ररुक् कामिनीकष्टं विघातश्चातिमूढता ॥ द्रव्यनाशः स्वेष्टदुःखं वर्षे पञ्चमगे रवौ ॥ १ ॥ स्त्रीसुखं विजयम्मानं राजपूजाधनागमम् ॥ सद्बुद्धिं सन्ततेस्सौख्यं यदा पुत्रोपगः शशी ॥ २ ॥ पुत्रार्तिः कामिनीकष्टं व्याधिश्चैवोदरे नृणाम् ॥ दुर्मतिस्स्वजनैर्वादः पञ्चमे भूमिनन्दने ॥ ३ ॥ जायापुत्रसुहृत्सौख्यं मानं भूपालसम्भवम् ॥ प्राप्यते बुद्धितो द्रव्यं पञ्चमे शशिनन्दने ॥ ४ ॥ सद्बुद्धिः सन्ततिप्राप्तिः सौख्यं लाभो भवेन्नृणाम् ॥ मन्त्रविद्यादिजं सौख्यं पञ्चमस्थे सुरार्चिते ॥ ५ ॥ जायापुत्रादिकं सौख्यं सद्बुद्धिविभवागमम् ॥ मन्त्रोपदेशे कौशल्यं पंचमे भृगुनंदने ॥ ६ ॥ जायापत्यसुहृत्कष्टं दुष्टबुद्धिर्धनक्षयः ॥ उदरे वातपीडा च पञ्चमे रविनंदने ॥ ७ ॥ पुत्रसौख्यं सुतप्राप्तिर्दुर्मतिर्वैरिविग्रहः ॥ नियतं जठरे पीडा सैंहिकेये तु पञ्चमे ॥ ८ ॥ इति पंचमभावविचारः ॥ अथ षष्ठभावविचारः ॥ तत्रषष्ठभावे किञ्चितनीयमित्युक्तं चण्डेश्वरेण ॥ अस्वास्थ्यता स्फोटगवोष्ट्रदासक्रूरोग्रकर्मापरकृत्यशङ्काः ॥ युद्धारितन्मातुलमाहिपाद्यं रोगो विचिंत्यो रिपुसंज्ञभावे ॥ अत्रापि विचारः पूर्ववत् ॥ अथ योगजर्णिताजिके ॥ वर्षेश्वरे शनौ षष्ठे पापाक्रांते च वक्रिणि ॥ सन्निपाताक्षिरोगोऽसृग्ज्वरगुल्मादिसम्भवः ॥ गुरावेवंविधे वातरोगस्सकामलो भवेत् ॥ वर्षे कंबूलगे जीवे रोगाल्पत्वं विनिर्दिशेत् ॥ भौमेप्येवं रक्तरोगः पित्तमर्के तथाविधे ॥ एवंविधे हिमांशौ च कफरोगो भवेन्नृणाम् ॥ एवंविधे बुधे वातप्रधानो रोग एवहि ॥ एवंविधे भृगौ पित्तरोगः शुक्रस्तथाविधः ॥ नरराशिगतश्चेत्स्यात्कफरोगकरः स्मृतः ॥ वर्षेशः पापयुक्तोर्को द्वादशे दृष्टिशूलदः ॥ ताजिकभूषणेतु वक्रिणोव्देशस्य शनेर्यत्र कुत्र स्थितस्य सन्निपातरूपम्फलम् ॥ विलोमगामी यदि ह्यङ्गगामी स्वामी स वर्षे कुरुते त्रिदोषम् ॥ ताजिकतिलके ॥ वर्षाधिपे रविसुते किल वक्रभुक्तौस्यात्सन्निपातरुधिरामयपीडनञ्च ॥ वामनेन तु जन्मलग्नेशानां शनिगुरुभौमानां षष्ठगानाम्फलमुक्तम् ॥ शनौ जन्मविलग्नेशे वर्षे वक्रिणि षष्ठगे ॥ त्रिदोषपीडा

लग्नेशे गुरौ वर्षे रिपुस्थिते॥ पापाक्रान्त वातपीडा ह्येवं रक्तात्थरुक्कुजे ॥ एवं पापार्दिते सौम्ये वातपीडा भृशं भवेत् ॥ यादवोऽपि ॥
जनुस्तनूपे धिषणेब्दषष्ठे क्रूरार्दिते वायुभवो विकारः ॥ एवं कुजे कामलरोग उक्तो हस्तोत्थपीडापि च हायनेस्मिन् ॥ एवं रवौ द्वाद
शगेक्षिशूलं षष्ठे सचन्द्रेपि च पित्तरोगः ॥ तथैव शुक्रे रिपुगे नृराशौ क्रूरार्दिते श्लेष्मभयम्मृतिश्च ॥ एवंविधोस्यात्कफरुक्तथैव ज्ञे
पापदृष्टे पवनोत्थबाधा ॥ हिल्लाजः ॥ जन्मलग्नेश्वरः पापो वर्षाधीशेन वीक्षितः ॥ क्षुतदृष्ट्या रोगकरस्स पापो मृत्युदायकः॥ पाप
ग्रहा जन्मकाले केन्द्रगा वर्षवेशने ॥ लग्नगा रोगदा रोगसद्मपापयुतन्तथा ॥ वर्षे जन्मनि वा लग्ने सग्रहाव्धिकारकः ॥ रवेर्वा भूमि
पुत्रस्य दिवसेब्दप्रवेशतः ॥ ज्वरपीडा सौम्यदृष्टे लग्ने तु सुखमादिशेत् ॥ रात्रिजन्मनि चन्द्रेर्कान्निर्गते वृद्धिमागते ॥ कुजेत्थशाली
वर्षे च चन्द्रो रोगविनाशदः ॥ शनीत्थशाली रोगस्य वृद्धिदो वह्निजन्मनि ॥ कृष्णपक्षे च भौमेत्थशालवान् रोगदो
विधुः ॥ रोगनाशकरो मंदेत्थशालादब्दवेशने ॥ जन्मकाले चंद्रपुत्रे भृगुपुत्रे च निर्बले ॥ वर्षे तु केतुसहिते तदा
ब्दान्निखिलङ्गदः ॥ अब्दलग्नञ्च मुथहा तन्नाथाः पापमध्यगाः ॥ सर्वे मृत्युकराः प्रोक्ता न्यूना रोगकराः स्मृताः ॥ सूतौ
षष्ठगते भौमे वर्षे लग्नस्थिते रुजः ॥ जन्माब्दयोर्बुधे शुक्रे बलयुक्तेब्दलग्नतः ॥ षष्ठगे राहुपुच्छाढ्ये तदाब्दन्निखिलं गदः ॥ षष्ठा
धिपो यदा लग्ने तदा शत्रुर्भवेद्ध्रुवम् ॥ वामनः ॥ जन्मकाले गुरुसितौ स्यातां यद्राशिसंस्थितौ ॥ वर्षकाले च तद्राशिगते भौमे
स्तमागते ॥ भवन्ति पिटकाः शीतं तथा शीतलिकास्तनौ ॥ तद्राशिगे बुधे सेंदौ गण्डमालादिरुग्भवेत् ॥ राहौ सप्तमगे तस्मिन्नि
खिलाब्दं गदो भवेत् ॥ विबलो जन्मलग्नेशो यदि षष्ठं समाश्रितः ॥ रिपुदृष्टः पापयुतोस्तमितो दीर्घरुग्ज्वरः ॥ जन्मलग्नेशवन्मुन्था
समाधीशोपि कष्टकृत् ॥ जन्मलग्नेशवत्पुण्यसहमेशोपि कष्टदः ॥ लग्नेशे विबले लग्ने क्रूरमध्यगतेरुजः ॥ कन्यातुलामिथुनगे
षष्ठे शुक्रे कफो भवेत् ॥ यत्र जन्मनि शुक्रस्स्यात्तद्राशौ षष्ठमाश्रिते ॥ वर्षलग्नाद्रविसुते रोगस्स्मरकृतो भवेत् ॥ अष्टमस्थे गुरौ
पापयुतो लग्नगते कुजे ॥ मूर्च्छा स्याच्चन्द्रयुक्पापे लग्नस्थेङ्गव्यथा भवेत् ॥ जन्मन्यथ कुजो यत्र राशौ वर्षविलग्नगे ॥ पापे
क्षिते रक्तपीडा तस्मिन्स्याच्छुभवीक्षिते ॥ पीडा स्वल्पाथ योगे रुक्षष्ठे लग्नेशयोर्भवेत् ॥ जन्मन्यार्किः स्थितो यत्र राशौ वर्षे

थ लग्नगे ॥ तद्राशौ शनिना दृष्टे श्लेष्मशीतोष्णरुग्भवेत् ॥ अत्र तेजःसिंहेन समरसिंहेन च शनिदृष्टिं विना रूक्षादिरोगाः प्रोक्ताः ॥ शनिदृष्टौ तु जाप्यता नाम कुत्सितरोग उक्तः ॥ जन्मशनिस्थानगते लग्ने रूक्षोष्णशीतरोगास्स्युः ॥ शनिना दृष्टे चास्मिन्सविशेषं जाप्यता भवति ॥ समरसिंहः ॥ षष्ठेशोवर्षभुजा लग्नभुजा वाथ मुथशिले चिरगः ॥ जन्मन्याधिकारिणि वा सबले वर्षे च केतुबुध युक्ते ॥ तदतीव गदो ज्ञेयस्तस्मिन्वर्षे समस्तेपि ॥ तेजःसिंहः ॥ जन्माङ्गपश्च विबलो यदि शत्रुगोब्दे क्रूरार्दितो रिपुदृशास्तमितश्च रुक्कृत्॥इत्थं मताविह विलग्नभुगिन्थिहेशावङ्गार्तिदो हिमकरश्च मनोर्तिदायी॥दग्धस्तनौ मलिनदृङ्मलिनोङ्गरुक्कृद्रूरुद्रयान्तरुडुपे स्तनिजेशवीर्य्ये ॥ सम्पूर्णपापदृशि दीर्घरुजो भवन्ति रोगादिकञ्च भयमत्र भभुक्तमानात् ॥ अयमर्थः ॥ षष्ठभावस्यांशादिभुक्तं स्वल्पं तदा रोगभयमल्पं भुक्तांशानामाधिक्यं रोगाधिक्यं ज्ञेयमित्यर्थः ॥ विशेषमाह समरसिंहः ॥ अस्मिन्वर्षे मांद्यं मरणं वा वीक्ष्य वर्षलग्नमप्ये वम् ॥ गतदर्शपूर्णिमायां लग्नञ्च तदीश्वरौ वीक्ष्यौ ॥ ते चत्वारोपि हि शुभदृष्टास्सौम्यमुथशिलाश्चेत्स्युः ॥ दृष्टा रविचंद्राभ्यान्त स्मिन्वर्षे न मांद्यं स्यात् ॥ क्रूरहतैश्शशिसूर्यादृष्टेर्ग्रहधातुतो मांद्यम् ॥ षष्ठग्रहस्थखेटे तद्दोषेणैव रोगसंभूतिः ॥ चत्वारोप्यशु भहताश्चंद्रो दग्धो यदैकरेपाञ्च ॥ निधनेशेन मुथशिलस्वदागेहाभूयसा स्मरणम् ॥ यदि निधनेशः क्रूरस्तदापादन्तरेण बहुमृत्युः ॥ बलहीने पुनरस्मिन्शुभेत्थशाले च नो वाच्यः ॥ पूर्वोक्ताश्चत्वारो यदि षष्ठाधीशमुथशिलकृतास्स्युः ॥ तद्दीर्घतरम्मांद्यं शीघ्रे स्मिन्शाम्यति त्वरितामिति ॥ वर्षतन्त्रे ॥ चतुर्थेस्ते च मुथहा क्षुतदृष्ट्या शनीक्षिता ॥ शूलपीडा पापखगैर्दृष्टे तत्परिणामजम् ॥ अत्र परिपाकावस्थायां शूलपरिणामाख्यम् ॥ जन्मषष्ठाधिपे भौमे वर्षे षष्ठगते रुजा ॥ क्रूरेत्थशाले विपुला शुभदृग्योगतस्तनुः ॥ रोग कर्ता यत्र राशावंशे स्यादनयोर्बली ॥ तत्स्थानं तस्य रोगस्य ज्ञेयं राशिस्वरूपतः ॥ अत्र संज्ञाध्याये राशीनां कफवातपित्तादिकं रूक्षोष्णं शीतादिकञ्च प्रोक्तमस्ति तदवलंबेन रोगास्थितिरित्यर्थः ॥ यादवः ॥ मुन्थाब्दलग्नञ्च खलार्दिन्तंचेत्तत्पौ विवीर्यौ खलगौ च वास्तम् ॥ यातौ शशी क्रूरखगान्तरस्थो यथा तथा दीर्घरुजो भवन्ति ॥ लग्नस्थे खलखेचरे सहिमगौ कुत्रापि देहे व्यथा सूतौ वारियुगे कुजेब्दतनुगे रोगो जनुःकेंद्रगे ॥ पापेस्मिंस्तनुगे गदोथ शुभदा वा जन्मगेज्यो शनेर्भेब्दे लग्नगतेर्कराशिगकुजे स्युः शीत

लाद्या रुजः ॥ बलोज्झिते च सन्मतिप्रनष्टके च नायके यदा तदा गदक्षयो नृणां भवेत्समा भवेत् ॥ अथ षष्ठभावस्थितानामर्का
दीनां फलानि पद्मकोशे॥रिपूणा विनाशो रुजो मातृपक्षे रवौ षष्ठसंस्थे सुखाप्तिर्जनानाम्॥नृपान्मित्रपक्षाज्जयश्चार्थलाभो भवेद्द्रव्यलाभः
क्रये विक्रये वा॥१॥अरिस्थानगो रात्रिनाथो रिपूणां विवादं विरोधश्च नेत्राङ्गपीडाम्॥व्ययं व्यग्रतां गुप्तचिन्तान्तनोति कलत्राङ्गपी
डां करोतीह वर्षे॥२॥कुजः षष्ठगः शत्रुनाशं करोतिस्वपक्षाज्जयं मित्रपक्षाच्च लाभम्॥हयानाञ्च सौख्यं भवेदङ्गनानां सुखं हायने स्या
द्दशायाञ्च तस्य॥३॥रिपुस्थे बुधे वैरिणावै विवादो भवेदङ्गनानाञ्च कष्टं करोति॥व्ययं व्यग्रतांस्वे शरीरेच कष्टं कफार्तिम्महाकष्टम
प्यत्रवर्षे॥४॥कष्टं रिपूणां रिपुगस्सुरेज्यो भयार्तिदोषान्कुरुते नराणाम्॥भार्याङ्गपीडामथ नेत्ररोगं ज्वरातिसारं प्रकरोति वर्षे ॥५॥
अरिस्थानगो हायने दैत्यमन्त्री जनानां विवादो रिपोर्भीतिकष्टम् ॥ भवेद्गुप्तचिन्ता वराङ्गप्रपीडा शिरोर्तिश्च नेत्रोदरे पीडनञ्च॥६॥
षष्ठस्थितो भूधनलाभकारी सूर्यात्मजो नृपसमं मनुजं प्रकुर्यात् ॥ धान्यांबराणि विपुलानि करोति नित्यं कीर्तिंविवर्धनमथार्ति
विनाशनञ्च ॥ ७ ॥ रिपोर्विनाशं यदि सैंहिकेयः षष्ठस्थितस्स्यान्नृपतुल्यकारी ॥ गोभूहिरण्यांबरलाभदश्च धनाप्तिकृद्दुःखविनाश
नश्च ॥८॥ मणित्थः ॥ अन्नागमन्तथा धैर्यं राजमानं रिपुक्षयम् ॥ सौख्यं पुत्रकलत्रादि षष्ठे प्रद्योतनो यदि ॥ १ ॥ वातश्लेष्मादिका
बाधा विद्वेषो बांधवैस्सह ॥ नृपचौरोद्भवा पीडा वर्षे षष्ठस्थिते विधौ ॥ २ ॥ इष्टस्वजनतस्सौख्यन्धनलाभं रिपुक्षयम् ॥ प्रमोदन्नृप
तेर्मानं षष्ठस्थानगते कुजे ॥३॥ शत्रुपक्षे विवृद्धिं च विवादं स्वजनैस्सह ॥ शरीरे रोगजां पीडां कुर्यात्सौम्यस्तु षष्ठगः ॥ ४ ॥ रिपुवृ
द्धिमथोद्वेगंधननाशं बलक्षयम् ॥ इष्टस्वजनविद्वेषं षष्ठे देवपुरोहिते ॥ ५ ॥ वातश्लेष्मभवा बाधा क्षयोत्पत्तिर्धनक्षयः ॥ महाभयं
गृहे कष्टं वर्षे षष्ठगते भृगौ ॥ ६ ॥ देहे सौख्यं द्रव्यवृद्धिः प्रसादो भूमिपालतः ॥ स्त्रीपुत्रजनितं सौख्यं वर्षे षष्ठगते शनौ॥७॥नृपप्रसाद
आरोग्यन्धनलाभो रिपुक्षयः ॥ कलत्रपुत्रजं सौख्यं वर्षे षष्ठे विधुन्तुदे ॥ ८ ॥ इति षष्ठभावः ॥ अथ सप्तमभावविचारः ॥ तत्र सप्तमभावे
किं विचारणीयमित्युक्तं चण्डेश्वरेण॥वस्तुक्रयस्वास्थ्यवणिज्यवादकामो जयो दासकलत्रचौर्य्याः ॥ निवृत्तिसुश्रेयगमागमाद्यं कलत्रभावे
तु विचार्यमेतत् ॥ अत्रापि पूर्ववद्विचारः ॥ अथ योगाः ॥ यादवः ॥ स्मरगतेब्दपतौ सबले सिते युवतिसौख्यमतीव गुरोर्दशा ॥ सबलभृ

मिसुतेन विलोकिते बहुरसोह्युभयोश्च परस्परम् ॥ शशिजदृष्टियुते च तथा सिते प्रथमयौवनया परयोषया ॥ रविजदृष्टियुतेपि च वृद्धया स्मरवशो ह्यवशो रमते नरः ॥ गुरुयुतेपि च नूतनवल्लभा भवति तत्र च संततिराश्रुतः ॥ वामनः ॥ जन्मलग्नाधिपे वर्षलग्नात्सप्तमगे सति ॥ उदिते सबले चवै दारसौख्यं प्रजायते ॥ शुक्रो जन्मनि यद्राशौ वर्षे वर्षेश्वरो यदि ॥ तद्राशौ सप्तमस्थेपि पुंसः परिणयस्तदा ॥ ताजिकसारे ॥ शुक्रास्पदे लग्नगते विवाह इत्युक्तम् ॥ लग्नास्तनाथयोगेपि विवाहाप्तिः प्रजायते ॥ षष्ठाधिपे शुभे षष्ठस्थिते प्राप्तिः स्त्रियो भवेत् ॥ तेजःसिंहः ॥ दग्धे सिते युवतिजातमसौख्यमाहुः शुक्रास्पदे युवतिजं व्यसनं कुजे स्यात् ॥ जीवे च हद्दपविवाहपतौ विवाहो भौमेब्दपे शनिदृशा तु विपर्ययः स्यात् ॥ जीर्णताजिके ॥ पंचारिसप्तदशमे [illegible]लाभेषु शीतगुः ॥ शुक्रेक्षितोथ जीवेन शुभं स्यात्प्रमदाभयम् ॥ शेषेक्षितास्त्रिया सार्द्धं शत्रुत्वं जायते ध्रुवम् ॥ जन्मलग्नात्सप्तम[illegible]ऽब्दपशुक्रयुतोक्षिते ॥ स्त्रीसुखं बहुलं तत्र वर्षे भवति निश्चयात् ॥ शुक्रो जन्मनि यद्राशौ स राशिः केन्द्रकोणगः ॥ गुरुणा सहिता वर्षे कांतः कांतासुखप्रदः ॥ लग्नहद्दाधिपः शुक्रस्थाने केंद्रत्रिकोणगः ॥ विवाहसहमेशो वा वर्षे कांतासुखप्रदः ॥ भौमे वर्षेश्वरे शुक्रदृष्टे स्याद्धनि[illegible]गमः ॥ शुक्रे वर्षेश्वरे भौमदृष्टे लाभस्त्रिया भवेत् ॥ सूतौ वाब्दे शुक्रभौमदृष्टे स्त्रीसहमे तथा ॥ वर्षतन्त्रे ॥ लग्नास्तनाथयोरित्थशाले स्त्रीलाभमादिशेत् ॥ स्वामिदृष्टं स्त्रीसहमं शुक्रदृष्टं विवाहकृत् ॥ नष्टेन्दौ शुक्रपदगे मैथुनं स्वल्पमादिशेत् ॥ जन्मशुक्रर्क्षगो भौमः स्त्रीसुखोत्सवकृद्बली ॥ नष्टलक्षणमुक्तं वामनेन ॥ क्रूराक्रांतः क्रूरयुक्तः क्रूरदृष्टश्च यो ग्रहः ॥ विरश्मितां प्रपन्नश्च स विनष्टो बुधैस्स्मृत इति ॥ अधिकारिपदस्थेर्के स्त्रीभ्यो व्याकुलतानिशम् ॥ इंथिहाधिकृतस्थाने गुरुदृष्ट्या विवाहकृत् ॥ अधिकारिपदे पश्चाधिकारिराशौ ॥ इन्थिहारार्कियुग्द्यूने करिते सहमे स्त्रियाः ॥ स्त्रीपुत्रेभ्यो भवेत्कष्टं पापदृष्ट्या विशेषतः ॥ सूतौ द्यूनाधिपश्शुक्रोऽब्दे द्यूने बलवान् भवेत् ॥ लग्नेशेनेत्थशालश्चेत्स्त्रीलाभं कुरुते सुखम् ॥ सूतौ द्यूनाधिपे वर्षे स्त्रीसद्मेशे स्त्रियास्सुखम् ॥ जन्मास्तपेन्थिहानाथवर्षेशाः खे द्युने तथा ॥ यादवः ॥ जन्मेश्वरे वर्षपतौ सिते न स्यान्मूथशीले सुखमेव नार्याः ॥ विवाहसद्माधिपतौ च लग्नहद्दाधिपेवासबले सितेन ॥ युतेक्षिते वा जनिषष्ठनाथेब्दे षष्ठयाते शुभदृग्युते तत् ॥ विवाहगेहे खलदृष्टियुक्ते तत्पेऽविवाहो

बहुलं च दुःखम् ॥ स्त्रीजन्मथैवाब्दमदे कुजेपि दुःखंभवे स्त्रीभवमब्दकाले ॥ सूर्येस्तगे क्रूरयुतेक्षिते तथा स्यात्सप्तमे स्त्री सुतदुःखदात्री ॥ सवीर्यखेटास्पदगेस्तमूर्यै स्त्रीदुःखमीज्येक्ष गतस्सुखञ्च ॥ देवेज्यशुक्रेक्षितकेवले स्यातस्त्रीगाच योषा सुखलाभदा च ॥ जननशुक्रगराशिगते जनुस्तनुपतौ सबले परिणायनम् ॥ युवतिधामपतेर्भृगुजादपि युवतिनं च शुभाशुभमीरयेत् ॥ ताजिकसारे ॥ मदपतिर्मदगस्सबलो यदा खलखगैः सहितो न च वीक्षितः ॥ मुनिवरैर्गदितं बहुलं सुखं युवतिवर्गभवं विविधन्तदा ॥ हिल्लाजः ॥ द्यूनेन्दौ लग्नपेनापि कन्यालभस्सुनिश्चितम् ॥ द्यूनपो लग्नगश्चंद्रदृष्टो भार्याप्रदो ध्रुवम् ॥ स्वर्क्षे शुक्रे चन्द्रयुक्ते दृष्टेवीर्योपि दास्पदि ॥ सूर्यौ वा बलवाँल्लाभे क्रूरकन्याप्रदो मतः ॥ समराशौ चंद्रसितौ त्रिकोणे स्वनवांशके ॥ बलिनौ लग्नपुत्रस्थौ भार्यालाभकरौ मतौ ॥ सौम्यैः केन्द्रत्रिकोणस्थैर्द्यूनदृष्टेङ्गनातिकृत् ॥ लग्नगे सप्तमाधीशे भर्त्रादेशकरीप्रिया ॥ सप्तमे लग्नपे भार्यादेशकारी पतिर्भवेत् ॥ लग्नेशो लग्नगो जायाधीशस्सप्तमसंस्थितः ॥ द्वौ वा लग्नास्तगौवर्षे जायाप्रीतिसुखप्रदौ ॥ लग्नेशास्तपयोःस्नेहदृष्ट्या सौख्यं मिथो वदेत् ॥ क्रूरदृष्ट्या कलिं दृष्टेरभावे मध्यमं वदेत् ॥ सबले धनभावे च भार्याद्रव्यं लभेन्नरः ॥ सबले छिद्रभावे तु भार्या भर्तृधनं लभेत् ॥ वर्षेश्वरे गुरौ द्यूने व्यवहाराद्धनात्ययः ॥ वेश्यानुरागो मदपे विनष्टे नीचगेपि वा ॥ क्रूरान्विते च मदपे परयोषिदवाप्यते ॥ सप्तमे क्रूरखचरः शुभदृष्टिविवर्जितः ॥ भार्यामरणदः प्रोक्तो विनष्टो वास्तनायकः ॥ चूडामणौ ॥ युद्धं भावि न वा वर्षे लग्नेशे सप्तमाधिपे शत्रू स्यातां तदा युद्धं भवतीति सुनिश्चितम् ॥ लग्नं लग्नस्य पूर्वं वा यदि पापसमन्वितम् ॥ तदा घोरं भवेद्युद्धं पापोवेक्षेत पार्श्वकम् ॥ लग्नास्तनाथयोर्योगे रणं दीर्घं समादिशेत् ॥ मंदे वक्रे च सबले बहुयुद्धं भवेत्तदा ॥ स्वगृहोच्चगते भौमे दशमस्थेस्याद्रणं प्रचुरम् ॥ लग्नस्थे मध्यतरं द्यूनस्थे सद्मानि प्रचुरम् ॥ लग्नद्यूनपती पापौ पापांशस्थौ तु युद्धदौ ॥ तावेव वक्रिणौ केंद्रे षष्ठपो वा रणप्रदः ॥ लग्नेशे द्यूनगेंत्ये वा वर्षे स्यात्तु पराजयः ॥ लग्नेस्ते वास्तपे षष्ठे शत्रोरिव पराजयः ॥ लग्ने क्रूरे जयः प्रष्टुः सप्तमे विद्विषो जयः ॥ मूर्तौ क्रूरे जयः प्रोक्तः क्रूरदृष्ट्या पराजयः ॥ संधिं कुर्यात्सुहृद्दृष्टिर्लग्नेशास्तपयोर्मिथः ॥ आयेपि सबले संधिर्विबले विग्रहो भवेत् उदयचतुर्थैक्रूरैः सप्तमदशमस्थितैस्तथासौम्यैः ॥ विजयो भवतिहि युद्धे द्यूनोदयगैः शुभैश्चापि ॥ चरलग्ने शुभयुक्ते संधानं

भवति भूमिपालानाम् ॥ दशमोपगतैस्सौम्यैर्वित्तं दत्त्वा परो याति ॥ हायनसिन्धौ ॥ यदि क्रूरग्रहो वर्षे जायेशं लग्नपं ध्रुवम् ॥ न पश्यति तदा तत्र नष्टं विस्मृतमाप्यते॥यस्मिन् राशौ भवेच्चंद्रस्तद्राशेराधिपेन चेत् ॥ दृश्यते चंद्रमा वर्षे तदा नष्टंच लभ्यते॥ धनपोनिस्सृतस्सूर्यादुदितो भवति स्फुटः॥ तदा च विस्मृतन्नष्टं प्राप्यते निश्चयाद्धनम् ॥ हिबुकास्तान्तरालस्थैर्ग्रहैः शुभफलप्रदैः ॥ यात्रासिद्धिं विजानीयादशुभैर्नैव निर्दिशेत ॥ सप्तमे स्वामिसौम्याढ्ये दृष्टे वा स्यान्निवर्त्तते ॥ चरात्मकस्य प्रमदाह्वयस्य भावस्य पापेक्षणदूषितस्य ॥ वर्षे प्रवेशे प्रभवेन्निवृत्तिः प्रसवाजातस्य च नान्यथा स्यात् ॥ अथ सप्तमभावस्थितानां सूर्यादीनाम्फलानि पद्मकोशे ॥ कलत्रेर्कयुक्ते कलत्राङ्गपीडा स्वकीयाङ्गपीडा तथा तद्दशायाम् ॥ शिरोर्तिश्च मार्गाद्भयं वै विवादो गुदे पादयोः पीडनं वर्षमध्ये ॥ १ ॥ कलत्रे शशाङ्को यदा पापदृष्टो ज्वरं वातपीडाम्भयं दारुणञ्च ॥ कलत्रांगकष्टं कफोत्पत्तिबाधां ससौम्यान्वितश्चार्थलाभं करोति ॥ २ ॥ कलत्रे स्थिते क्ष्मासुते स्त्रीषु रोगन्तथा चात्मनो मार्गतोतीव्र कष्टम् ॥ भयं वैरिणां वै विवादो जनानान्दशा नेष्टकारी भवेद्धायनेस्मिन् ॥ ३ ॥ शशाङ्कात्मजे सप्तमस्थेङ्गनानां विलासादिसौख्यं भवत्यत्र वर्षे ॥ प्रतिष्ठाधिका गोहिरण्याम्बराप्तिर्जयस्सर्वदा तद्दशायान्तथैव ॥ ४ ॥ कलत्रे सुरेज्ये कलत्रादिसौख्यञ्ययान्निर्भयं शत्रुनाशं करोति ॥ सुखं वाहनानां विलासादिकञ्च नृपाल्लब्धलक्ष्मीर्भवेद्धायनेस्मिन् ॥ ५ ॥ कलत्रे भृगौ जायते हायनेस्मिन्कलत्रादिसौख्यं विलासादिकञ्च ॥ रिपोर्नाशनम्मानवानाञ्च सौख्यं भवेद्वस्त्रहेमादिसौख्यन्नराणाम् ॥ ६ ॥ जायास्थानगतो दिवाकरसुतस्स्यादङ्गनानां रुजो मार्गाद्भीतिकरः पशोश्च मरणं राज्याद्भयं व्यग्रताम् ॥ क्लेशानाञ्च विवर्द्धनम्प्रकुरुते मिथ्यापवादन्तथा देहे वायुसमुद्भवा च जठरे पीडा भवेद्धायने ॥ ७ ॥ वातप्रमेहार्तिमथो नराणां गुह्येंद्रियार्तिश्च तमो द्युनस्थम् ॥ विषाग्निपीडाञ्च तथाङ्गनानां कष्टं करोतीह भयन्नृपाणाम् ॥ ८ ॥ मणित्थः ॥ बस्तिवक्षःशिरोरोगैः स्त्रीपीडा नगराटनम् ॥ वर्षगस्तु यदा द्यूने भास्करः कुरुते नृणाम् ॥ १ ॥ स्त्रीसुखन्नृपतेर्यानं लाभो ग्रामान्तराद्भवेत् ॥ वाणिज्याज्जलमार्गाच्च सप्तमे यदि चंद्रमाः ॥ २ ॥ जायाकष्टन्तथा हानिः पीडा आत्मन एव च देशभ्रंशं भयमसौ कुर्याद्भौमस्तु सप्तमे ॥ ३ ॥ मार्गाल्लाभोङ्गनासौख्यं वाणिज्याच्च धनागमम् ॥ चंद्रजः कुरुते नित्यं हायने

सप्तमो यदा ॥ ४ ॥ वाणिज्याद्व्यवहाराच्च मार्गाच्चैव धनागमम् ॥ स्त्रीसुखं राजसन्मानं सप्तमे सुरमन्त्रिणि ॥ ५ ॥ दयिता पुत्रजं सौख्यं वाणिज्यादिभवागमम् ॥ मार्गाल्लाभप्रमोदश्च सप्तमे भृगुजे नृणाम् ॥ ६ ॥ सततङ्गमने भीतिः सुहृत्कष्टं धनक्षयः ॥ प्रवासः शत्रुतो भीतिः सप्तमे रविनंदने ॥ ७ ॥ प्रवासम्पीडनं चाङ्गे स्त्रीकष्टं पवनोत्थरुक् ॥ कटिबस्तौ भवेत्पीडा सैंहिकेये च सप्तमे ॥ ८ ॥ इति सप्तमभावविचारः ॥ अथाऽष्टमभावविचारः ॥ तत्राष्टमभावे किं विचारणीयमित्युक्तं चण्डेश्वरेण ॥ आयुर्विरोधो निधनं चराद्यं भेदोथ शस्त्रौघनिरूपणञ्च ॥ वैषम्यदुर्गादिकशत्रुरोधो नद्यादिसंतारणनष्टरोगाः ॥ छिद्रं रणं भ्रातृरिपोश्च दृष्टं विचारणीयन्निधने समस्तम् ॥ अत्रापि पूर्ववद्विचारः । अथ योगाः ॥ यादवः ॥ वर्षेशेत्रानिजे बले खलहते शस्त्रान्मृतिमृत्युंगे ८ तस्मिन्वह्निम १ । ५ । ९ गेऽग्निभोर्द्विपदमे ३ । ६ । ७ । ९ चौरोग्रलोकाद्भयम् ॥ ख १० स्थेस्मिन्नृपतेर्भयं हिबुकभे मातुः पितुर्मातुलाद्भ्रन्त्रा ८ न्यत्र गते कुजे मृतिसमं मृत्युर्न चेज्ज्येक्षणात् ॥ वर्षतन्त्रेऽब्दपभौमस्य यत्र कुत्रावस्थितस्य फलमुक्तम् ॥ भौमेऽब्दपे क्रूरहतेऽयसाघातो बलोज्झिते ॥ अग्निभीरग्निभे क्रूरनराद्द्विपदभे मृतिः ॥ जन्माष्टनाथेन गतेंथिहेशे लग्नाधिनाथे कृतमूथशीले ॥ स्यादल्पमृत्युश्च दिवाब्दवेशे सार्केब्दपे भूपभयम्महीजे ॥ वर्षतन्त्रे तु कुजार्कयोगे दिवसेऽब्दवेशे नृपभयमुक्तम् ॥ लग्नेथिहापतिसमापतयो मृतीशाच्चेदित्थशालिन इमे निधनप्रदास्स्युः ॥ चेत्पाकारिष्टसमये मृतिरेव तत्र सार्के कुजे नृपभयं दिवसेब्दवेशे ॥ क्रूरखेचरदशासमये चेदित्यादिजातकोक्तदशारिष्टे वर्षे लग्नेथिहापति इत्यादियोगोत्पत्तौ मरणं दशारिष्टासंभवे दुःखमित्यर्थः ॥ रवौ जनौ शुक्रकमूसरीफे केंद्रेऽब्दनाथे नृपभीतिरोगौ ॥ जन्मारभेब्दे शशिजेब्दकेंद्रेब्दवेशे हि दुर्वर्षमिदं वदन्ति ॥ तस्मिन्बुधे केवलमष्टपाते भौमारिदृष्ट्यापि न शोभनोब्दः ॥ तथाष्टगे ज्ञे सबले कुजाक्षियुक्ते विदेशे मरणञ्च बन्धः ॥ एते योगास्ताजिकसिन्धावन्यथैवोक्ताः ॥ शुक्रेसराफसहितो जन्मकाले च भास्करः ॥ वर्षाधिकारी केन्द्रस्थो ज्वरराजरुगातिकृत् ॥ भौमस्थानेधिकारींदुः पुत्रे वर्षे रुजस्तदा ॥ बुधोधिकारी भौमेन क्रूरदृष्टोसृगार्तिदः ॥  भौमयुक्ते बुधे सार्के विदेशं बंधनम्मृतिरिति ॥ तत्रोभयोर्विरोधे एते योगान्तरा एवं ज्ञेयाः ॥ वर्षतन्त्रे ॥ भौमस्थानेधिकारीन्दौ गुप्तं नृपभयं रुजः ॥ मन्दोधिकारी खे लोहहते पीडाकरःस्मृतः ॥ अस्मिन्योगेष्टमस्थचंद्रो ज्ञेय इति यादवः ॥ जन्मस्थभौमर्क्षगतेब्दवेशे चंद्रे

ष्टमस्थे नृपपीडनानि ॥ भौमेष्टमेभयं वह्नेः प्रहारो वा नृपाद्भयम् ॥ आरे खस्थे चतुष्पाद्भ्यः पातो दुःखं रुजोसृजः ॥ अत्र प्रथमयोगे हीनाधिकारे कुजे रवियुतेष्टमस्थे वह्न्यादिभयं द्वितीययोगेधिकारिणि भौमे दशमस्थे वाहनात्पात इत्याह यादवः ॥ हीनाधिकारेपि कुजेष्टमस्थे सार्केऽग्निभीतिर्नृपपीडनानि ॥ भौमेम्बरस्थे १० ऽप्यधिकारिणि स्याद्वाहात्प्रपातः खलु वर्षवेशे ॥ जीर्णताजिके ॥ वर्षेश्वरो गुरुः पापदृष्टो वर्षेष्टमे स्थितः ॥ द्रव्यहानिकरो मंदो बलहीनोऽशुभेक्षितः ॥ वर्षलग्नात्सप्तमगोऽपवादकलिकारकः ॥ लग्नाष्टमेशयोरित्थशालो मृत्युभयप्रदः ॥ पापदृष्टोऽब्दपो जीवो धनस्थो धनहानिदः ॥ वर्षतंत्रे ॥ पतिते ज्ञे क्रूरदृशामित्थशाले मृतिं वदेत् ॥ कुजहद्दा स्थिते नाशः सौम्यदृष्टे शुभं वदेत् ॥ पतिते क्रूराक्रांते तथा बुधे भौमहद्दास्थिते नाशोऽश्वादिद्रव्यस्येत्यर्थः ॥ यादवेनाष्टमस्थस्य बुधस्याधिकार हीनस्य भौमेत्थशालयुतस्य फलमुक्तम् ॥ ज्ञे त्वधिकारहीनेष्टमस्थे मृतिः स्यात्कुजमूथशीले ॥ लग्नाधिपे नष्टदग्धे योषिद्वादोऽशुभान्वितम् ॥ दग्धादि लक्षणं वामनेनोक्तम् ॥ क्रूरैः क्रूरदृशा दृष्टो युक्तो वार्कगृहांतिगः ॥ सविनष्टो ग्रहो ज्ञेयो दग्धः पीडित उच्यते ॥ अत्र यादवेन जन्मलग्नेशवर्षलग्नेशयोः सप्तमगयोस्सूर्यसहितयोः फलमुक्तम् जन्माङ्गाधिपतौ समातनुपतौ वा वर्षलग्नास्तगे सार्के दुष्टहते स्त्रिया सह तदा वादार्तिदुःखानि च ॥ जन्मन्यष्टमगो जीवो नाधिकारः कलिः पृथुः ॥ जयः शुक्रेक्षणादुक्तः प्रत्युत्तरवशेन च ॥ तादृशे गुरौ शुक्र वीक्षिते स्त्रीवादे प्रत्युत्तरवशेन जयो भवतीत्यर्थः ॥ भौमेन्त्यगे धने सूर्ये वादात्क्लेशं विनिर्दिशेत् ॥ अथ यादवेन योगद्वयमुक्तम् ॥ भौमे वर्ष तनोर्व्यये सति सदा वादोन्यथाथो रवौ द्रव्यस्थे रिपुगोत्रवाद उदितो दुष्टेक्षणेनोत्कटः ॥ रिपुगोत्रकलिर्भीतिः संख्ये कुजहतेऽब्दपे दग्धो जन्माङ्गपो वर्षेष्टमो रोगकली दिशेत् ॥ सूत्यब्दयोरधिकृतो भौमस्थाने गुरुर्हतः ॥ पापैर्वादस्स्फुटोऽशेषं तादृशेंदौ शनेः पदे । सूत्यब्दयोभौमस्थाने गुरुर्वर्षाधिकारी पापैर्हतस्तदा प्रकटो वादः ॥ अथ चन्द्रस्सूत्यब्दयोश्शनिस्थाने स्थितः ॥ वर्षाधिकारी पापैर्हतस्तदापि वादः स्यादि त्यर्थः ॥ सूत्यब्दयोरधिकृते चन्द्रे बुधपदे हते ॥ क्रूरैर्विदेशगमनं वादः स्याद्विमनस्कता ॥ मेषे सिंहे धनुष्पादेऽब्दपे रन्ध्रे सितो भयम् ॥ मृतौ मृतीशलग्नेशौ मृत्युदौ दापदृग्युतौ ॥ यत्रर्क्षे जन्मनि कुजस्सोऽब्दे लग्नोपगो यदा ॥ बुधो वर्षपतिर्नष्टबलस्तत्र न शोभनम् ॥ सार्के शनौ भौमयुते खाष्टस्थे वाहनाद्भयम् ॥ सार्के भौमेष्टमस्थे तु पतनं वाहनाद्भवेत् ॥ वामनः ॥ वर्षेश्वरे कुजयुते

रन्ध्रस्थे मरणाद्भयम् ॥ उदिते मृतिसद्मेशेस्तङ्गते जीवसद्मपे ॥ पुण्यसद्मेश्वरः पुण्यसद्मनोऽष्टमगो यदि ॥ मृत्युकृत्पुण्यसहमे तथा जन्माष्टमेश्वरः ॥ राशिजन्माष्टमो मुख्यं सद्मनि स्वेशयुक्तथा ॥ वर्षाष्टमर्क्षं पुण्यस्थं स्वेशयुक्तम्मृतिप्रदम् ॥ क्रूराक्रान्तं पुण्य सद्म यदि जन्माष्टमेश्वरः ॥षष्ठेष्टमे द्वादशे वा तदा मृत्युरसंशयः॥मुथहेशोब्दपो वापि क्रूराक्रान्तोरिमृत्युगः ॥ जन्मलग्नाष्टमाधीशो न्यगो मृत्युं विनिर्दिशेत् ॥ पुण्यसद्मनि लग्ने वा चंद्रः क्रूरस्तु सप्तमः ॥ मृत्युकृद्यदि वा क्रूरौ धनव्ययकृतास्थिती ॥ मृतिषष्ठगतश्चन्द्रो क्रूरदृष्टो मृतिप्रदः ॥ जन्मलग्नाष्टलग्नेशौ निधने निधनप्रदौ ॥ वर्षतंत्रे ॥ सक्रूरे जन्मपे मृत्यौ मृतिश्चेदिन्थिहार्कियुक् ॥ भौमयुक्ते क्षणे तत्र मृतिः स्यादात्मघाततः ॥ मृतिरंध्रपतिर्मन्दोष्टमेब्दे लग्नपेन चेत् ॥ इत्थशाली क्रूरदृशा तत्काले मृत्युदायकः ॥ मन्दोष्टमे मृतीशेत्थशाली मृत्युकरस्स्मृतः ॥ शुभेत्थशालात्सर्वेपि योगा नाशुभदायकाः ॥ मृत्युकर्तारो ग्रहाश्शुभग्रहैरित्थशालादरिष्टं परिहृत्य परिणामे शरीरारोग्यदाःस्युः॥ विशेषमाह तेजःसिंहः ॥ स्वोच्चादिगो बलयुतो मृतिगेहनाथः क्रूराहतोर्करहितो गृहदृग्युतो वा ॥ लग्नन्तदीशमपि वा यदि वीक्षिते रुक् क्लेशादितत्खलु भवेदबलेन्यथात्वम् ॥ लग्नेशमूसरिफतोब्दपतिस्तु भव्यो भौमोब्दपो गुरुदृशाप्यबलो न निंद्यः॥ वंध्यं च मृत्युपतिरायपतीत्थशालो भव्याष्टमेन मलिनो मलिनेत्थशाली ॥ यादवः॥अब्दपेऽवनिसुताक्षिसंयुते युद्धभीर्भवति मुंथहेश्वरे ॥ मुन्थहाभवनतोष्टमे स्थिते स्यान्मृतिश्शरादि देहधारिणाम् ॥ जन्मांगजन्माष्टपती च वर्षे मुंथागतौ मृत्युकरौ प्रदिष्टौ ॥ जन्माष्टपेब्दे मृतिगे च मृत्युर्मन्दाद्यमुंथा मृतिदारयुक् दृक् ॥ जन्माष्टमेशेब्दरिपुव्ययाष्टस्थिते मृतिस्स्यादथ वर्षकाले ॥ जन्माङ्गवर्षाङ्गपती मृतिस्थौ तदा भवेतां मृतिदौ नराणाम् ॥ पापेष्टमे पापकृतेत्थशाले मृत्युर्भवेद्वर्षनिवेशकाले ॥ यद्वेजनौ भूमिसुतेब्दतत्स्थे जीवे खलाढ्येथ कुजे गुरौ वा ॥ समाधिकारे ह्यनुजैर्विवादो मन्दान्विते शीतरुचौ च तद्वत् ॥ यद्राशिगो जन्मनि सोमजन्मा तद्राशिगेब्दे जनने बलिष्ठे ॥ चंद्रे विवादो निखिलैर्निरुक्तं तैर्वैमनस्यं परदेशयानम् ॥ अथाष्टमभावस्थिताना सूर्यादीनाम्फलानि पद्मकोशे ॥ रवौ चाष्टमे पीडनं बंधुकष्टं सदुःखक्षयोपद्रवौ व्याधिशोकौ ॥ धनार्तिः कलत्राङ्गपीडासुतादेर्व्रणो वातपीडा भवेद्वर्षमध्ये ॥ १ ॥ निधनगतशशाङ्कः कष्टवंतं करोति ज्वरवमनविकारं चोदरे गुप्तपीडाम् ॥ भवति कफविकारो नेत्ररोगं

गभङ्गो जलभयमरिवादो द्रव्यनाशोऽब्दमध्ये ॥ २ ॥ कुजे चाष्टमे शत्रुपीडांगकष्टं व्रणस्योदयश्चांगनानां च रोगः ॥ धनानां विनाशो भवेच्छस्त्रघातस्तथा व्यग्रता गुप्तचिंता नरस्य ॥ ३ ॥ निशानाथपुत्रो यदा रंध्रसंस्थो नरं मृत्युतुल्यं कफार्तिं करोति ॥ ज्वरादिप्रकोपो भवेन्नेत्रपीडा भयं व्यग्रता हायने तद्दशायाम् ॥ ४ ॥ ज्वरवमनकफार्तिर्नैधनस्थे सुरेज्ये बहुलकठिनरोगः कर्णयो र्नेत्रयोश्च ॥ भवति भयमरिभ्यो योषिदङ्गेषु पीडा व्रणकृतबहुपीडा हायनेस्मिन्नराणाम् ॥ ५ ॥ मृत्युस्थितो मृत्युभयम्मनुष्यं शुक्रः करोतीह जनापवादम् ॥ ज्वरादिपीडामथ भीतिकष्टं नेत्रे च रोगो रिपुभिर्विवादः ॥ ६ ॥ निधनगो निधनं कुरुते शनिर्ज्वर विमर्दकफार्तिजनापदः ॥ नृपभयंधनहानिभयम्मृधे भवति तापकरः पवनोदयः ॥ ७ ॥ छिद्रस्थितो मृत्युसमं मनुष्यं राहुस्तथा भूपभयं करोति ॥ ज्वरातिसारञ्च कफार्तिदोषं विषूचिका वायुभयन्नराणाम् ॥ ८ ॥ मणित्थः ॥ चक्षुरुग्धनहानिस्स्याद्बहुपीडा कलेवरे ॥ पित्तजा विषभूपालव्यालपीडाष्टमे रवौ ॥ १ ॥ अष्टमस्थेल्पसंतोषो द्रव्यनाश उपद्रवः ॥ श्लेष्मचक्षुर्विकारश्च वर्णादौ च निशाकरे ॥२॥ रक्तपित्तप्रकोपश्च महापीडा धनव्ययः ॥ विपत्तिरिष्टवर्गस्य अष्टमस्थे धरासुते॥३॥ लाभं सौख्यं प्रमोदश्चराजपूजां रिपुक्षयम् ॥ विदधाति नृणां वर्षे सौम्यो मृत्युगतस्सदा ॥ ४ ॥ धनव्ययमनारोग्यं कलहं मित्रवर्गतः ॥ वियोगश्च प्रवासश्च जाया पुत्रादिपीडनम् ॥ ५ ॥ अल्पलाभमनारोग्यं जायापुत्रादिपीडनम् ॥ धर्मनाशं प्रवासञ्च भृगुपुत्रेष्टमास्थिते ॥ ६ ॥ रोगपीडा महा व्याधिःपुत्रजायादिपीडनम् ॥ व्यसनं द्रव्यहानिश्च हायनेऽष्टमगे शनौ ॥७॥ धनव्ययस्त्वनारोग्यं विवादो बन्धुभिस्सह ॥ स्त्रीकष्ट श्च प्रवासश्च राहुरष्टमगो यदि ॥ ८ ॥ इत्यष्टमभावविचारः ॥ अथ नवमभावविचारः ॥ तत्र नवमभावे किञ्चिन्तनीयमित्युक्तश्चण्डेश्वरेण ॥ स्वाध्यायदीक्षा सुरगेहयात्रा चक्रस्य चेष्टा मठधर्म्मकृत्यम् ॥ गुरोस्तु कार्यांद्यभिषेचनञ्च जलाश्रयइशालकदेवरादीन् ॥ भ्रातुर्भगि न्याः श्वशुरस्य चिन्ता पुण्यञ्च पुण्ये कथितम्महद्भिः ॥ अत्रापि विचारः पूर्ववत् ॥ अथ योगाः ॥ वर्षतन्त्रे ॥ भौमोदये त्रिनवगे क्रूरा युक्ते बलान्विते ॥ गुणावहस्तदा मार्गश्चरकार्य्यं स्थिरन्ततः ॥ त्रिधर्म्मस्थोऽब्दपः सूर्यः कंबूलो मार्गसौख्यदः ॥ अन्यप्रेषणयानं स्यात्स चेन्नाधिकृतो भवेत् ॥ वर्षेशस्सूर्यस्त्रिनवगः स्वगृहोच्चादिगः कंबूली चन्द्रेत्थशालवान् मार्गप्रदो भवति ॥ एतादृशोऽधिकाररहित

अन्यप्रेषणयानदः ॥ अधिकारः स्वगृहादिको ज्ञेयः ॥ ममादिरेषां पर्यंतं समरसिंहवाक्यं न सर्वपुस्तकेषु ॥ समरसिंहवाक्यम् ॥ मम गमनं भाविताऽवा न वेति लग्नेश्वरेब्दचंद्रे वा ॥ नवमेशमुथशिले सति नवमस्थे वा भवेद्गमनम् ॥ लग्नस्थे नवमपतौ लग्नाधिपमुथशिले च संचारात् ॥ रहितोऽपि याति न पुनर्नवमदृशा वर्जिते योगे ॥ लग्नपतौ केंद्रस्थे सहगमनं मुथशिले च विक्रूरे ॥ गमनं स्यादस्मिन्वा चंद्रे केंद्रस्य मुथशिलेन गतिः ॥ नृपयात्रापृच्छायां धनस्थिते निरधिकारिणि क्रूरे ॥ पृष्ठगतानामशुभं भौमेग्निभयं ससझटकं समरम् ॥ मन्दे चौरजलभयं कंबूलक्रूरतो न भयम् ॥ धननाथे नीचस्थे चास्तमिते शोभनं न पुनः ॥ लग्नपशशिनोः क्रूरार्दितयोर्व्याकुल्य मीशाचित्तेर्तिः ॥ सक्रूरो लग्नकोशांतरगस्तदाप्तिक्रुद्गणतः ॥ आकाशान्तरगेस्मिन्मार्गदस्तुर्यमध्यस्थे ॥ अनुचरजस्य तुर्यविलग्नां तस्थे न भद्रामितरेषाम् ॥ मुथहाया द्यूनसंस्थः स्वगृहोच्चततश्शशी ॥ विदेशगमनं कुर्यात् क्लेशः पापेक्षणाद्भवेत् ॥ वामनः ॥ शुक्रे ब्दपे त्रिनवगे पथि सौख्यम्प्रजायते ॥ तस्मिन्नस्तंगते वक्रे क्रूरयुक्ते गमोशुभः ॥ बुधेब्दपे त्रिधर्मस्थे देवयात्रां समादिशेत् ॥ गुरौ त्रिनवगेब्देशे नृणां शुभगमो भवेत् ॥ यामे धर्मेशलग्नेशौचिंतितं गमनं भवेत् ॥ गुरोर्नवमगे भौमे नृणां शुभगमो भवेत् ॥ हिल्लाजः ॥ यत्र जन्मनि मन्दस्स्यात्सराशिर्नवमेऽब्दतः ॥ जन्माधिकारी ज्ञः क्रूरयुतोज्ञः शकटाध्वदः ॥ जन्माधिकारिणि बुधे कुजास्पदगते सति ॥ पापयोगादि रहिते सुयानङ्कदितम्बुधैः ॥ जन्माधिकारसहितौ जीवेन्दू पापसंयुतौ ॥ वर्षे नवमगौ मन्दस्थाने दूरगमप्रदौ ॥ जन्माधिकारी वा भौमः शनिस्थाने शुभान्वितः ॥ लग्नान्नवमगो वर्षे दूरयात्राप्रदायकः ॥ सर्वे मागगता वर्षे मार्गसद्मेश्वरे गमः ॥ जीवस्थाने त्रिधर्मस्थे कुजे तत्र शुभो गमः ॥ बुधस्थाने कुजो लग्नाधीशदृष्टस्सुयानदः ॥ सत्रे भौमः स्वराशिस्थो वर्षे नवमगो भवेत् ॥ स्वगृहे संस्थितो यात्रामुत्तमां संप्रयच्छति ॥ वर्षेधिकाररहितः शनिर्धर्मे कुयानदः ॥ वर्षे धिकाररहिते गुरौ नवमसंस्थिते ॥ दूरयात्रा तत्र नृपाद्धनमानादिलब्धयः ॥ भौमेब्दपे च पतिते स्वजनादरतो गमः ॥ ॥ नवमाधीशकंबूलयोगे यात्रां विनिर्दिशेत् ॥ स्वगृहोच्चगतश्चन्द्रो नवमे यदि संस्थितः ॥ मुथहा सप्तमे तत्र विदेशगमनम्भवेत् ॥ हायनसिन्धौ ॥ वर्षेशे सबले मार्गे वर्षयात्रा सुखप्रदा ॥ तस्मिन्नस्तङ्गते वक्रे निर्बले दुःखदो गमः ॥ गुरुभे नवमश्चंद्रस्सबलोऽब्दे सुयानदः ॥ मन्दोब्दपोनाधिकृतो नवमस्थः

कुयानदः ॥ गुरुरेवंविधो वर्षे दूरयात्राप्रदायकः ॥ एवन्त्रिनवगो भौमः क्रूरदृष्टः कुयानदः ॥ जन्मलग्नाधिपो मार्गाधिपो वा नव
मास्थितः ॥ त्रिगो वा यानदस्सौम्यो जन्मकालेंकभावगः ॥ स एव वर्षे मार्गस्थश्शुभयात्राप्रदायकः ॥ स्वल्पांशो धर्मपश्शीघ्रो
बृहदंशो विलग्नपः॥मन्दगश्चोभयोरित्थशाले कस्माद्गमो भवेत् ॥ स्वल्पांशो लग्नपश्शीघ्रो बह्वंशो धर्म्मभावपः॥अल्पगश्चोभयोरि
त्थशालश्चिंतितमार्गदः ॥ वर्षेशत्रर्षलग्नेशयोगश्चिंतितमार्गदः ॥ मुन्थालग्नपयोर्योगो वर्षे स्याच्चिन्तिताध्वदः ॥ तत्र तेजास्सिंहेन वर्षेश
लग्नेशयोरित्थशाले अचिन्तितयात्रायोग उक्तः ॥ वृथांगपे मुथशिलेब्दभुजा विवित्यस्स्याचिन्तितश्च विपरीतगतेत्थशाले इति ॥ वर्षतन्त्रे॥
वर्षेशो बलवान्पापायुतः केन्द्रेधिकारवान् ॥ अधिकारे गतिस्संख्ये सेनापत्येपि वा वदेत्॥ एवंविधे कुजे जीवयुते कोन्निर्गते पुनः ॥
परसैन्योपरिगतिर्जायाख्यातिः सुखावहा ॥ एवंविधे केन्द्रवर्तिनि बलयुतेऽधिकारवति क्रूरग्रहरहिते भौमे योग उक्तस्तेजस्सिंहेन ॥ केंद्रेब्दपे
विमलिने सबले च साधिकारेधिकारगतिरुक्क्षयवैभवाद्यम् ॥ केंद्रे कुजे गुरुयुते खलनिर्गतेरिसैन्योपरिप्रगतिरत्नजयादिसौ
ख्यम् ॥ यादवः ॥ यानाद्यं विबलबलानुसारिवेद्यं मुन्थायामशुभशुभर्क्षखेटभाजि ॥ स्वोच्चाब्दे किसिमपतौ जनुर्नतेशे मार्गेशादपि
सहमाच्च चिन्त्यमेवम् ॥ ताजिकतिलके ॥ जामित्रगस्तु मुथहा भवनाच्छशाङ्कः स्वोच्चादिगोचरगतो गमनं विदध्यात ॥ द्रव्यार्ज
नादिगमने खलु पुण्यसद्म वीर्य्येण ताजिकविदां सुधियात्र वाच्यम् ॥ अथ यात्रायां दिग्ज्ञानमुक्तं रोमकेण ॥ अग्निराशिर्भवेत्पूर्वा
दक्षिणा पृथिवी भवेत् ॥ वायुराशिः पश्चिमा च सौम्याशा जलभे स्मृता ॥ अत्र यात्रा योगकारकाणां ग्रहाणाम्मध्ये यो बलवांस्तदधि
ष्ठितराशौ गमनं वाच्यम् ॥ बलसाम्ये तन्मध्ये केंद्रस्थग्रहाधिष्ठितराशौ गमनं वाच्यम् ॥ तदभावेपि नवमभावराशिदिग्गमनं वाच्यमिति विशेषः ॥
चण्डेश्वरः ॥ वर्षलग्नात्त्रिकोणस्थे ज्ञे भृगौ वा बलान्विते ॥ विदेशं याति गेहस्थो दिवेशस्थो गृहं व्रजेत् ॥ सुखे व्योम्नि
स्थिते सौम्ये गमनं न तदा भवेत् ॥ तत्रैव गमनं पापे वक्री खेटो यदा न हि ॥ भाग्यपो लग्नपो वा स्याच्चंद्रगो वा विशेषतः ॥
चन्द्रलग्नेश्वरौ भाग्ये गमस्तत्राप्यचिन्तितः॥चन्द्रो लग्नपतिर्वापि केंद्रे खेटैस्सहाग्रगः ॥ सिद्धेपि गमने तत्र गमनन्नेति निश्चितम्॥
द्यूनपे धर्म्मगे यानमवश्यंनिर्दिशेद्बुधः ॥ चरराशिषु केंद्रेषु शुभयुक्तेषु निश्चितम् ॥ ग्रामादौ गमनम्ब्रूयात्पापयुक्ते चिराद्भवेत् ॥

चरस्वभावादशमादशुभेशनिरीक्षणात् ॥ अशुभेक्षणयोगाच्च प्रयाणामिति कथ्यताम् ॥ उदयद्यूनचंद्राणां कर्तरी पापसंभवा ॥ यात्रायाश्च
तदा वाच्यं भयं चौरारिशस्त्रजम् ॥ कर्तरी शुभसंभूता गमनप्रतिबंधिका ॥ हिल्लाजः ॥ तृतीयधर्म्मगो भौमो नष्टवीर्यः शनेः पदे ॥
पुण्यनाशकरः सूर्यो वर्षेशो हीनवीर्यवान् ॥ त्रिधर्मगः पापकरो नष्टो मन्दोब्दपस्तथा ॥ मन्दोब्दपस्त्रिधर्म्मस्थो धर्म्मदो बलसं
युतः ॥ गुरुस्त्रिधर्मगोब्देशो नृपाद्रव्यकरो बलः ॥ मुन्था त्रिधर्म्मगा पुण्यप्रदा पापयुतान्यथा ॥ दग्धे नष्टे क्रूरयुते धर्मेशे ज्ञाति
नाशनम् ॥ जीर्णताजिके ॥ मूर्तिम्मूर्तिपतिः पश्येद्भाग्यं पश्यति भाग्यपः ॥ भाग्यं लग्नपतिर्लग्नम्भाग्यपः पश्यति ध्रुवम् ॥ भाग्ये
लग्नपतिस्तिष्ठेल्लग्ने भाग्यपतिर्यदा ॥ भाग्यलग्नपती खर्क्षे वर्षे भाग्योदयो भवेत् ॥ अथ नवमभावस्थितानांसूर्यादीनाम्फलानि पद्मकोशे ॥
धर्म्मस्थितोर्कश्च सहोदराणाम्पीडाकरःक्लेशविवर्धनश्च ॥ धर्मप्रदो राज्ययशःप्रदश्च तद्वर्षमध्ये स्वदशाङ्गश्चेत् ॥ पुण्योदयन्धर्म्म
गतश्शशांकोभाग्योदयश्चार्थसमागमश्च ॥ तीर्थाटनं भूमिपतेश्च लाभं शुभेक्षितः पुत्रसुखं सितेन्यत् ॥२॥ धर्म्यगते भूमिसुते च वर्षे
पुण्योदयोवित्तसमागमश्च ॥ भाग्योदयो मानविवर्द्धनश्च महाप्रतिष्ठाम्बरलब्धिरत्र ॥३॥ धर्म्मस्थितश्शशिसुतस्सुतलाभसौख्यमर्थागमं
सततमंगलमाशु कुर्यात् ॥ भूपाज्जयो भवति कीर्तिविवर्द्धनश्च भाग्योदयो रिपुविनाशनमत्र वर्षे ॥ ४ ॥ वाचस्पतिर्द्धर्मगतो नराणां
करोति धर्मम्बहुलं सुखञ्च ॥ भाग्योदयश्चार्थसमागमश्च तीर्थाटनं पुण्यमतिम्प्रकुर्यात् ॥ ५ ॥ धर्मस्थितो धर्म्मकरः कविस्स्यान्नरे
न्द्रतुल्यं च नरं करोति ॥ सुखप्रदो वाहनभूषणानां गोभूहिरण्याम्बरलाभमाशु ॥६॥ भाग्योदयं भाग्यगतः शनिश्चेद्भूयोर्थदः शत्रुवि
नाशनश्च ॥ कीर्तिं श्रियम्मानमथापि दत्ते सहोदराणां भयमार्तिदश्च ॥७॥ धर्मस्थितो धर्मविवर्द्धनोगुरुर्जयन्नृपाच्छत्रुविनाशनश्च ॥
भाग्योदयश्चार्थसमागमश्च करोति पीडां पशुबांधवेषु ॥ मणित्थः ॥ जायापुत्रविवादश्च मातिर्धर्मक्रियादिषु ॥ चित्तोद्वेगाकुलान्नित्यं न
वमे तपनो यदि ॥ नवमे धर्मलब्धिश्च मनस्संतोष एव च ॥ यशोवृद्धिर्नृपान्मानो वर्षादौ च निशाकरे ॥ २ ॥ पापलब्धिर्भवेत्पुंसा
मुद्वेगो विभवक्षयः ॥ कलहो बंधुवर्गैश्च नवमे धरणीसुते ॥ ३ ॥ धर्मबुद्धिस्तथोद्वेगं दैन्यं जायाप्रपीडनम् ॥ चंद्रजः कुरुते वर्षे
नवमस्थो यदा नृणाम् ॥ ४ ॥ धनलाभो राज्यसौख्यं धर्मकार्ये भवेत्सदा ॥ प्राप्नोति विविधान्भोगान्देवेज्ये नवमास्थिते ॥ ५ ॥

शरीरे चैवमारोग्यं सद्बुद्धिर्विभवागमः ॥ पुत्रजायादिकं सौख्यं नवमे भृगुजे नृणाम् ॥ ६ ॥ जायापुत्रसुहृत्कष्टं धननाशोनृपाद्भयम् ॥ दुर्म्मतिः पापबुद्धिश्च नवमे भास्करात्मजे ॥ ७ ॥ विद्वेषश्च वपुःपीडा दैन्यं राजादिपीडनम् ॥ धर्मकार्ये विलम्बश्च राहुर्धर्म्मगतो यदि ॥ ८ ॥ इति नवमभावविचारः ॥ अथ दशमभावविचारः ॥ तत्र दशमभावे किञ्चिन्तनीयमित्युक्तं चण्डेश्वरेण ॥ आकाशवृत्तान्तजलप्रपातः स्थानं पितुः कार्यसुखादिमानम् ॥ पुण्यन्नृपत्वं च तथाधिकारो मुद्राच्युतिस्तद्दशमे विचिन्त्यम् ॥ अत्रापि पूर्ववद्विचारः ॥ अथ योगाः ॥ वामनः ॥ वर्षेश्वरे गगनगे राज्याप्तिः स्याद्बलान्विते ॥ भवेत्स्थानान्तरप्राप्तिरन्यकेंद्रगते १।४।७ सति ॥ वर्षेशोर्कश्चतुर्थस्थः पूर्वार्जितपदाप्तिदः ॥ वर्षेशोर्को लाभगतस्सख्यं स्यान्नृपमंत्रिभिः ॥ वर्षेशस्सूर्यो लग्नगो दशमस्थो वा राज्यदस्स्यादिति ॥ यादवः ॥ वर्षेश्वरे वामिहरेथ लग्नस्वस्थे सवीर्ये कुलरूपराजता ॥ नीचस्थे क्रूरयुक्तेर्के स्वस्थे स्याद्वंधनं नृपात् ॥ समरसिंहः ॥ लग्ने गगनेथ रविस्थाने मुथहागमे हि राज्याप्तिः ॥ जन्मनि सिंहगतेर्के वर्षे बलिनि प्रभोः पदप्राप्तिः॥चंद्रे भौमस्थानान्तरकारकत्वं स्यात् ॥ अथ वर्षेशश्चंद्रो दशमगो भौमस्थाने स्थानलाभदो भवतीत्याह यादवः॥ इलाजभस्थे चनभो १० निशाकरे परास्पदाप्तिस्त्वहवर्षवेशन इति ॥ मन्दस्थाने भौमे पश्यति मुथहा कुकर्मता नृपभीः ॥ दशमभवने एते योगा इति केचित् ॥ गगनपवर्षपलग्नाधीशानां मुथशिले हि राज्याप्तिः ॥ नृपसहमपेब्दनाथे रतीत्थशाले च नृपयोगः ॥ जीर्णताजिके ॥ दशमाधीश्वरस्सूर्यो जन्मकालेब्दवेशने ॥ दशमस्थो विलग्नेशेत्थशाली राज्यदायकः ॥ पापार्दितो नष्टबलो राज्येशो राज्यनाशदः ॥ सारे शनौधिकारणे हीने व्याकुलता भवेत् ॥ तेजासिंहः ॥ जन्मागपोब्दसमये यदि कर्मनाथः कर्मेश्वरो जनुषि लग्नपतिश्च वर्षे॥कर्माङ्गदृष्टियुतितस्सबलः पदाप्तिं कुर्यात्तदेत्यखिलभावफलं विलोक्यम् ॥ व्योमाब्दपेब्दजनुषोश्च हतेव्ययाष्टद्विस्थे शुभे इह हि नान्यशुभेपि योगे ॥ कर्म्माश्रिते सहमपे शनिदृष्टयुक्ते कर्मक्षतिर्दशमपेपि विनष्टदग्धे॥ वर्षतंत्रे ॥ स्वर्क्षोच्चगे कर्मणि सूर्यपुत्रे नैरुज्यमर्थाधिगमश्च जीवे ॥ सूर्ये नृपाद्बाहुबलात्कुजेर्थो बुधे भिषग्ज्योतिषकाव्यशिल्पैः ॥ षडष्टव्ययगेब्देशे कर्मेशे च बलोज्झिते ॥ सूतावब्दे च न शुभं तत्राब्दे मृतिपे ६।८।१२ तथा ॥ यादवः ॥ द्रव्येशेन समासुजन्मानि तनूनाथेत्थशाले तथा

द्रव्येशेन समाङ्गपेन शुभयुग मुन्थेश्वरस्यापि वा ॥ वर्षेशेन जनुः खपेन च तथा योगे तु राज्यादिकं सूर्येस्तेनाधिकारक जनितनू पापैर्युते चापि तत् ॥ वर्षाङ्गाद्दशमे तु राज्यसहमे सौम्याक्षियुक्ते तदा तद्वृद्धिर्जनिवर्षखस्थितिरवौ लग्नेशयोगेग्रके ॥ तद्वज्जन्मनि कर्म्मपेब्दकिसिमं याते च तत्स्थे समा कर्मेशे जनिसादये समुदिते दृष्टे युते च द्वये ॥ जनौ खपेवा नृपसादये वा समुद्गते राज्यप दातिगौरवम् ॥ समापतौ जन्मनभोमहीभुजा समूथशीलेथ नभोङ्गनाथयोः॥स्ववंशमानेन नृपत्वलब्धिता सादे शुभेब्दे जननेपि राज्यम् ॥ हिल्लाजः ॥ वर्षेश्वरे रवौ चन्द्रस्थानगे रविनंदने ॥ जन्माब्दकालयोः पापाक्रांते स्यात्कर्मनाशनम्॥तादृशे च शनौ वक्रे दग्धे निष्फलता भवेत् ॥ सर्वकर्मसु कर्मेशकर्मभावौ शनीक्षितौ ॥ युक्तौ वा कर्मवैकल्यं कर्मसद्मफलन्तथा ॥ लग्नाधिपेन वार्केण इत्थशालं करोति चेत् ॥ दशमेशस्तदा वर्षेवश्यं स्यान्नृपदर्शनम् ॥ कर्मेशस्याग्रतो यातौ यदा लग्नपभास्करौ ॥ खगो लग्नेश्वरो वास्यान्नृपेण सह सङ्गमः ॥ चूडामणौ ॥ लग्नेशस्स्वोच्चनाथेन तुङ्गादिस्थेन वीक्षितः ॥ अभीष्टपदलाभाय लग्नेलग्नेश्वरे तथा ॥ सौम्यस्वामियुते दृष्टे पदप्राप्तिस्स्थिरे तथा ॥ एवमेव पदस्थाने वृश्चिके स्वल्पसिद्धिकृत् ॥उदिते राज्यपे राज्यं चरवर्ज्यं शुभग्रहैः॥ पदस्थैर्युते दृष्टे क्रूरैश्चापि पदच्युतिः॥ पदेशश्चेत्पदं पश्येत्पदं तस्य स्थिरं भवेत् ॥ लग्ननाथपदाध्यक्षावन्योन्यं यदि पश्यतः ॥ लग्ननाथनभोनाथचन्द्राद्योर्ग्नि पदार्थदाः ॥स्वोच्चे लग्ने शुभः खेटः सौम्यदृष्टः पदप्रदः॥ सप्तमे चाष्टमे शुक्रे पदलाभस्स्वभावतः ॥ बुधेन गुरुणा वापि युक्ते शुक्रे महत्पदम् ॥ सचन्द्रे स्वामिनः प्रीत्या सकुजे कलहार्दितः ॥ पदन्नैव ससौरे स्यात्साकौमिथ्या तु तत्पदम् ॥ पदसिद्धिश्शुभैर्युक्ते पापयुक्ते पदच्युतिः ॥ स्थिरोदये पदप्राप्तिश्शुभस्स्वामियुतेक्षिते ॥ इत्थमेव पदस्थाने सा स्वल्पा किंतु वृश्चिके ॥ लग्ननाथनभोनाथौ चन्द्राढ्यौ च फलप्रदौ ॥ मध्यपे सशुभे राज्यं राज्यभ्रंशस्सपापके ॥ पदावाप्तिर्भवेच्छीर्षोदये लग्ने शुभान्विते ॥ समरसिंहः ॥ दशमस्वामी लग्ने पश्यति लग्नंनृपाल्लाभः ॥ राज्ञश्चित्तं कीदृक् तत्रापि विनिर्दिशे दैवम् ॥ लग्नेशदशमपत्योस्स्नेहदृशा स्याच्छुभश्चित्तम् ॥ क्रूरदृशा विपरीतन्दृष्ट्याभावे च मध्यमं प्रोक्तम् ॥ अन्यत्रापि ॥ स्वकीयस्वामिना सार्द्धं प्रीतिर्वृषतुलालिनि ॥ लग्नेवश्यं समादेश्या कन्यालग्ने च मध्यमा ॥ अथ दशमभावस्थितानां सूर्यादिग्रहणाम्फ

लानि पद्मकोशे ॥ यदा दिनेशो गगनाश्रितस्स्याद्राज्यार्थदो मानविवर्द्धनश्च ॥ हिरण्यभूम्याम्बरालाभकारी चतुष्पदाङ्गेषु रुजो विवृद्धिः ॥ १ ॥ कर्मोदयं प्रकुरुते गगने शशाङ्को द्रव्यागमन्नृपकुलाद्रिपुपक्षनाशम् ॥ व्यापारतो बहुसुखम्महतीम्प्रतिष्ठां कीर्तिन्तथा धनयुताम्प्रकरोति वर्षे ॥ २ ॥ कर्म्मस्थितो भूतनयोब्दमध्ये कर्मोदयश्चार्थसमागमश्च ॥ राज्यार्थलाभश्च महाप्रतिष्ठां करोति मानम्पशुघातनश्च ॥ ३ ॥ गगनगश्शशिजो यदि हायने भवति वाहनसौख्यकरस्तदा ॥ सुतविवृद्धिधनाश्वसमागमो विलसनश्च तथा नृपतेर्जयम् ॥ ४ ॥ व्योम्नि स्थितश्चेत्सुरराजमन्त्री हेमाम्बराप्तिश्च जयङ्करोति ॥ भूपप्रसादात्क्षितिगोधनाप्तिं स्याद्धायने शत्रुविनाशनश्च ॥ ५ ॥ गगनगे भृगुनंदनसंज्ञके नृपसमो मनुजोथ महाजयः ॥ भवति गोधनधान्यसमागमो बहुसुखं कृषिवाहनयोस्सदा ॥ ६ ॥ गगनगः कृषिहानिकरश्शनिः पशुजनं स्वजनोदरपीडनम् ॥ नृपसमंमनुजश्च महाधनम्प्रकुरुते क्रयविक्रयलाभकृत् ॥ ७ ॥ सिंहीसुतो दशमगः क्रयविक्रयेषु लाभन्नरन्नृपसमम्प्रकरोति वर्षे ॥ भूपाज्जयं सततमङ्गलमाशु कुर्यात्कीर्तिं श्रियं भवति वाहनहानिकारी ॥ ८ ॥ मणित्थः ॥ राजमुद्रादिजं सौख्यसिद्धारम्भः सुखन्धनम् ॥ प्रख्यातं वंशविस्तारं वर्षे दशमगे रवौ ॥ १ ॥ द्रव्यागमं वस्त्रलाभं रोगनाशन्तथैवच ॥ प्रतिष्ठा कीर्तिलाभश्च वर्षे दशमगे विधौ ॥ २ ॥ व्यापारन्धनलाभश्च प्रसादम्भूमिपालतः तेजोवृद्धिस्तथारोग्यं दशमस्थे महीसुते ॥ वाणिज्याद्राज्यवर्गाच्च धनलाभं सुहृत्सुखम् ॥ बलं कांतिविवृद्धिश्च हायने दशमे बुधः ॥ सत्कीर्तिर्भूभृतोमानं धनलाभं सुहृत्सुखम् ॥ गेहे महोत्सवो नित्यं देवेज्यो दशमे यदि ॥ नृपमानं सुहृत्सौख्यंधनलाभं रिपुक्षयम् ॥ सर्वारंभाः प्रसिद्ध्यंति दैत्येज्ये दशमे नृणाम् ॥ व्यापाराद्धनहानिश्च भयं भूपालसंभवम् ॥ सुखे दैन्यम्प्रवासश्च दशमे रविनंदने ॥ भूमिनाशो भयन्नित्यं देहपीडा धनक्षयः ॥ इष्टस्वजनविद्वेषं राहौ दशमसंस्थिते ॥ इति दशमभावविचारः ॥ अथ लाभभावविचारः ॥ तत्र लाभभावे किंचिंतनीयमित्युक्तं चण्डेश्वरेण ॥ कार्यस्य सिद्धिः क्षयवृद्धिलब्धिर्गजाश्ववस्त्रासनयानशय्या ॥ विद्यार्थलाभोप्यथ नष्टलाभः कन्यासुवर्णस्य च लाभकार्यम् ॥ तनूरुहादेश्श्वसुरादिकश्च समस्तलाभः खलु लाभभावे ॥ अत्रापि पूर्ववद्विचारः ॥ अथयोगः ॥ जीर्णताजिके ॥ बुधे वर्षेश्वरे सौम्यसंदृष्टे धनलाभगे ॥ लाभो वाणिज्यतस्सौम्यलग्नगे शुभहायुते ॥ लिख

नात्पठनाल्लाभो वर्षे भवति निश्चयात् ॥ वर्षेश्वरे बुधे षष्ठाष्टान्त्यगे क्रूरसंयुते ॥ नीचकर्मकृतो लाभस्स्वल्पो ज्ञे पापवीक्षिते ॥ बुधेस्तगे तादृशे च न लाभस्स्यात्कदाचन ॥ तेजःसिंहः ॥ लाभाधिपे तनुभुजाविदितेत्थशाले वीर्यान्विते च परिवारधनादि वृद्धिः ॥ एवम्फलन्तु मुथहापतिनाङ्गभोक्ता सर्वेपि लाभगृहगा धनदास्सवीर्याः ॥ वामनः ॥ वर्षेश्वरे लाभगते सौम्यग्रहयुतेक्षिते लिखनात्पठनाल्लाभस्तथैव व्यवहारतः ॥ वर्षतंत्रे ॥ सवीर्योज्ञः समुथहालग्नेर्थसहमे शुभाः ॥ तदानिखातद्रव्यस्य लाभः पापदृशा न तु ॥ ताजिकभूषणे ॥ गगनभवनसंस्था मुन्थहा वर्षकाले लिखनपठनलाभं सत्वयुक्ता करोति ॥ निजपति सहिता सा रन्ध्रशत्रुव्यवस्था वितरति बहुविघ्नं प्रातिकाले नराणाम् ॥ लाभे लाभेशः शुभैर्दृष्टयुक्तः स्वोच्चस्थश्चेद्दूरसंस्थश्च सूर्य्यात् मातङ्गाश्वावाप्तिमुर्वीविभूषायोषा हर्षोत्कर्षयुक्तं करोति ॥ यादवः ॥ जन्माङ्गपे लग्नपतीत्थशाले मुन्थेश्वरेणापि समेश्वरेण ॥ द्रव्येशमुख्याख्ययुतौ च लाभे जन्माब्दयोर्लाभशुभेब्दके च ॥ लग्नग सहमपे च खलार्ते देवमन्त्रिणि धनक्षतिरुग्रा ॥ जन्मवित्त भुजिवर्षतनूपे मूथशीलिनि निजोचितलाभः ॥ हिल्लाजः ॥ लग्नलाभपती लाभे लग्ने वा लग्नलाभपौ ॥ लग्ने लाभादिगो वा स्याल्लाभे लग्नाधिपो भवेत् ॥ एकोपि हि यदा योगस्तदा लाभस्सुनिश्चितम् ॥ चंद्रयोगे विशेषेण पूर्णो लाभः प्रकीर्तितः ॥ लाभे लग्नाधिपास्तिष्ठेल्लाभाधीशेन संयुतः ॥ तदा लाभकरश्शीघ्रश्चंद्रयुक्तो विवृद्धिदः ॥ लाभपो लग्नपो लाभे लग्नपस्तत्पुरोथवा ॥ पञ्चमे बलवान्सौम्यस्तदा लाभस्सधर्म्मकः ॥ लग्नलाभपयोर्दृष्टिर्लाभे लाभकरी मता ॥ निष्फलाः कथिता योगा यदि चंद्रो न पश्यति ॥ सर्वग्रहेक्षिते लाभे लाभो विंशाविशोपकः ॥ एवं सर्वेषु भावेषु वाच्यं सर्वग्रहेक्षणात् ॥ शशिलाभपलग्नेशा अन्योन्यं युतवीक्षिताः ॥ लग्नात्त्रिकोणवित्तस्थाः शीघ्रं लाभप्रदा मताः ॥ तिर्यग्योनौ गते लग्ने तिर्यग्योनिगतोथ वा ॥ लाभेशश्शुभदृष्टश्चेत्पशुलाभस्तदा भवेत् ॥ विलग्नसप्ताष्टमगाः पञ्चमस्थाः शुभग्रहाः ॥ वा चंद्रलग्नपौ षष्ठे बलिनौ ऋणलाभदौ ॥ समरसिंहः ॥ नृपतेर्गौरवलाभो मे स्यादिति लग्नलाभपत्योश्च ॥ स्नेहदृशा शीघ्रं स्याद्रिपुदृष्ट्या बहुदिनैरेव ॥ आयेशे केंद्रस्थे शशियुतदृष्टे च पूर्णफलमस्ति ॥ स्थिरराशौ परिपूर्णं चरेल्पमर्द्धं भवेन्मिश्रे ॥ देवगुरौ केंद्रगते

स्वोच्चादिगते च नृपशुभाशापूर्णफलाक्रूरग्रहपीडिते शीघ्रनाशस्स्यात् ॥ अथ लाभभावस्थितानां सूर्यादीनाम्फलानि पद्मकोशे ॥ रविर्लाभगो लाभकारी नृपात्स्याद्धनाप्तिश्च धान्यांबरं वै हिरण्यम् ॥ विलासादिसौख्यं रिपूणां विनाशं सुताङ्गेषु पीडा भवेत्तद्दशायाम् ॥ १ ॥ रिपोर्नाशनं लाभसंस्थे शशांके बहुद्रव्यलाभं क्रये विक्रये च ॥ नृपात्सौख्यलाभस्सुतस्यागमश्च प्रतिष्ठा विवृद्धिर्भवेद्धायनेस्मिन् ॥२ ॥ अवनितनयलाभे राज्यलाभोर्थलाभो भवति रिपुविनाशो मित्रपक्षाज्जयश्च ॥ हयभवनहिरण्यं प्राप्यते चांबराणि तनयसुखविनाशो जायते हायनेस्मिन् ॥ ३ ॥ लाभस्थितः शशिसुतो जयसंपदश्च धान्यांबराणि बहुलानि करोत्यवश्यम् ॥ कांतेर्विवर्द्धनमथार्तिविनाशनञ्च स्याद्धायने पशुविवर्द्धनमत्र लाभः ॥ ४ ॥ जयो मानवानां सुरेज्ये च लाभे भवेद्वाहयानां गजानाञ्च लाभः ॥ सुतस्योदयो जायते शत्रुनाशः प्रतिष्ठाविवृद्धिर्नृपाच्चापि सौख्यम् ॥ ५ ॥ कविर्लाभगो लाभकृत्स्वर्णदःस्याज्जयम्मानवानां करोतीह वर्षे ॥ सुतानां विवृद्धिःसुखं राजपक्षाद्रिपूणां विनाशो तथा मित्रवृद्धिः ॥ ६ ॥ लाभस्थितो भास्करसूनुरत्र हिरण्यगोभूमिरथाश्वलाभम् ॥ अर्थागमङ्कीर्तिविवर्द्धनञ्च सन्तानपीडाम्प्रकरोति वर्षे ॥ ७ ॥ लाभस्थितश्चेत्खलु सैंहिकेयो नरन्नरेन्द्रेण समङ्करोति ॥ हिरण्यगोभूधनसञ्चयञ्च शत्रुक्षयम्पुत्रभयन्तथैव ॥ ८ ॥ मणित्थः ॥ वाजिवृषादिद्रव्याप्तिः प्रमोदस्स्वेष्टवर्गतः ॥ नृपप्रसादमारोग्यं वर्षे लाभगते रवौ ॥ १ ॥ पुत्रवस्त्रादिकप्राप्तिर्द्धनस्वालयसंभवः ॥ श्वेतक्रयाणकाल्लाभो वर्षे लाभस्थिते विधौ ॥ २ ॥ जायापुत्रसुहृत्सौख्यम्प्रतापो विभवागमः ॥ शत्रुक्षयन्नृपात्सौख्यं लाभगे भूमिनन्दने ॥ ३ ॥ द्रव्यलाभन्तथारोग्यम्प्रभोः प्रीतिविवर्द्धनम् ॥ शुभक्रयाणकाल्लाभो लाभस्थाने यदा बुधः ॥ ४ ॥ आयुरारोग्यमैश्वर्य्यआयापत्यसुहृत्सुखम् ॥ नृणाञ्चतुष्पदप्राप्तिर्देवेज्यो लाभगो यदि ॥५॥ जलमार्गाद्धनप्राप्तिस्तथा शुभक्रयाणकात् ॥ प्रियागमस्तथा सौख्यं लाभगे भृगुनन्दने ॥६॥ द्रव्यागमन्तथैश्वर्य्यमारोग्यं योषितां सुखम् ॥ शूरस्वल्पाश्रितो लाभो वर्षे लाभगते शनौ ॥ ७॥ शरीरारोग्यमैश्वर्यं स्त्रीसुखं विभवागमः ॥ सङ्कीर्णवर्णतोलाभो राहुर्लाभगतो यदि॥८॥ इति लाभभावविचारः॥ अथ व्ययभावविचारः तत्र व्ययभावे किं विचारणीयमित्युक्तश्चण्डेश्वरेण॥ त्यागादिभोगादिविवाहदानकृष्णादिकर्म्मव्ययसंज्ञकञ्च ॥ पितृव्यमातृष्वसृमातुलानां युद्धं क्षतिर्युद्धपराजयश्च ॥ सम्प्रेक्षणश्चेच्छ्वशुरादिवित्तं कुलन्तथैतत्क

थितं व्ययाख्ये ॥ अत्रापि विचारः पूर्ववत् ॥ अथ योगा जीर्णताजिके ॥ लग्नाब्दपौ नष्टबलौ व्ययाष्टरिपुसंस्थितौ ॥ नृपे भृत्यक्षयोन्यक्षं स्याच्चतुष्पदनाशनम्॥ वर्षेश्वरे सिते षष्ठे स्थिते भृत्यक्षयो नृभे ॥ चतुष्पदेश्वादिनाशो विबले क्रूरवीक्षिते ॥ दशमस्थे स भौमेन्दौ स्याच्चतुष्पदनाशनम् ॥ व्याकुलत्वञ्च भौमाब्दौ चन्द्रे व्ययगते तथा ॥ षष्ठगेब्दपतौ सूर्ये सपापे पशुमाश्रिते ॥ भृत्यैस्समङ्कलिर्वर्षे व्ययाष्टस्थेपि तत्फलम् ॥ मंदेब्दपे बलयुते रिपुरिःफगते तथा ॥ भूतासनं द्रुमारोपो जलाश्रयकृतिर्भवेत् ॥ वामनः ॥ व्ययस्थे वर्षपे मंदे गुरौ वा शुभवीक्षिते ॥ आवासनिर्मितां भूमिप्राप्तिं तत्र विनिर्दिशेत् ॥ यादवः ॥ भौमे चतुष्पदयुते दशमे चतुर्थे मंदावलोकितयुते स्वहतिस्तथार्तिः ॥ षष्ठे सितेब्दाधिपतौ चतुर्थे क्रूरेण दृष्टे च युते रुगार्तिः ॥ ताजिकसारे ॥ मन्दान्वितो रात्रिपतिर्व्ययस्थो देवार्चितः षष्ठगतो विलग्नात् ॥ तदार्थनाशंप्रकरोति शीघ्रं भूपादथा चौरजनाच्च दुष्टात् ॥ अत्र विशेषमाह तेजःसिंहः ॥ भावा इमेब्दजनुषोरपि वीर्ययोगाद्द्युः फलं स्वमबलाः फलहानिदाः स्युः ॥ कल्पन्धनादिषु विलग्नमतश्च केंद्रमुख्याखिलानि भवनानि मतानि तज्ज्ञैः ॥ त्रैलोक्यप्रकाशे ॥ द्वादशे शोभनः खेटो विवाहादिषु सद्व्ययम् ॥ क्रूरोप्यसद्व्ययं राजदस्युभ्यः कुरुते ग्रहः ॥ व्यये सूर्ये नृपाद्दण्डश्चंद्रे क्षीणे च कष्टतः ॥ कुजे क्रीडाविनोदादौ बुधे तु क्रयविक्रयात् ॥ जीवे धर्मव्ययस्तत्र शुक्रे वेश्यादिकर्मसु ॥ शनौ व्यये व्ययः क्रौर्ये त्वविनष्टो यदा ग्रहः ॥ वर्षतंत्रे ॥ यत्र भावे शुभफलो दुष्टो वा जन्मनि ग्रहः ॥ वर्षे तद्भावगस्तादृक् तत्फलं यच्छति ध्रुवम्॥ ताजिकभूषणे ॥ प्राच्या विचारानुमतं नितांतं मयोदितं द्वादशभावजातम् ॥ फलम्बलं वीक्ष्य नभश्चराणान्तद्योजनीयं हि दशासु तेषामिति ॥ अथ द्वादश भावस्थितानां सूर्यादीनां ग्रहाणाम्फलानि पद्मकोशे ॥ व्ययास्थितश्चेत्खलु भास्करोसौ स्त्रीविग्रहोद्वेगकरोंघ्रिरोगकृत् ॥ व्ययञ्च शीर्षोदरनेत्रपीडाङ्करोति चिन्तां रिपुभिर्विनाशम् ॥ १ ॥ शशांको व्ययस्थोरितः पीडनं स्यात्तथा सद्व्ययन्नेत्ररोगङ्करोति ॥ विवादञ्जनानां महाकष्टसाध्यङ्कफार्तिञ्च गुल्मोदयन्तत्र वर्षे ॥व्ययश्चापदो भूमिपुत्रे व्ययस्थे भवेन्नेत्रपीडाथ कर्णे विकारः ॥ शिरोर्तिर्जनानां विरोधस्तथास्यात्कलत्राङ्गपीडा भवेदत्र वर्षे ॥ ३ ॥ बुधे द्वादशस्थे रिपूणां विवादो व्ययो गुप्तचिन्ता च कर्णे विकारः ॥ दशानेष्टकारो भवेन्नेत्रपीडा कफार्तिश्च कष्टन्तथा हायनेस्मिन् ॥ ४ ॥

रिःफस्थितस्सुरगुरुर्बहुलव्यथाकृच्छत्रुप्रवादनृपभीतिकरो हि वर्षे ॥ नेत्राङ्गपीडनकफार्तिजनप्रवादं हानिर्भयं भवति शोकविकारकारी ॥ ५ ॥ व्ययगतभृगुजे स्यात्सद्व्यये वातपीडा रिपुजनपरिवादो नेत्रयोश्चापि रोगः ॥ भवति रिपुभयं वै शोकमोहादिकष्टं ज्वरवमनविकारम्मृत्युतुल्यम्भयञ्च ॥ ६ ॥ व्ययस्थानगे हायने सूर्य्यपुत्रे व्ययो विक्रये क्लेशचिन्ता च कष्टम् ॥ रिपूणां विकाराद्भवेदर्थनाशं शिरोर्त्यक्षिपीडा तथा हायनेस्मिन् ॥ स्थानभ्रंशो भवति नियमान्मानवानां व्ययस्थस्सिंहीपुत्रो रिपुभयमथो भृत्यमृत्युं विधत्ते ॥ शीर्षे कर्णे व्यथनमुदरे नेत्ररोगन्नराणां लक्ष्मीहानिस्स्वजनकलहः कामिनीनाम्प्रपीडा ॥ मणित्थः ॥ दृष्टिरुग्द्रव्यनाशश्च विद्वेषो बन्धुवर्गतः ॥ देहे पित्तोद्भवा पीडा वर्षे सूर्य्येव्ययस्थिते ॥ १ ॥ द्रव्यक्षयं क्षुधाल्पत्वं नेत्ररुक कलहो गृहे ॥ वर्षकाले व्ययस्थाने चन्द्रः कुर्यादिदम्फलम् ॥ २ ॥ दृशो रोगं वपुःकष्टं धननाशन्नृपाद्भयम् ॥ सुतजीवादिजं दुःखं हायने द्वादशे कुजे ॥ ३ ॥ स्वल्पलाभमनारोग्यम्बहुव्ययन्नृपाद्भयम् ॥ स्ववर्गे कलहन्नित्यं कुर्यात्सौम्यस्तु रिःफगः ॥ ४ ॥ स्वजनैर्विग्रहं दुःखक्षयोत्पत्तिर्द्धनव्ययः ॥ प्रवासो नृपतेर्भीतिर्देवेज्ये व्ययसंस्थिते ॥ ५ ॥ मित्रस्वजनविद्वेषस्सन्मार्गविभवव्ययः ॥ निस्सङ्गत्वम्प्रवासश्च द्वादशे भृगुजे नृणाम् ॥६॥ पादाक्षिहृदये पीडा द्रव्यानाशन्नृपाद्भयम् ॥ कलहम्बन्धुवर्गाद्यौ कुर्यान्मंदो व्ययस्थितः ॥७॥ धनव्ययश्च कष्टञ्च राजपीडा रिपुक्षयः ॥ जायापीडा भवेन्नित्यं स्वर्भानुर्द्वादशे यदि ॥ ८ ॥ अथ ग्रहाणां भावफलं स्वस्वदशासु फलदमित्युक्तं ताजिकभूषणे॥खेचारिणां भावफलानि यानि तानीह कल्प्यानि दशासु तेषाम् ॥ राहोस्तु यद्भावफलं निरुक्तं शनेर्दशायांखलुतत्प्रकल्प्यामिति॥विशेषमाह यादवः॥ स्वोच्चस्ववेश्मास्तगनीचशत्रुहद्दादिवर्गस्थितखेचराणाम् ॥ बलाबलत्वादि विचार्य्यसम्भवप्रोक्तानुसारेण वदेत्फलन्तु॥इति व्ययभावविचारः॥इति श्रीदैवज्ञवर्य्यपण्डितदामोदरात्मजबलभद्रविरचिते हायनरत्ने द्वादशभावविचाराध्यायः षष्ठः ॥ ६ ॥ अथ दशाविचारः॥तत्र दशाशब्देन शुभाशुभफलपाककाल उच्यते ॥ अथ पूर्वोक्ताना फलादीनां विभागज्ञानन्दशाज्ञानेन विना दुर्ज्ञेयमिति दशानयनमवश्यं वक्तव्यम्॥यदाह सूर्य्यसूरिः॥यदपि सूचितमत्र समाफलन्तनुधनादिगतैः खचरैस्तु यत्॥दिनविभागमृते न हि गम्यते तदहमत्र दशानयनम्ब्रुवे ॥ १ ॥ यादवोपि ॥ विविधभावफलोत्थफलं खगो दिशति तद्वदनेहसि सा दशा ॥ इति तदानयनं नयसम्मतं परिव

दामि विदां सफलम्मुदे ॥ १ ॥ अथ दशानयनप्रकार उक्तो वर्षतन्त्रे ॥ स्पष्टान्सलग्नान्खचरान्विधाय राशीन्विनात्वल्पलवन्तु पूर्वम् निवेशतस्मादधिकाधिकांशं क्रमादयं स्यात्तु दशाक्रमोब्दे ॥ १ ॥ ऊनं विशोध्याधिकतः क्रमेणांशाद्यं विशुद्धांशकशेषकैक्यम् ॥ सर्वाधिकांशोन्मितमेव तस्मादनेन वर्षस्य मितिस्तु भाज्या ॥ २ ॥ शुद्धांशकांस्तान्गुणयेदनेन लब्दध्रुवांकेन भवेद्दशायाः ॥ मानं दिनाद्यं खलु तद्ग्रहस्य फलान्यथासन्निगदेत्तु शास्त्रात् ॥ ३ ॥ अयमर्थः ॥ दशानयने सलग्नानां सर्वग्रहाणा राशीन्विहाय सर्वन्यूनांशो ग्रहः पूर्वं लेख्यः ॥ पुनस्तस्माद्यथायथा यस्ययस्यांशाधिक्यं तथा समग्रहः लग्ननिवेश्यः एवन्निवेशितास्सर्वे ग्रहा हीनांशसंज्ञकास्स्युः ॥ वर्षे अयं दशाक्रमः स्यात् ॥ पुनरूनं हीनमंशाद्यं ग्रहमधिकांशाद्ग्रहाद्विशोध्य क्रमेण किंचिदधिकांशं तदग्रिमाद्विशोध्यम् एवं सर्वे ग्रहाः शोध्याः ॥ शेषांशानां नाम पात्यांशाश्शुद्धांशाश्च पुनः पात्यांशानां योगः कर्तव्यः ॥ स योगः हीनांशसाम्याभावे सर्वग्रहमध्ये योधिकांशस्तत्तुल्यमेव स्यादिति व्याप्तिः॥ ननु हीनांशसाम्येपि तदूद्ध्वोर्द्धतः पात्या इत्यनेनानीतपात्यांशयुतिः सर्वाधिकांशस्तत्तुल्या भवत्येवेति स्यादेतत् यदि साम्यांशाः परखगस्य पात्यांशशून्यत्वं पात्यांशाभावे दशाद्यभावोपि स्यात् ॥ नचेष्टापत्तिर्दशाभावे तु भावमुन्थावर्षेशादिफलस्योच्छेदापत्तेः॥किंच कृशांशसाम्ये समांशापरखगस्य दशाभावो यदिप्राचीनानामाचार्याणामनुमतः स्यात्तर्हि एकराशिगानामेकोंशं हरति बलीति जातकोक्तिवद्बलिन एकस्यैव दशा स्यादित्युक्तं स्यात् ॥ अंशाद्यस्यसमत्वे दशा च वीर्याधिकस्य पूर्वा स्यादितिवक्ष्यमाणहिल्लाजवचने निर्बलस्यानंतरं दशेत्याशयोवगम्यते ॥ अन्यथा समांशापरखगस्य दशाभावेन तत्क्रमाकांक्षाभावात्तन्निर्णायकं हिल्लाजतेजःसिंहादिवाक्यं बलिनः पूर्वा दशाः इत्यादिकमुन्मत्तप्रलपितमिव स्यात् ॥ अपि च लग्नग्रहाणामष्टानामप्यंशसाम्ये सप्तानांपात्यांशशून्यत्वादेकस्यैव समग्रवर्षदशा स्यात्॥नत्वेकस्यैव दशाफलं शुभमशुभं वा समग्रवर्षे भवतीति बालोपि प्रतिपद्यते॥नचांतरदशाविदशाफलभेद इति वाच्यम् ॥ पात्यांशाभावेन तद्दशायामन्तर्दशादेरपि गगनकुसुमायमानत्वात् ॥ अत एव श्रीमन्नीलकण्ठदैवज्ञैः ऊनं विशोध्याऽधिकत इत्युक्तम् ॥ नतूर्ध्वस्थग्रहशोधनमधस्स्थितग्रहे उक्तम् ॥ अत्र ऊनांशग्रहे तस्मादधिकांशेभ्यः शोधिते सति ग्रहाणां दशादीनां तुल्यत्वेपि नकापि क्षतिः ॥ तस्माद्धीनांशसाम्यभावे पात्यांशयोगस्सर्वाधिकांशमितो भवति ॥ वर्षतंत्रवाक्ये अव्ययानामनेकार्थत्वादेवशब्दो वाशब्दवाची ज्ञेयः ॥ हीनांशसाम्यं कदाचिद्भवत्यतः श्रीमन्नीलकण्ठदैवज्ञैः पात्यांशयोगस्सर्वाधिकांशान्मितो भवतीत्युक्तः ॥ अन्यथा

पात्यांशयोगमनुक्त्वैव लाघवात्सर्वाधिकांशैर्भाज्या इत्यभिदध्युरित्यलमतिप्रसङ्गेन ॥ पुनः पात्यांशयोगेन सर्वाणि नववर्षस्य मितिः सौरी ३६०

| बु. | ल. | सू. | शु. | बृ. | मं. | श. | चं. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| २ | ८ | ९ | १६ | १९ | १९ | २१ | २८ | हीनांशाः |
| १८ | ५३ | ४४ | २६ | २३ | ५७ | ५७ | १६ | |
| ३४ | २ | ५९ | २६ | ३२ | ८ | ३ | ३१ | |
| २ | ६ | ० | ६ | २ | ० | १ | ६ | पात्यांशाः |
| १८ | ३४ | ५१ | ४१ | ५७ | ३३ | ५९ | ११ | |
| ३४ | २८ | ५० | २७ | ६ | ३६ | ५५ | २८ | |
| २९ | ८३ | ९ | ८५ | ३३ | ७ | २५ | ० | दशामानांदि नादिकम् । |
| २२ | ४४ | १९ | ४२ | ४६ | ६ | २६ | ३१ | |
| ६ | २८ | ३४ | १७ | ५३ | ४४ | ४६ | २२ | |

सौरसावना वा ३६५ । १५ । ३१ । ३० । सवर्णिताद्राज्याद्यल्लब्धन्दिनाद्यं स तस्मिन्वर्षे ध्रुवांकः स्यात् ॥ अनेन ध्रुवांकेन ग्रहाणाम्पात्यांशा गोमूत्रिकासंज्ञेन गुणनप्रकारविशेषेण गुणिताः षष्ठ्योपर्युपरि लब्धेन युक्तास्सन्तो ग्रहाणां सलग्नेशानां दिनघटीपलरूपाणि दशामानानि स्युः ॥ अत्रोदाहरणम् ॥ तत्राब्दप्रवेशे स्वल्पांशो बुधोस्तीति स प्रथमतो विलेख्यस्ततः किञ्चिदधिकांशं लग्नं ततस्सूर्योधिकांशः एवं सर्वे स्थाप्याः ॥ ततः ऊनांशो बुधः ० । २ । १८ । ३४ अधिकांशः लग्नमिदं ८ ।५३ । २ विशोध्य शेषं० । ६ । ।३४।२८ लग्नस्याधः स्थाप्यम् ॥ एवं सर्वेषां पात्यांशा जाताः ॥ एषां पात्यांशानां योगः २८।१६।३१ हीनांशसाम्यभावात्सर्वाधिकांशश्चंद्रांशादिना २८ । १६ । ३१ तुल्यो जातः ॥अनेन वारद्वयं षष्ट्या ६० सवर्णितेन १० । १७ । ९१ सौरीवर्षमिति ३६० वारद्वयं षष्ट्या ६० सवर्णिते जाता १२ । ९६००० भक्ताल्लब्धो दिनघटीपलात्मको ध्रुवकः १२ । ४३ । ५५ ॥ अनेन ग्रहाणां पात्यांशा गोमूत्रिकया संगुणिताः षष्ट्योपर्युपरिलब्धेन युता जातानि ग्रहाणां दिनादिदशामानानि ॥ अथ प्रकारांतरं जातकालंकारे ॥ पात्यांशनिघ्ना दशसौरवर्षाद्धृंशभक्तादथवा दशाहाः ॥ सौरवर्षमितिः ३६० बुधपात्यांश २ । ८ । ३४ गुणाः ८ । ३० । २४ सर्वाधिकांशैर्भक्ता २८ । १६ । ३ लब्धा दिनाद्या बुधदशा २९ । २२ । ६ पूर्वागतसमैव ॥ तत्र दशाप्रवेशज्ञानार्थं सौराणि दशादिनानि वर्षप्रवेशकालार्के राश्यादौ योज्यानि तत्समेऽर्के दशाप्रवेशाः स्युः ॥ उदाहरणम् ॥ वर्षारंभे सूर्यः ३ । ९ । ३६ । ५९ तस्मिन्कालेऽयं सूर्य्यैस्थितवस्तस्मिन्नेव काले पूर्वप्रकारेणानीतासु दशासु प्रथमतो बुधदशा सौर्य्यैव जाता दिनाद्या २९ । २२ । ६ पुन वर्षप्रवेशकालार्के ३ । ९ । ३६ । ५९ बुधदशाहाः २९ । २२ । ६ अंशादौयोजिताः ४ । ८ । ५८ । ५ जातोग्रिमदशाप्रवेशार्कः । एवमग्रेपि ॥ अथात्र वर्षफले संक्रांतिदिवसान् पञ्चाङ्गपत्रे दृष्ट्वा तत्तद्दशाप्रवेशमालक्ष्य फलानि वाच्यानि ॥ अत एव साम्प्रदायिकाः कस्मिन् काले दशाप्रवेशो जात इति संशये सौरसावनदिनादिवर्षमानेन दशाहाश्च समानयन्ति ॥ तत्र दशाप्रवेशकालज्ञानार्थं वर्षप्रवेशवारादौ प्रथमदशादिनानि

योज्यानि उपरि सप्ततष्टानि द्वितीयदशाप्रवेशे वारघटीदलात्मकः कालो भवति ॥ पुनर्द्वितीयदशाप्रवेशकाले द्वितीयदशादिनानि योज्यानि तृतीयदशा प्रवेशकालो भवति ॥ एवमग्रेपि उदाहरणम् ॥ श्रावणकृष्णनवम्या शुक्रवासरे सूर्योदयाद्गतघटीपलेषु ५ । ३६ वर्षप्रवेशः ॥ अस्मिन्वर्षप्रवेश काले प्रथमं बुधदशा जाता सौरसावनदिनात्मिका २९ । ४७ । ५० पुनर्वर्षप्रवेशवारादौ ६ । ५ । ३६ बुधदशाहाः २९ । ४७ । ५० योजिताः ३५ । ५३ । २६ वारस्थाने सप्ततष्टे शेषं शनिवारो जातः ॥ वर्षप्रवेशादेकोनत्रिंशद्दिनान्तरं शनिवारे सूर्योदयाद्गतघटीपलेषु ५३ । २६ द्वितीयदशाप्रवेशो लग्नस्य जातः ॥ पुनरस्मिन् काले ० । ५३ । २६ लग्नदशाहा योजिताः ॥ पूर्ववत्तृतीयदशाप्रवेशे वाराद्यः कालो भवति ॥ एवं सर्वत्र ॥ वामनेन तु मुन्थाफलज्ञानार्थं लग्नवन्मुन्थादशापि कर्तव्येत्युक्तम् ॥ सर्वग्रहाणां मुन्थाया भुक्तांशान् स्वाँश्च पीडयेदिति ॥ यत्रयत्र द्वयोर्बहूनां वा ग्रहाणामंशादिसाम्यन्तत्र दशाक्रमज्ञानमुक्तम् हिल्लाजेन ॥ अंशाद्यस्य समत्वे दशा च वीर्य्याधि कस्य पूर्वा स्यात् ॥ वीर्यस्यापि समत्वे स्पष्टाल्पगतेर्दशा पूर्वा ॥ १ ॥ वर्षतंत्रेपि ॥ शुद्धांशसाम्ये बलिनो दशाद्या बलस्य साम्ये ल्पगतेस्तु पूर्वा ॥ अत्र शुद्धांशानाम्पात्यांशानां साम्येऽधिकबलग्रहस्याद्यदशा नैतद्युक्तम् ॥ शुद्धांशसाम्ये यतो दशाक्रमज्ञानंहीनांशक्रमेणोक्तम् ॥ अत्र हीनांशसाम्याभावे पात्यांशसाम्याभावे पात्यांशसाम्यं भवति २ ॥ उदाहरणम् ३ ॥ तत्र हीनांशा ग्रहाः पात्यांशाश्च लिख्यन्ते ॥ अत्र सूर्य्य

| चं. | सू. | बु. | शु. | श. | |
|---|---|---|---|---|---|
| ३ | ७ | ११ | १५ | १९ | हीनांशाः |
| ५ | ८ | ११ | १४ | १७ | |
| ३ | ४ | ४ | ४ | ४ | पात्यांशाः |
| ५ | ३ | ३ | ३ | ३ | |

बुधशुक्राणाम्पात्यांशसाम्यं यद्यप्यागतम् तथापि बलविचारं विनैव हीनांशक्रमेण बुधशुक्रापेक्षया न्यूनबल स्यापि रवेः पूर्वदशा ततो बुधस्य ततः शुक्रस्य ततः शनेः ॥ एवं हिल्लाजवचनस्य स्ववचनस्यापि वैपर्य्यम्भवति ॥ तस्माच्छुद्धांशा राशिं विना शुद्धा यथावस्थिता येंशास्तेषां साम्ये इत्यर्थः ॥ शुद्धांशानाम्पात्यांशानां साम्ये इति व्या ख्यानं देवानाम्प्रियस्य सम्मतामिति अथ॥ गतिसाम्येपि दशाक्रमज्ञानं पद्धतिभूषणे ॥ गतिसमत्वे समवशात्प्रोक्ताद्यैरु दयक्रमादथ च तत्साम्ये तु पाठक्रमात् ॥ अयमर्थः ॥ गतिसाम्येपि सूर्य्यवशेन प्रथमोदितस्य पूर्वदशा तस्यापि साम्ये लग्नसूर्य्यचंद्रभौमेत्या दिपाठक्रमाद्दशा स्यात् ॥ अथ लग्नग्रहयोरंशसाम्ये पूर्वानीतलग्नबलग्रहबलयोर्मध्ये यस्याधिक्यं तस्याद्या दशा बलसाम्ये लग्नस्य गत्यभावाल्लग्नेशग्रहयो र्मध्ये यस्याऽल्पगतिस्तस्याद्या दशा ॥ उक्तञ्च ताजिकसारे ॥ वीर्ये समाने तनुखेटयोश्चेत्स्यातान्तदा लग्नपखेटयोश्च ॥ यस्याऽल्पभुक्तिः

खलु पूर्वकोसौ ज्ञेयो ग्रहज्ञैरिह पाकमार्गे इति ॥ गतेरति साम्ये उक्तवल्लग्नेशग्रहयोर्मध्ये पूर्वोदितस्याद्या दशा उदयसाम्येपि कथितपाठक्रमेण दशाक्रमो ज्ञेय इति ॥ अथमासप्रवेशे दशानयनमुक्तं मुक्तावल्याम् ॥ पात्यांशयोगेन भजेद्गतैष्यमासांतरं स्याद्गुणकोथ तेन ॥ पात्यांशकास्संगुणिता दशाः स्युरुक्तक्रमान्मासफले दशानाम् ॥ हीनांशकानुक्रमतो यथा स्थलवैक्यहृन्मासमिते यदाप्तम् ॥ पृथक्पृथक् तद्गुणिताश्च तेंशा दिनानि वा मासफले दशानामिति ॥ समरसिंहेन सर्वग्रहाणां भोग्यांशेभ्यो दशानयनमुक्तम् ॥ सर्वग्रहा भुक्तांशा नव संस्थाप्य भोग्यभागेभ्यः ॥ जातांकभुक्तवर्षे यल्लब्धं तेन संगुणयेत् ॥ प्रत्येकं भुक्तांशा यो यस्यास्तिराशिसंख्यांकः ॥ तस्यास्ति तत्प्रमाणादिवसा घटयः पलानि स्युः ॥ व्याख्या ॥ सर्वग्रहाणां सलग्नानां भुक्तांशान् कर्मभूमौ संस्थाप्य अंशास्त्रिंशन्मध्ये शोधिताः संतो भोग्यांशास्स्युस्तेभ्यः पूर्वोक्तप्रकारेण यो जातांकस्तेन वर्षपरिमाणं भाज्यम् ॥ अयमर्थः ॥ पूर्वं ग्रहभागा हीनांशक्रमेण स्थापिताः ॥ इदानीन्ते भागास्त्रिंशन्मध्ये शोधितास्संतो भोग्यभागा वैपरीत्येन हीनांशा जातास्ते पुनर्वैपरीत्यक्रमेण पात्यांशाः कर्तव्यास्तेषां योगेन वर्षम्भजेत् ॥ यल्लब्धन्तेन यस्य यस्य योयो राशिसंख्यांकोंशसंघसंख्याकोस्ति तत्तद्ग्रहांशस्वरूपाःप्रत्येकभुक्तांशा इदानीम्पात्यांशकवशेन स्थापितास्तान् गुणयेत् गुणनेकृतेसति तत्तत्प्रमाणास्तत्तद्ग्रहांशवशतो दशादिवसाद्याः स्युः ॥ उदाहरणम् ॥ तत्र हीनांशाद्या ग्रहाः अत्रैव चक्रन्यासः एषां भोग्यांशानां त्रिंशन्मध्ये शोधने पात्यांशास्स्युः पात्यांशाना योगः २७ अनेन वर्षसंख्या सौरी ३६० भक्ता लब्धो दिनादिध्रुवकः १३।२० अनेन ग्रहाणां पात्यांशा गुणिता जाताः सौरदशादिवसाः॥ अयं दशाक्रमः समरसिंहेनाप्रचुरद(शा)वस्थोभिहितः॥ अत्र केचित्सर्वग्रहभुक्तांशकराशिनालोक्य यो भवेदल्प इत्येवं समरसिंहवाक्ये राशिशब्दस्य संघवाचित्वे वक्तव्ये सर्वग्रहभुक्तांशसंघं ह्यवलोक्य यो भवेदल्प इत्येवं समरसिंहो ब्रूयात्तन्नोत्क्रमतो राशिपदोपादानसामर्थ्याद्राश्यादिग्रहाणां सलग्नानां दशा प्रागुक्तविधिना विधेयेत्याहुः॥ कथं मेषादिषु राशिषु प्रथमतोल्पराशिगो ग्रहो लेख्यः ततस्तदधिको ग्रहो लेख्यः एवमुत्तरमाकराशिस्थाः सलग्नास्सर्वे ग्रहा लेख्यास्ततः पूर्वपूर्वग्रहो राश्यादिरग्रिमाग्रिमग्रहाच्छोध्यः एवमग्रेपि शोध्यः तेषां राश्यादियोगस्यांशान्विधाय तैर्वर्षमानं भाज्यं यल्लब्धं स दिनादिध्रुवकः स्यात्तेन सलग्नग्रहाणां कृतांशानामंशादिगुणनीयं यद्भवति सा दिनादिका दशा स्यात्॥ उदाहरणम् ॥ पात्यराशिग्रहाणां योगो राश्यादिः १०।०।०।० अनेनांशीकृतेन ३०० सौरवर्षमिति ३६० भक्ता लब्धं दिनादि ध्रुवकः १।१२। अनेन शोधिता ग्रहा अंशी-

कृता गुणिता जाताः सर्वेषांदशादिवसाः॥यादवेन तु राश्यादिग्रहाणान्दशाप्रकारान्तरेणोक्ता लग्नादिरिःफान्तगतग्रहेषु योल्पो भपूर्वो द्विखगस्स

| चं. | ल. | सू. | बु. | शु. | बृ. | श. | मं. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ४ | ६ | ८ | १० | हीनराशयः |
| १५ | २५ | १० | २ | १० | ८ | १५ | ० | |
| १४ | ४० | २५ | ४८ | ३० | २५ | ५० | ० | |
| १० | ५० | ४० | २० | ३० | ४५ | ५५ | ० | |
| १ | १ | ० | ० | ० | १ | २ | १ | पात्यराशयः |
| १५ | १० | १४ | २२ | १५ | २९ | १७ | ४ | |
| १४ | २६ | ४४ | २२ | ४२ | ५५ | २५ | ९ | |
| १० | ४० | ५० | ४० | १० | १५ | १० | ५ | |
| ४५ | ४८ | १७ | २६ | १८ | ५८ | ५२ | ४० | दशादि नाडि ३६० |
| १० | ३२ | ४१ | ५१ | ५० | ५४ | ५४ | ५८ | |
| ० | ० | ४६ | १२ | ३६ | १८ | १२ | ४४ | |

चादौ ॥स्थाप्योधिको स्यादधिकस्ततोग्रे चैवंक्रमाल्लग्नमुखा न्विलिख्य॥लग्नं चाग्रखगात्त्यजेत्तदनु तच्छेयो विलग्नादधः स्थाप्यस्तद्विहगन्तदग्रखगतःशेषस्तुपूर्वादधः॥एवं सर्वखगा न्विशोध्य च ततः संस्थापयेत्पूर्ववल्लग्नात्सर्वखगाधिकं तु विवरं सर्वाधिकाधो लिखेत् ॥ शुद्धांशयोगेन भजेच्च वर्ष लब्धेन लग्नादिखगाधरस्थात्॥शुद्धांशकात्संगुणयेद्दशास्या त्पृथक्पृथग्व्योमसदा दिनाद्याः ॥ द्वौ वा त्रयश्चेत्समराशि खेटास्तदल्पभागः प्रथमो निधेयः॥ समानभागोल्पफलैस्तु

| ल. | सू. | बु. | शु. | बृ. | श. | मं. | चं. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| २ | ३ | ४ | ४ | ६ | ८ | १० | १ | लग्नादित्य पर्यन्तगाः |
| २५ | १० | २ | १८ | ८ | २५ | ० | १५ | |
| ४० | २५ | ४८ | ३० | २५ | ५० | ० | १४ | |
| ५० | ४० | २० | ३० | ४५ | ५५ | ० | १० | |
| ० | ० | ० | १ | २ | २ | १ | १३ | योगाः |
| १५ | २७ | १५ | १९ | १७ | २४ | २४ | २४ | |
| ० | ७ | ३२ | ५५ | २५ | ३४ | ५३ | २३ | |
| ० | ३० | १० | १५ | १० | ४५ | ५० | २५ | |
| १३ | १९ | १२ | ५४ | ६८ | ७२ | ४८ | ७५ | योगादशादि नाडि ३६० |
| १२ | ५० | ५८ | २६ | ५५ | २२ | ५२ | २५ | |
| १० | ५० | ४४ | २७ | १८ | ९ | १५ | ४९ | |

लिप्ता तुल्येऽल्पवेगस्तु गतौ समायात्॥पूर्वोदितो योथ विलग्नखेटौ समौ तदा लग्नदशैव पूर्वा इति॥उदाहरणम्॥तत्र लग्नादिक्रमेण सर्वेग्रहाः शोधितग्रहाश्च लिख्यंते अत्र सर्वखगाधिकं विवरं राश्यादि २।२४।३९।५५सर्वभावप्रांते वर्तमानस्य चंद्रस्याधस्ताल्लिखितम्॥अथैषां शुद्धानां योगो राश्यादि १३ । १४।२३ । २५ । एषामंशाः ४० । ४ । २३ । २५ सौरवर्षमानं ३६० भक्तं लब्धोदिनादिध्रुवकः ० । ५३ ।४०।५०। अनेन ग्रहाणामन्तरराश्यादीनि गुणितानि जाता दशाहास्सौराः अत्रान्तर्दशाप्रकार उक्तस्तत्रैव ॥ शुद्धांशयोगेन भवेत्स्वकीयं दशादिनाद्यञ्च वलेन हन्यात् ॥ शुद्धांशकांस्तान्निजतः क्रमेण चान्तर्दशाथो विदशापि चैवम् ॥ १ ॥ राश्यादिग्रहशुद्धांशयोगेन अथ हीनांशक्रमदशादू षणमाह स एव ॥ पूर्वाल्पभुक्त्यंशकमागतोत्र दशाक्रमो यैः समवादि विप्रैः ॥ नवोधितैर्यावनसम्प्रदायो न चिंतिता चापि फलार्थ युक्तिः ॥ १ ॥ तथाहि योल्पांशखगोंत्यगोस्य पूर्वा दशा तत्फलदा कथं स्यात् ॥ अंत्या तथाग्रास्थितभूरिभागखेटस्य चित्रेयमतो

हि हेया ॥ २ ॥ अत्र लग्नस्यैव सर्वापेक्षया मुख्यत्वात्‌ तत्समीपवर्तिनो ग्रहस्याद्या दशा दूरवर्तिनः पश्चादिति सयुक्तिकविचाराभावाद्धी नांशमार्गदशावश्यं त्याज्येति यादवोक्तिः ॥ न तु यादवोक्तदशा सावने किंमूलम्पूर्वोक्तसमरसिंहवाक्ये राशिशब्दोपादानात्समरसिंहवाक्यमेव मूलमिति यतो राशिशब्दो मेषादिराशिवाचकः संघवाचकश्च द्वौ राशीपुंजमेषाद्यावित्यमरसिंहोक्तेरत्र राशिशब्दः संघवाची संपन्नः कश्चि अंशकशब्दस्त्रिंशद्भागवाचकोस्ति राशिशब्दस्य मेषादिवाचकत्वे सत्यपि अंशात्मकत्वात्तेषां राशीनां पृथगंशशब्दोपादानं व्यर्थं स्यात्‌ ॥ अत एव सर्वग्रहभुक्तांशानेवं संस्थाप्येति पद्यद्वयेन समरसिंहेन भोग्यभागेभ्य एव दशानयनं स्वीयमतांतरेणाभ्यधायि न भोग्यराशिभ्य इति ॥ अमुमेवाभिप्रायं मनस्यभिधाय समरसिंहाभिप्रायज्ञैस्तेजसिंसिंहवामनादिभिः साक्षाद्दशादिग्रहणमेवाकारि ॥ कैश्चिद्राशित्यागोपि ॥ तद्यथा तेज स्सिंहः ॥ स्पष्टांशादीन्सप्त खेटान्सलग्नान्कृत्वांशाद्यं भुक्तमादाय तेषाम्‌ ॥ योल्पांशः स्यात्तद्दशायास्तु पूर्वं स्थाप्यास्तस्माद् प्यधो योधिकांश इति ॥ वामनोपि ॥ भुक्तभागादिकाः खेटाः कर्तव्या लग्नसंयुता इति ॥ मुक्तावल्यामपि ॥ न्यूनांशस्य दशादिगा तदनु बह्वंशस्य चेति क्रमादिति ताजिकभूषणेपि ॥ आदौ हीनलवस्ततोधिकलवस्तस्मादनल्पांशक इति ताजिकसारे सांगेषु खेटेषु लवादिनाथो हीनस्तदेशान्‌ प्रथमं विलिख्येति ॥ ताजिकालंकारेपि ॥ आदावल्पलवस्ततोधिकलव इति ॥ ताजिकतिलकेपि ॥ स्पष्टीकृतांगयुतसप्तदिवौकसां यो भागादिनाल्पतरः किल तद्दशाद्यावीति ॥ ग्रहज्ञाभरणेपि ॥ सलग्नसप्तग्रहहीनभुक्तभागान्विलि ख्य प्रथमश्चेति ॥ ताजिकरत्नमालायामपि ॥ सलग्नसूर्यादिषु खेचरेषु योल्पांशकः स प्रथमं विधेय इति ॥ इत्यादिबहूनि वचांसि राशि राहित्यप्रतिपादकानि संति ॥ यादवेन तु किं मूलमंगीकृत्य राश्यादिग्रहदशानयनमभाणि तदभिप्रायं वयन्न जानीमः ॥ अथ च तथाहीत्यादिपद्येन त्वया युक्तिरुक्ता सा चिंत्या न हि वाचनिकेऽर्थे युक्तिः प्रभवेत्‌ ॥ पूर्वोक्तवाक्येषु स्वल्पांशग्रहक्रमेण दशानयनाभिधानात्‌ ॥ अथ च लग्नादिनो डुपानामधिकबलवतः स्याद्दशाद्याततोन्येति जातकपद्धतौ श्रीपत्युक्तेर्लग्नाद द्वादशस्थस्य सूर्यचंद्रमसोरन्यतरस्य बलिष्ठस्यादौ दशाफलदा भवेन्न वेति संदेहः कस्यापि मनसि न जागर्तितराम्‌ ॥ तद्वत्किंचिद्भावस्थो ग्रहोल्पांशः शुभमशुभंस्वफलं दातुं समर्थ एव ॥ ननु हीनांशादिग्रहाणामाद्या दशोक्ता ततोन्येषामिति तत्राल्पांशानां प्रथमतः फलदातृत्वमुच्यते ॥ आदौ संपूर्णफलदम्मध्ये मध्यफलप्रदम्‌ ॥ अन्ते तुच्छफलं लग्नं सर्वस्मिन्नेवमेव

हीति नारदकश्यपोक्तेः ॥ सर्वस्मिन् ग्रहे भावे च यथायथा राशिसमीपवर्त्यंशस्थितत्वम्भवति ॥ तथातथा महाफलदातृत्वमस्ति ॥ यथायथांशोपचय स्तथातथा तुच्छफलदातृत्वमस्ति॥प्राग्ग्रहापेक्षया किञ्चिन्न्यूनमितियुक्तिः ॥ एवंजीर्णताजिकशास्त्रमूलभूतं हीनांशक्रमेण दशानयनं श्रीमन्नीलकण्ठदैवज्ञै र्नवीनमतताजिककर्तृभिश्चोक्तम्॥एतत्स्पष्टं मुक्तावल्याम्॥राश्यादिहीनक्रमतो गृहादेः केचिद्वदन्त्याधुनिका दशाहान्॥ राशीनपास्येति पुरा तनोक्तीरमन्यमानास्तु दुराग्रहेण॥इत्यलमतिप्रसंगेन॥अन्येषामपि मतान्याहुरभियुक्तास्तु ज्योतिर्विदः॥विहीनराशिक्रमतो दशाहान्यथास्थि ताक्षैर्जगुरित्थमेके ॥ केचित्तु युक्तायनभागकेभ्यो राश्यादिकेभ्यस्त्वपरेंशकेभ्यः॥१॥यत्खत्तखुत्तवरखिन्धिकरोमकाद्याम्लेच्छास्तथा च कृतिनस्स्मरसिंहपूर्वाः ॥ राशीनपास्य जगुरल्पलवाद्दशाद्यं तद्वादिगस्य खचरस्य बलाधिकत्वादिति ॥ अथ ग्रहाणान्तासीरदशा मुक्तावल्याम् ॥ये वर्षमासदिनलग्ननिरीक्षकाः स्युस्ते तत्र तन्मितदशापतयो न चान्ये॥ आद्या दशाधिकदशाश्च ततस्तदूनस्येतिक्र मेण विदुषः प्रवदंति वर्षे॥पृथक्पृथग्दृष्टिकलादिकेन वर्षादिसंख्याद्युमुखान्निहन्यात्॥भजेद्दृगैक्येन च तन्मतेन लब्धं दशाहाद्युफलेनना ड्यः ॥ अत्र लग्ननिरीक्षकाग्रहा हीनांशक्रमेण दशाप्रदास्स्युरिति ताजिकसारोक्तिर्न युक्तिसहा यतस्तासीरदशा दृष्टिमूलभूता दृष्टिरहितस्याल्पांशखेटस्य सबलस्यापि दशाभावात् ॥ उदाहरणम् ॥ वर्षलग्ननिरीक्षकाः सूर्येन्दुबुधगुरुशनयः संति तेषां दृष्टिः कलादिका सू ५० चं ४० बु ३० गु २० श १० वर्षसंख्यासौरी ३६० स्वस्वदृष्ट्या गुणिता दृष्टचैक्येन भक्ताल्लब्धा दशाहाः सू १२० चं ९६ बुध ७२ गु ४८ श २४ अनेनैव क्रमेण सूर्यादीनां वर्षे दशाः स्युः॥ अथ मासलग्ननिरीक्षकाः सूर्यभौमशुक्रचंद्रास्तेषां दृष्टिः कलादिका सू ४ मं २५ शुक्र १५ चंद्र १० अत्र माससंख्या ३० अनेनैव क्रमेण स्वस्वदृष्ट्या गुणि तादृष्टचैकोन ९० भक्ताल्लब्धा मासदशाहाः सू १३ । २० मं ८ । २० शु ५ । १० चं ३ । २१ एवं दिनप्रवेशलग्ननिरीक्षकाश्चंद्रगुरुशुक्रशनिभौमास्तेषां दृष्टिकलादिकाः चं ४५ बृ ३० शु २० श १५ मं १० दिनप्रवेशयोरन्तरालघटिकाः ६० कल्पिताः स्वस्वदृष्ट्या गुणितादृष्टचैक्येन १२० भक्ताल्लब्धादशाघटिकाः चं २२। ३० बृ १५ शु १० श ७ मं ३० अथ भावतसीरदशा तत्रैव ॥ शोध्यलग्नादयो भावास्स्वीयस्वी

| बृ | श | मं | ल | बु | शु | चं | सू | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| ३ ० | ८ २० | ११ ३० | १५ ३० | १७ ५० | २२ ५० | २६ ५० | २९ ० | हीनांशाः |
| २७ ० | २१ ४० | १८ ३० | १४ ३० | १२ १० | ७ १० | ३ १० | १ ० | भोग्यांशाः |
| ५ २० | ३ १० | ४ १५ | २ २० | ५ ० | ४ ० | २ १० | १ ० | पात्यांशाः |
| ७१ ६ ४० | ४२ २४ २० | ५३ ३० ० | २० ५३ २० | ६८ ५३ २० | ५३ २० ० | ३८ ५३ ० | १३ २० ० | दशा दिनादि. |

या प्रभावतः ॥ पृथक् पृथक्च शेषांशास्ते कल्पादिवसाः क्रमात् ॥ १ ॥ लग्नादीनामथैतेषां सौरसावनतोक्तवत् ॥ अयं दशाक्रमो भावदशाक्रमणिकाभिधः ॥ १ ॥ अत्र प्रकारांतरंतत्रैवोक्तम् । एवं भावांतरांशास्ते पृथक् त्रि ३०० शताहताः ॥ स्वस्वोदयो हृताल ब्धं स्युस्तसौरदशाः क्रमात् ॥ १ ॥ दिनाद्या लग्नपूर्वाणां स्वस्वामिफलदायकाः ॥ सौरसावनतश्चासाम्प्रकर्तव्यानिरुक्तवत् ॥ ॥ २ ॥ अथ भावस्वामिनां बलेन शुभमशुभं वा दशाफलं भावदशादिषु वाच्यम् ॥ एवं सौरसावनार्थमनुपातः । यदि माससौरदिनै ३० मांससौ रसावनादिना ३० । २६ । १० । ३७ । १० नि लभ्यंते तदा तत्तद्भावसौरदिवसैः कानीति ॥ एवं माससौरसावनदिनानि ॥ भावसौराहर्गु ण्यानि त्रिंशता भाज्यानि लब्धादशायास्सौरसावनास्स्युरिति ॥ अथ भावतसौरदशायाम्प्रकारान्तरेणैव विशेषस्तत्रैवोक्तः ॥ व्ययसंध्यूनलग्नां शास्ते स्युर्भुक्तांशकास्तनोः ॥ लग्नोनलग्नशोध्यांशास्ते तु भोग्याह्वयास्स्मृताः ॥ १ ॥ लग्नसंधिविहीनार्थसंध्यंशास्तेर्थभावजाः ॥ परत्राप्येवमेवांशास्साध्याःसफलभावजाः ॥ २ ॥ सौरसावनतो वैषां विधायोक्तविधानतः ॥ अयं दशाक्रमो यद्वा भवेद्भावक्र माभिधः ॥ ३ ॥ तत्र लग्नैष्यभागोत्थदशाद्या कीर्तिता तनोः ॥ तदुक्तभावदिनजा रिःफान्ते स्यात्पुनस्तनौ ॥ ४ ॥ अत्रोदाह रणम् ॥ लग्नभावः ३ । ४ । ३ । ८ धनभावः । ४ । १ । १९ । ४ सहजभावाच्छोधितो ४ । ७ । १५ । ५६ जाता सौरदिनात्मिका लग्नद शा ॥ अथ धनभावः दशा दिनाद्या॥एवं सर्वत्र अथ भावांतरांशाः २७।१५।५६त्रिंशत्या३००गुणिताः षष्ट्योपर्युपरिलब्धेन युताः८१।७९।४० कर्कोदयेन ३४३ भक्तालब्धानि २३ । २३ । ५० । ५० लग्नतसौरदशादिनानि ॥ एवं सर्वत्र वर्षप्रवेशकालादिषु दिवसेषु लग्नेशस्य चंद्रस्य फलं शुभमशुभं वा ज्ञेयम् ॥ एवमन्यत्रापि ॥ अथ व्ययभावसंधिः॥ ३ । १७ । ४ । ३६ लग्नभावेहीना ३ । ४ । ३ । ८ जाता १६ । २२।२ लग्नभुक्तांशाः॥ अथ लग्नभावो ३ । ४ । ३ । ८ लग्नसंधौ ३ । १७ । ४१ । ६ ऊनः १३ । १७ । ५८ जाता लग्नभोग्यांशाः॥अथलग्नसन्धिः ३ । १७ । ४१ । ६ धनसंधौ ४ । १४।१७। २ ऊनः २७ । १५ । ५६ जाता धनभावदशा सौरिदिनाद्या पूर्वागतसमैव ॥ अत्र प्रथमवर्षप्र वेशकाले लग्नभोग्यांशदिनतुल्यलग्नदशा पुनर्द्धनादीनां ज्ञेया ॥ व्ययभावदशाप्रांते लग्नभुक्तांशदिवससमा लग्नदशा ज्ञातव्येति ॥ अथैते दशादिवसाः

२७ । १५ । ५६ । माससौरसावनदिवसैः २० । २६ । १७ । ३७ गोमूत्रिकया गुणिताः ८ । ३० । ३४ । ५४ । ३५ त्रिंशता भक्ताः २७ । ४१ । ९ । ५९ जातानि सौरसावनदिनात्मकानि दशादिनानि एवं सर्वत्र ॥ अथ मासप्रवेशे भावान्तरांशाद्द्वादशभक्ता मासप्रवेशे ग्रहाणां भावत्सीरदशादिनानि स्युः ॥ दिनप्रवेशेपि भावांतरांशाः षड्भक्ता दिनप्रवेशे ग्रहाणां भावत्सीरदशाघटयः स्युरिति विशेषः ॥ अथ स्थूलभावत्सीरदशा ताजिकसारे ॥ भावस्य चोर्ध्वांकमितिः शरघ्नी हीना स्वरामेंदुलवैर्दिनाद्यः ॥ स्पष्टा दशा लग्नमुखादिकानां ज्ञेयाः फलान्यत्र बुधैस्स्वभावात् ॥ उदाहरणम् ॥ लग्नं ३ । ४ । ३ । ८ अत्रोर्ध्वांकमितिः ३ शरघ्नी १५ स्वत्रयोदशांशेन दिनादिना १ । १ १४ । हीना १३ । ५० । ४६ । जाता लग्नदशा दिनादिका ॥ एवं समस्तभावानान्दशा ज्ञेया ॥ एते दशाहा अंशादित्यागात्स्थूलाः अत्र शून्यमिते भावोर्ध्वांके द्वादशराशयः पञ्चगुणाः कर्तव्या इति शेषः ॥ अत्र सर्वत्र भावानान्दशादियोगः षष्ट्यधिकं शतत्रय भवति ॥ अत्र वर्षे भावदशा त्रैलोक्यप्रकाशे उक्ता ॥ तन्वादि भांकगुणितांघ्रि ४ दिनाद्रिरामनाड्यो ४ । ३७ दशास्तनुमुखेंशवशाद्भवन्ति ॥ तासां व्ययारिमृतिगस्य न शोभना स्याद्रूपैं दशाश्च सरलान्धिषणे जगादेति ॥ १ ॥ अथ वर्षे कालहोरादशा ॥ उक्तं च मुक्तावल्याम् ॥ वर्षे स्वरांशप्रमितानि केचित्प्रोचुर्दिनानि द्युसदां दशानाम् ॥ कालाख्यहोराधिपतिक्रमेण तत्साधनोपायमथ प्रवच्मि ॥ १ ॥ वारप्रवृत्तेर्गतनाडिकास्तु द्विघ्नाशरा ५ आगतकालहोरा ॥ दिनेश्वरात्षष्ठकषष्ठकानुक्रमेण यः स्यादथ वर्तमानः ॥ २ ॥ आद्या दशा तस्य परा परेषान्तत्षष्ठषष्ठक्रमतोखिलानाम् ॥ शराप्ततष्टन्तु गताभिधानमेष्यन्तु तद्बाणविशुद्धशेषम् ॥ ३ ॥ उभे तु वर्षाद्रि ७ बलेन निघ्ने शरोद्धृतेस्तंगतगम्यमाने ॥ दिनादिके आदिदशाधिपस्य गम्योन्मितादौ तु दशा हि तस्य ॥ ४ ॥ परा परेषान्तु यथास्थितास्स्युर्गतोन्मिता चेति दशा हि तस्य ॥ गतैष्यमासान्तरतस्तु मासे यातैष्यघस्रान्तरतो दिनेपि ॥ ५ ॥ अत्रोदाहरणम् ॥

तत्र श्रावणवदि नवम्यां शुक्रवासरे उदयाद्गतघटीपलेषु ५ । ३६ वर्षप्रवेशः । तत्र रविः ३ । ९ । ३६ दिनमानम् ३३ । ३० अत्र कालहोरेशानयनार्थं वारप्रवृत्तिनयनार्थं सुगमोपायो मिश्रकृतः ॥ रेखास्वदेशांतरयोजनैः पलैर्निजांघ्रि ४ हीनैः शरवेदघट्यः ४५ ॥ युतोनिताः प्राक्

परतो दिनार्द्धयुक्ताः स्फुटस्तैर्दिवसप्रवेशः ॥ तत्र मध्यरेखानगराद्गर्गराटाभिधात्पूर्वदिशि काशी चतुःषष्टियोजनानि ६४ ॥ एतानि निजचतुर्थांश १६ हीनानि ४८ जातानि काश्यां देशांतरपलानि ॥ एभिः पलैः शरवेदघट्यः ४५ पूर्वदेशत्वाद्युक्ता जाताः ॥ काश्यांध्रुवांकः ४५ । ४८ अयं स्वदिनार्द्धेन १६ । ४५ युतो ६२ । ३३ अहोरात्रघटिका ६० हीनो जातः सूर्योदयाद्गतघटी २ पलेषु ३३ वारप्रवृत्तिकालः ॥ अथ वारप्रवृत्तिघटिकाः २२३ इष्टघटिकासु ५ । ३६ हीनाः ३। ३ जाता वारप्रवृत्तेर्घटिकाः ३ । ३ द्विगुणिताः ६। ६ पञ्चभक्ताः लब्धागतकालहोराः १ दिनाधिपाच्छुक्रात्पृथक्पृथग्गणनया द्वितीयस्य कालहोरावर्षे अस्यच आद्या दशा ततः षष्ठषष्ठानुक्रमेण चंद्रशनिगुरुभौमरविशुक्राणां सौरवर्षे ३६० सप्तमांशेन ५१ । २५ । ४२ । ४१ । २५ दिनादिना सौरसावनवर्षे ३६५ । १५ । ३१ । ३१ । २४ सप्तमांशेन दिनादिना ५२ । १० । ४७ । २१ । २५ वा मिताक्रमेणैकैकदशा वर्षे स्यात् ॥ अथादिमदशाधीशस्य दशागतगम्यकालानयनम् ॥ तत्र पंचभक्तशेषं १ । ६ गतसंज्ञं पञ्चसु हीनं ३ । ५४ जातङ्गम्यसंज्ञं अथ गतं १ । ६ वर्षाद्रि ७ लवेन ५१ । २५ । ४२ । ५१ । २५ गोमूत्रिकया गुणितं षष्ठोपर्युपरियुतं ५६ । ३४ । १७ । ५ । ३३ । ३० पञ्चभक्तं लब्धं आद्यदशापतेर्दिनाद्यं दशामानङ्गतसंज्ञं ११ । १८ । ५१ । २५ । ४२ । ४२ अथ गम्यं ३ । ५४ वर्षाद्रिलवगुणं षष्ठोपर्युपरियुतं २०० । ३४ । १७ । ८ । ३१ । ३० पञ्चभक्तं लब्धमाद्यदशापतेर्दिनादिदशामानं गम्याभिधं ५४० । ६ । ५१ । २५ । ४२ । १८ अत्र वर्तमानहोरास्वामिनो ग्रहस्यादौ दशा गम्यकालमिता ज्ञेयेति तत्र कालहोरेशक्रमेण वर्षाद्रिलवमितान्येषान्दशा पुनस्सर्वेषां ग्रहाणां प्रान्ते वर्षसमाप्तौ वर्तमानकालहोरास्वामिन एव गतकालमिता दशा ज्ञेयेति॥एवं मासप्रवेशकालयोन्तरसप्तमांशमिता मासप्रवेशहोरेशादिदशा ज्ञेया ॥तथैव दिनप्रवेशे होरेशादितो दिनप्रवेशकालयोरन्तरसप्तमांशमिता घटिकादिदशा दिनप्रवेशे ज्ञेया ॥ अत्रापि वर्तमानहोरेशस्य गतगम्यम्पूर्ववत् साध्यमिति ॥ अथ देवकीर्तिमतेन वर्षप्रवेशादौहद्दादशाताजिकमुक्तावल्याम् ॥ हद्दांशारविसद्गुणास्तनुगताःश्रीदेवकीर्त्याश्रयाद्धद्दास्वामिदशादिनान्यथतनौ यो हद्दपस्तत्क्रमात् ॥ मासे हद्दलवादिनानि खलुमासर्क्षादिने तत्प्रवेशर्क्षाद्दिग्रलवैर्मिता खलु दशावद्ध्यो ग्रहाणां स्मृताः॥१॥लग्नेकग्रहहद्दांशभुक्तभोग्यांशसंगुणा ॥ तद्दशाखाग्नि ३० भिर्भ

| म | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| बृ ७२ | बु ७२ | शु ९६ | मं ८४ | बृ ७२ | बु ८४ | श ३२ | मं ८४ | बृ ११४ | बु ८४ | बु ८४ | शु ११४४ |
| शु ७२ | शु ७२ | [illegible] ४२ | शु ७२ | शु ६० | शु १२० | बु ९६ | शु ४८ | शु ६० | बृ ८४ | शु ७२ | बृ ४८ |
| बु ९६ | बृ ९६ | बृ ६० | बु ७१ | श ८४ | बृ ४८ | बृ ८४ | बु ९६ | बु ४८ | शु ९६ | बृ ८४ | बु ३६ |
| म ६० | श ६० | मं ८४ | बृ ८४ | बु ७२ | मं ८४ | शु ८४ | बृ ६० | मं ६० | श ४८ | मं ६० | मं १८ |
| श ६० | म ३६ | श ७२ | श ४८ | मं ७२ | श २४ | म २४ | श ७२ | श ४८ | मं ४८ | श ६० | श २४ |

क्ता द्विघाते गतगम्यके॥२॥गम्यातुल्य। तत्रदशाहद्देशस्यादिमा भवेत्॥ततः पराःपरेषास्युर्यथावत् पुस्तकास्थिताः ॥३॥ भुक्ततुल्या दिनप्रख्या वर्षान्तेन्याग्रहद्दजा॥लग्नहद्देशतो हद्दादशास्वाम्यंशकावधिः ॥४॥ यातैष्यमासांतरवासराद्यं हन्यात्स्वरामावाधेभोग्यभागैः॥ तनुस्वहद्दाधिपतिक्रमेण व्योमानलैः३० संविभजेद्दिनाद्यम् ॥५॥ फलं यदाप्तं द्युसदा दशानां मानं भवेन्मासफलेस्फुटं स्यात् ॥अत्रोदाहरणम् ॥तत्र वर्षप्रवेशे स्पष्टलग्नं

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| बृ ६ | शु ८ | बु ६ | मं ७ | बृ ५ | बु ७ | श ६ | मं ७ | बृ १२ | बु ७ | बु ७ | श [illegible] |
| शु ६ | बु ६ | शु ६ | शु ६ | शु ५ | शु १० | बु ८ | शु ४ | शु ५ | बृ ७ | शु ६ | बृ ४ |
| बु ८ | बृ ८ | बृ ५ | बु ६ | श ७ | बृ ४ | बृ ७ | बु ८ | बु ४ | शु ८ | बृ ७ | बु ३ |
| मं ५ | श ५ | मं ७ | बृ ७ | बु ६ | मं ७ | शु ७ | बृ ५ | मं ५ | श ४ | म ५ | मं [illegible] |
| श ५ | मं ३ | श ६ | श ४ | मं ६ | श २ | म २ | श ६ | श ४ | मं ४ | श ५ | श २ |

राश्यादि४।८।५३।१०॥अत्र संज्ञातंत्रोक्तम्॥ मेषेगतकाष्टशरेषु भागा इत्यादिना हद्दांशाद्द्वादशगुणा भौमादिपंचग्रहाणां वर्तमानहद्देश्वरमारभ्यशौरदशादिनानि वर्षे भवंति॥ अथात्र सिंहलग्ने षडंशमिता गुरुहद्दागतावर्तमानाशुक्रहद्दापंचांशावधिर्वर्त्तते॥तत्र वर्तमानहद्देश्वरदशागतगम्यज्ञानार्थं वर्तमानहद्देश्वरस्य पृष्ठसंस्थग्रहाणांहद्दांशाः॥ स्पष्टलग्नांशेषु८।५३।१०।हीनाः शेषं लग्नगतहद्दायामुक्तं२।५३।१० भुक्तं वर्तमानहद्देश्वरस्य हद्दांशेषु५हीनं जातं लग्नस्य हद्दाया भोग्यं २१६।५० भुक्तभोग्यं च द्वादशगुणषष्ट्योपर्युपरियुतं च जातानि भुक्तानि ३४।३८भोग्यानि१५।२२दशादिनानि ॥ तत्र भोग्यदशादिनानि वर्तमानहद्देश्वरस्यादौ ज्ञेयानि ततःक्रमेणान्येषाम् ॥ तद्यथा सिंहलग्ने वर्तमानहद्देश्वरस्य शुक्रस्य भोग्यदिनादिका दशा २५।२२ ततश्शनेर्दशादिनानि ८४ बुधस्य ७२ भौमस्य ७२ गुरोः ७२प्रांते भुक्तांशादानीता तद्दशा ३४ । ३८ । वर्तमानहद्दास्वामिन एव ज्ञेयाः ॥ एवं षष्ट्यधिकं शतत्रयं ३६० दशादिनानि भवन्ति॥अत्रमध्ये यदि राशिसमाप्तिस्तदा पुनः राशिप्रारंभहद्दास्वामिनो दशाहाःस्युः यथान्तभौमदशायां सिंहलग्नसमाप्तौराशिप्रारंभहद्दास्वामिनो गुरोर्दशापुनर्जीवेति ॥ अथ मासप्रवेशे राश्यादिलग्नं २।१५।१७ अत्रापिपूर्वं

अथादिनप्रवेशे लग्नहद्दायादिनदश
शायन्त्वालिका सोयाः।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| बृ १२ | शु १६ | बु १२ | मं १४ | बृ १२ | बु १४ | श १२ | मं १४ | बृ २४ | बु १४ | बु १४ | शु २४ |
| बु १२ | बु १२ | शु १२ | शु १२ | शु १० | शु २० | बु १६ | शु ८ | शु १० | बृ १४ | शु १२ | बृ ८ |
| बु १६ | बृ १६ | बृ १० | बु १२ | श १४ | बृ ८ | बृ १४ | बु १६ | बु ८ | शु १६ | बृ १४ | बु ६ |
| म १० | श १० | मं १४ | बृ १४ | बु १२ | मं १४ | शु १४ | बृ १० | मं १० | श ८ | मं १० | मं १८ |
| श १० | मं ६ | श १२ | श ८ | मं १२ | श ४ | मं ४ | श १२ | श १२ | मं ८ | श १० | श ४ |

वन्मिथुनलग्ने षडंशमिता बुधहद्दा षडंशमिता शुक्रहद्दा च गता वर्तमानहद्देश्वरो गुरुः पञ्चांशावधिर्वर्तते तस्य भुक्तं ३ । १७ भोग्यञ्च १ । ४३ मारो हद्दलवाद्दिनान्युक्तत्वाद्वर्त्तमानहद्दांशा एव हद्दास्वामिदशादिनानि तत्र भोग्यदिनानि १ । ४३ मिता दशा आदौ गुरोस्ततः पुस्तकलिखितक्रमेणान्येषां दशादिनानि मं ७ श ६ बु ६ शु ६ अंते भुक्तदिवसमिता ३ । १७ गुरोरेव दशा एवं सर्वत्र ॥ अथ दिनप्रवेशे लग्नराश्यादि १ । १२ । १७ अत्र वृषलग्ने अष्टांशमिता शुक्रहद्दा गता ॥ वर्तमानषडंशमिता बुधहद्दाभुक्तं ४ । १७ भोग्यं च १ । ४३ बुधवर्षदशाहै ७ । २ गुणितं त्रिंशद्भक्तं जातं बुधदशाभुक्तं घटिकात्मकं ८ । ३४ भोग्यञ्च ३ । २६ यद्दांशादिभुक्तं भोग्यञ्च द्विगुणं घटिकादिदशाभुक्तं भोग्यञ्च भवति ॥ अत्र भोग्यघटिकात्मिका आदौ वर्तमानहद्देश्वरस्य बुधस्य दशा ३ । २६ ततः पुस्तकलिखितक्रमेणान्येषां हद्देश्वराणां हद्दांशाद्द्विगुणा दशाघटिकाः स्युः ॥ गुरोः १६ शनेः १० भौमस्य ६ शुक्रस्य १६ प्रांते भुक्तं घटिकादिका ८ । ३४ बुधस्य दशा ॥ एवं सर्वत्र ॥ अथैषां सौराणां दशादिवसानां सौरसावनीकरणार्थं सुगमोपायस्तत्रैव ॥ द्विघ्नस्वशैलाविश्वांशाः १३७ युता एतेखिलास्स्मृताः ॥ पलेषु क्वाग्नि ३१ भागाढ्या जायंते सौरसावना इति ॥ उदाहरणम् ॥ शनिदशादिनानि सौराणि ८४ एषां शैलविश्वांशो दिनादिकः० ।३६। ४७ द्विघ्नः १ । १३ । ३४ दशादिवसेषु ८४ युतः ८५ । १३ । ३४ पलेषु ३४ दशादिनानां ८४ क्वग्निभागेन युतः ३६ जातानि शनिदशा दिनानि ८५ । ३३ । ३६ ॥ सौरसावनानि ॥ एवं सर्वेषु दशादिवसेषु सौरसावनता कर्तव्येति ॥ अथ मासदशासौरसावनीकरणेप्रकारांतरं तत्रैवो क्तम् ॥ वर्षा ३६५ कंभागेन ३० । २६ । २७ यदीनसादनादशाइमाः स्युर्घुसदां दिनादिकाः ॥ तदेष्टमासांतरवासरैः कियन्मिताः प्रसाध्या इति वात्र मासजाः ॥ अथ वर्षे ग्रहाणां निसर्गदशा तत्रैवोक्ता ॥ राशीश्वराद्रीन्दुबलेब्जभौमाविच्छुक्रजीवार्कपतङ्गजानाम् ॥ त्रिघ्नाः शशी ३ द्वौ ६ नवकं २७ नखानि ६० धृतिः ५४ कृतिः ६० पूर्णशरा १५० दिनानि ॥ षडंशतुल्यास्त्वेतासां नाडिका द्युफले दशाः ॥ भवेयुर्दिवसारंभवर्तमानभहद्दतः ॥ वर्षे चंद्रस्य सबलत्वे चंद्रराशीशक्रमतो निसर्गदश्वेश्वराः स्युः वर्षदशाया द्वादशांशेन मासदशा ज्ञेया ॥ वर्षदशा षडंशेन घटिकाद्या दिनदशा भवति ॥ नैसर्गिकदशा घस्रा विधुवीर्याच्च ये स्मृताः ॥ तदादिमदशा भुक्तभोग्यं चन्द्रर्क्षयाद्भवेत् ॥ १ ॥ चंद्रराशीशभुक्तैष्यभागैर्निघ्ना च तद्दशा ॥ खाग्नि भक्तागतैष्यन्तदंतादौ स्याद्दिनादिकम् ॥ २ ॥

चंद्रेश्वरस्य मध्ये तु तत्क्रमेणान्यखेटजाः ॥ अत्रोदाहरणम् ॥ वर्षप्रवेशे स्पष्टश्चंदः २८ । १६ । ३१ चंद्रराशीश्वरो भौमो राश्यादि ८ । ११ । ५७ । ८ अस्यैवाद्या दशादिनात्मिका ॥ ६ ॥ अथ भौमभुक्तांशैः ११ । ५७ । ८ दशा ६ गुणिता ११९ । ४२ । ४८ भोग्यांशैश्च १० । २ । ५२ गुणिता ६० । १७ । १२ त्रिंशद्भक्काजातङ्क्तम् ३ । ४ । ९ । २५ गम्यंच २ । ० । ३५ दशामानम् ॥ तत्रादौ भौमस्य गम्यादिना दिमितादशा २ । ०० । ३५ ततो बुधस्य दशादिनानि २७ शुक्रस्य ६० गुरोः ५४ रवेः ६० शनेः १५० अंते भौमस्यैव गतदिवसमिता ३ । ५९ । २५ एते स्थाप्याः एवं मासप्रवेशेपि दशा ज्ञेया ॥ अथ नैसर्गिकादिदशादिवसानां मासे दिने च स्पष्टीकरणमुक्तं तत्रैव ॥ नैसर्गिका ये दिवसा निरुक्ता गौरीमतान्मासफलार्थमत्र ॥ गतैष्यमासांतरसङ्गुणास्ते खाग्न्युद्धृतास्स्पष्टतरा भवेयुः ॥ १ ॥ निरुक्तवच्चाद्य दशा गतैष्यमाद्यं तयोःस्यादपि तत्र मासे ॥ बलभद्रमतोक्तानां गौरीवत्स्पष्टता मता ॥ प्राग्दशा भुक्तभोग्यन्तु कुर्याद्वर्षदशोक्तवत् ॥ १ ॥ नैसर्गिकदशाहानां तद्वदेव स्फुटीकृतः ॥ प्राग्दशैष्यगतत्वं तु मासे कुर्यान्निरुक्तवत् ॥ २ ॥ गतैष्यादिनविश्लेषनाडिकाद्यनुसारतः॥साध्या दिनफले प्रोक्ता कर्मणा घटिका दशा ॥ ३ ॥ दिनप्रवेशे दिनप्रवेशलग्नवर्तमानहद्देशस्यादौ निसर्गवशाद्दश। तत्क्रमेणान्येषान्दशादिनानि ज्ञेयानि ॥ अथ दशाफलविचारस्तत्र दशाफलविचारे विशेषफलमाह तेजास्सिंहः ॥ सम्यग्धियाब्दपदशाधिपयोश्च पूर्वं वाच्यम्फलं तमनु जन्मखगाऽनुसारात् ॥ वर्षोद्भवं जनिभवञ्च दशाविपाककालोत्थमत्र च बलत्रितयं विमृश्यन् ॥ सूतौ च वर्षसमये च दशाविपाककाले च यो बलयुतस्सकलापि तस्य ॥ श्रेष्ठादशांत्वपरदृष्टियुतस्वधातुस्थानादिभेदवशपाकफलेन्दुवीर्यात् ॥ यो जन्मनीह सबलो विबलोब्दकाले तत्कालमध्यम्बलश्च दशा तदीया । आद्ये स्मृता लघुफला विफला परार्द्धे ज्ञेया विपर्ययफला बलवैपरीत्ये ॥ वर्षे च जन्मनि बली विबलो विपाके पाके बली च विबलः प्रसवाब्दकाले ॥ कालत्रयेपि खलु मध्यबलास्त्रयोऽमी दातुं क्षमा बहुफलं न च योगजातम् ॥ यो वीर्यवान् जनुषि मध्यबलश्च वर्षे वीर्योपिताश्रितदशासमये दशायाः ॥ पूर्वे तु पूर्णफलदोल्पफलो परार्द्धे कार्यो विपर्ययविधिर्विपरीतवीर्ये ॥ वीर्योज्झितास्त्रिसमये बहुदुःखदायी यावद्बलं तु खचरस्य फलं तु तावत् ॥ यावन्त्यहान्यधिगतस्सदृशो बलीयांस्तावंति चैव सुफलस्तु स चाब्दवीर्यात् ॥ आधारमिन्दुजबलं निखिलग्रहाणामाहुर्बलस्य खलु

दैवविदः पुराणाः ॥ तस्माच्छुभाशुभशशाङ्कबलादिनोत्थं दद्युः फलं निजदशासु शुभाशुभञ्चेति ॥ अथ दशाफलविचारे विशेषमाह समरसिंहः ॥ वर्षपतिर्यो जातो वर्षदशायाञ्च स प्रभुः कथितः ॥ निजधात्वनुसारवशात्तस्यादेश्यं फलं विदुषः ॥ तेजःसिंहोपि ॥ वर्षेश्वरो निखिलवर्षदशेश्वरोत्र प्रोक्तो बलाबलवशेन शुभाशुभञ्च ॥ धत्ते स्वधातुजफलं प्रथमं ततोथ सम्यक्त्रिकालजनितं बलमस्य बोध्यम् ॥ अयमर्थः वर्षे वर्षेश्वरस्यैव दशाफलं ज्ञेयम् ॥ अन्येषां ग्रहाणान्निजदशामितदिनैर्वर्षेशदशायामंतर्दशाफलं ज्ञेयम् । एतत्स्पष्टमुक्तं तुकज्योतिर्विद्भिः ॥ वर्षस्वामिदशांतरे निजफलास्ताभ्योपि सूक्ष्मा दशा ॥ इत्यत्रापि येन ग्रहेण वर्षेश इत्थशालं करोति तस्यैव फलम्पूर्णं ज्ञेयम् ॥ अन्यस्य फलं किञ्चिन्यूनं ज्ञेयमिति समरसिंहः ॥ अथसूर्यादीनां ग्रहाणाञ्चतुर्विधदशाफलानि ताजिकसारे वामनोक्तानि क्रमेण लिख्यन्ते ॥ गजाश्वलाभम्बलकान्तिवृद्धिं करोति भूपत्वमथो सखित्वम् ॥ सुवर्णरत्नाम्बरभूमिलाभं दिवापतिः पूर्णबलो नराणाम् ॥ १ ॥ मनोदयं ग्रामपुरेषु देशे वाणिज्यतो वा बहुलार्थलाभम् ॥ दत्ते हि दारासुतमित्रभूपैः प्रीतिं नृणाम्मध्यबलो दिनेशः ॥ २ ॥ स्वबंधुमित्रस्वजनैर्विरोधं प्रमोदयं दीप्तिबलार्थनाशम् ॥ करोति नूनं स्वदशाप्रवेशे तापार्तिकृन्नष्टबलो दिनेशः ॥ ३ ॥ शत्रोर्भयं वा नृपतेर्भयञ्च जनोपघातं वधबंधनाद्यम् ॥ करोति रोगागमनञ्च शोकं बलक्षयं दग्धबलो दिनेशः ॥ ४ ॥ लग्नात्रिलाभारिनभस्थितोर्को निंद्योप्यसावर्धफलो दशायाम् ॥ याति त्वसौ मध्यबलश्शुभत्वं सम्पूर्णवीर्योतिशुभो निरुक्तः ॥ ५ ॥ वामनः ॥ नृपतित्वम्प्रधानत्वं तेजो हस्त्यश्ववाहनम् ॥ स्वदशायाम्फलं चैव दत्ते पूर्णबलो रविः ॥ १ ॥ व्यापारन्तु पुरग्रामाद्द्रव्यलाभसुखानि च ॥ स्वदशायाम्फलञ्चैवदत्ते मध्यबलो रविः ॥२॥ रोगं घातं भयं शोकं भृत्यबंधनविग्रहैः ॥ नानानर्थान्महाशोकन्दत्ते नष्टबलो रविः ॥ ३॥ तेजोभ्रंशन्तथा घातं नैःस्वं बंधुषु विग्रहम् ॥ स्वदशायां फलं चैव दत्ते निंद्यबलो रविः ॥ ४॥ इत्यर्कः ॥ नृपास्पदत्वन्नृपतेर्द्धनार्ति शत्रोर्विनाशं सुखमद्भुतञ्च ॥ स्त्रीरौप्यशुक्लांबरमौक्तिकार्ति करोति सम्पूर्णबलो मृगांकः ॥ १ ॥ वाणिज्यतोर्थागमनञ्च लोके भूपत्वमत्रं बरामित्रलाभम् ॥ दत्ते स्वगेहादतुलञ्च सौख्यं धर्मोदयं मध्यबलो मृगांकः ॥ २ ॥ वैरं स्वमित्रैर्निजबंधुदारैस्सौख्यार्थनाशं प्रकरोति शीघ्रम् ॥ श्लेष्मोदयं वातकफोदयञ्च कांतिक्षयन्नष्टबलो मृगांकः ॥ ३ ॥ भिक्षाटनं क्लेशविवादवैरं धनप्रणाशं प्रकरोति पुत्रैः ॥ वैरं

कफार्तिम्मनसि प्रमोहं रात्रीश्वरो दग्धबलो नराणाम् ॥ ४ ॥ लग्नात्रिवित्तायगतोपि चन्द्रो निंद्यो हि दत्तेर्धफलं दशायाम् ॥ याति त्वसौ मध्यबलश्शुभत्वं सम्पूर्णवीर्योतिशुभो निरुक्तः ॥ ५ ॥ वामनः ॥ पदप्राप्तिर्नृपाद्राज्यं स्त्रीलाभं सुखसंपदम् ॥ स्थानप्राप्तिर्मनस्सौख्यं दत्ते पूर्णबलश्शशी ॥ १ ॥ वाणिज्यं सफलं कुर्यात्स्वगेहेपि महासुखम् ॥ ज्ञातिप्राधान्यमैश्वर्यं दद्यान्मध्यबलश्शशी ॥२॥ देहे मांद्यं सुहृद्द्वेषं महाग्लानिं धनक्षयम् ॥ मित्रवैरम्मनस्तापं दत्तेऽधमबलश्शशी ॥ ३ ॥ तेजोहानिं महाक्लेशं शीतज्वरकरं परम् ॥ कुर्यान्नष्टबलश्चंद्रो दौस्थ्यं पापं समाचारन् ॥ ४ ॥ इति चंद्रः ॥ क्षितिसुतस्सबलः पृतनाधिपं तनुभृतां प्रकरोति रणे जयम् ॥ कनकताम्रधनानि ददात्यसौ विविधसौख्यपदन्नृपसङ्गमम् ॥ १ ॥ नृपजनैः कलहोवनिनंदने भवति मध्यबले सबलक्षयः ॥ परिकरोति तनौ रुधिरामयं रिपुभयं सुतदारभयन्नृणाम् ॥ २ ॥ विवादं खलैर्विग्रहं पुत्रदारैस्तथा वैरितो भीतिमुग्रान्नराणाम् ॥ करोत्येव भौमो विनष्टो विनष्टं फलं कृत्स्नकंचाल्पसौख्यन्नितांतम् ॥ ३ ॥ वित्तार्थनाशं स्वभृत्यैर्विरोधं महासंगरे मृत्युकष्टं स्वदेहे ॥ कुजे दग्धवीर्ये स्ववीर्यस्य नाशो भयं शत्रुतो रक्तपीडा नराणाम् ॥ ४ ॥ लग्नात्रिषष्ठायगतो महीजो निंद्योपि सोर्द्धः फलदो दशायाम् ॥ याति त्वसौ मध्यबलः शुभत्वं संपूर्णवीर्योतिशुभो निरुक्तः ॥ वामनः ॥ कुजः पूर्णबलो दद्यात्संग्रामे विजयश्रियम् ॥ दण्डनाथपदप्राप्तिः सेनानायक एव च ॥ मध्यवीर्यः कुजः कुर्यात्तेजस्वित्वं जयं रणे ॥ राज्यतंत्रस्थपत्यं च राज्यं वा लभ्यमेव च ॥ २ ॥ हीनवीर्यः कुजः कुर्याद्ङ्गक्लेशं महागदम् ॥ देहघातं तु वैकल्यं रक्तस्रावंमुखात्तथा ॥ ३ ॥ विवादं विग्रहं युद्धं मर्कटं च महाभयम् ॥ स्वदशायां फलं चैव दत्ते नष्टबलः कुजः ॥ ४ ॥ इति भौमः ॥ सद्बुद्धितीर्थागमनं च राज्यं सौख्यं स्वहस्तार्जितवित्तमुग्रम् ॥ सम्पूर्णवीर्यान्वितसोमसूनुर्दत्ते विलासं स्वजनैश्च भृत्यैः ॥ १ ॥ सद्बुद्धिवृद्धिं सुतावित्तलाभं विद्याविलासं स्वजनैश्च सौख्यम् ॥ सोमात्मजो मध्यबलो दशायान्दत्ते हि सौख्यं विविधैः प्रपंचैः ॥ २ ॥ कष्टोदयं सौख्यबलार्थनाशं कीर्तिक्षयं भीतिमथार्थमुग्रम् ॥ प्राप्नोति वैरं स्वजनैश्च भृत्यैर्निन्द्यो विपाके खलु चंद्रसूनुः ॥ ३ ॥ स्वजातिवैरं बहुदुःखमुग्रं कुर्याच्च लोकस्सह चाल्पसौख्यम् । विद्यार्थनाशं कुमतिं कृशत्वं दत्ते विशेषेण बुधो हि दग्धः ॥ ४॥ त्यक्त्वारिरंध्रान्त्यमतोन्यतो ज्ञो निन्द्योपि सोर्द्धम्फलदो दशायाम् ॥

याति त्वसौ मध्यबलश्शुभत्वं संपूर्णवीर्य्योतिशुभो निरुक्तः ॥ ५ ॥ वामनः ॥ सेवया सुखसंपत्तिर्धनलाभो महद्यशः ॥ स्वबुद्ध्या राज्यलाभञ्च कुर्य्यात्पूर्णबलो बुधः ॥ १ ॥ धर्मसिद्धिन्तु कर्मास्तिमतुलामुन्नतिन्तथा ॥ पठनाल्लेखनाद्द्रव्यन्दद्यान्मध्यबलो बुधः ॥ २ ॥ देशाद्देशांतरप्राप्तिं घातंबंधुकुलक्षयम् ॥ बंधनं बुद्धिदोषेण दद्यान्नष्टबलो बुधः ॥ ३ ॥ माननाशं महाकष्टं धनहानिम्महद्भयम् ॥ कलिं गेहे तथा कीर्तिन्दद्याद्धीनबलो बुधः ॥ ४ ॥ इति बुधः ॥ ऐश्वर्यलाभन्नृपतेश्च मानं कान्त्युद्गमं राज्यसमागमञ्च ॥ दत्ते नराणां सबलस्सुरेज्यो हेमाम्बराद्यं विविधं विलासम् ॥ १ ॥ व्यापारतोर्थागमनं गुरुत्वं भूपैस्सुहृत्त्वं सुतदारसौख्यम् ॥ प्राप्नोति मित्राम्बरधर्मलाभं वाचस्पतिर्मध्यबलः स्वपाके ॥ दारिद्र्यदुःखैः परिपीडिताङ्गं धर्मार्थनाशं रिपुजं भयञ्च ॥ स्त्रीपुत्रमित्रैः कलहं सुरेज्यो नष्टो विनष्टं प्रकरोति सर्वम् ॥ दुष्टाद्भयार्तिर्धनधर्मनाशं रिपोर्भयं वा नृपतेस्तथैव ॥ सुखक्षयम्मित्रसुतैर्विरोधं करोति दग्धस्सुरराजपूज्यः ॥ लग्नात्षडष्टांत्यमभिन्नसंस्थो निंद्यो गुरुश्चार्द्धफलो दशायाम् ॥ याति त्वसौ मध्यबलश्शुभत्वं संपूर्णवीर्योतिशुभो निरुक्तः ॥ वामनः ॥ मण्डलस्वामितां तेजो नरेंद्रत्वमथापि वा ॥ धनमैश्वर्यमारोग्यं दद्याज्जीवो बलाधिकः ॥ विज्ञानशास्त्राधिगममाचार्यत्वन्नृपात्सुखम् ॥ सौख्यराज्याधिकारञ्च दद्यान्मध्यबलो गुरुः ॥ देहे रोगं मनस्तापं दारिद्र्यं धर्मनाशनम् ॥ पराभवं रिपोर्भीतिं दद्यान्न्यूनबलो गुरुः ॥ धननाशं स्थाननाशमाधिव्याधिसमुद्भवम् ॥ दंतपीडां करोत्येव वर्षे नष्टबलो गुरुः ॥ इति गुरुः ॥ राज्यं कलत्रं च सुखं विलासं दत्ते धनं कांचनभूपमानम् ॥ शुक्रस्य संपूर्णबलस्य पाके पुत्रोदयम्मित्रसमागमञ्च ॥ स्त्रीपक्षतोर्थागमनं च सौख्यम्मिष्टान्नपानांबरसुंदरीश्च ॥ दैत्याधिपो मध्यबलो हि दत्ते गोवाजिचित्राम्बरवित्तलब्धिम् ॥ इतस्ततस्संभ्रमणं च पुंसां करोति विज्ञानयशोर्थनाशम् ॥ सहोत्थमित्रात्मजकामिनीभिः क्लेशं सितो नष्टबलोतिकष्टम् ॥ पुत्रक्षतिंरोगभयं च कष्टं सुखार्थनाशं स्वजनैर्विरोधम् ॥ प्राप्नोतिदग्धे भृगुजे नितांतं स्वमित्रदारादिभयं च पुंसाम् ॥ लग्नाद्व्ययाष्टारिगृहंविहाय दैत्याधिपश्शेषगृहेर्द्धदः स्यात ॥ निंद्योऽपि मध्यश्शुभकृन्निरुक्तस्संपूर्णवीर्योतिशुभप्रदस्स्यात् ॥ वामनः ॥ राजलक्ष्मीं कलत्रञ्च पुत्रमित्रस्वभोग्यताम् तद्दशायाम्फलञ्चैव दत्ते पूर्णबलो भृगुः ॥ १ ॥ दण्डेशस्सर्वशास्त्रज्ञस्स्वपक्षाच्च

महद्धनम्॥ स्वदशायां फलञ्चैव दद्यान्मध्यबलस्सितः ॥२॥ भ्रमणान्निष्फला सेवा स्त्रीपक्षादसुखं भवेत् ॥ स्वदशायाम्फलञ्चैव दद्या दल्पबलस्सितः ॥ ३ ॥ पुत्रशोकं गृहभ्रंशं पथि मृत्युन्धनक्षयम् ॥ स्वदशायाम्फलञ्चैव दत्ते नष्टबलो भृगुः ॥ ४ ॥ इति शुक्रः ॥ ददातिसंपूर्णबलोर्कपुत्रो नीचाधिपत्यङ्गजनेशमलब्धिम् ॥ दुर्गादिसत्स्थानमथो सुखानि वासांसि नव्यानि पराङ्गनाप्तिम् ॥ १ ॥ खरोष्ट्रकोशादिकदुर्गरक्षां शनैश्चरो मध्यबलो नितांतम् ॥ करोत्यनर्थागमनं खलत्वं सुखार्थनाशं स्वजनैर्विरोधम् ॥ २ ॥ धनक्षय श्चोरभयारिभीतिं करोति वैरं स्वजनैश्च मित्रैः ॥ पतङ्गजो नष्टबलो नराणां सुखन्न किञ्चित्स्वदशाप्रवेशे ॥ ३ ॥ वियोगदुःखैः परि ततदेहे मित्रार्थनाशं मरणं प्रकुर्यात् ॥ खरांशुजो दग्धबलो नितान्तं दुःखं स्वदारैस्स्वसुतैर्नितान्तम् ॥ ४ ॥ लग्नात्त्रिषष्ठायगतोर्क पुत्रो निंद्योपि सोप्यर्थफलो दशायाम्॥ याति त्वसौ मध्यबलश्शुभत्वं सम्पूर्णवीर्यांतिशुभो निरुक्तः ॥ १ ॥ वामनः ॥ अटनं देशभू पत्वं भिन्नदेशाधिनाथता ॥ ३ ॥ स्वदशायाम्फलञ्चैव दत्ते पूर्णबलश्शनिः ॥ १ ॥ कोशगुप्तिः खरोष्ट्राणां दुर्गमार्गादिरक्षणम् ॥ स्वद शायाम्फलञ्चैव दत्ते मध्यबलश्शनिः ॥ २ ॥ वियोगं विग्रहं व्याधिं स्त्रीकारान्मरुतोद्भूतिम् ॥ स्वदशायाम्फलञ्चैव दत्तेऽ धमबलश्शनिः ॥ ३ ॥ नीचसेवा गृहोद्वेगस्तथा चोराद्धनक्षयः ॥ स्वदशायाम्फलञ्चैव दत्ते नष्टबलः शनिः ॥ ४ ॥ इति शनिः ॥ अथ लग्नदशाफलमुक्तं वर्षतंत्रे ॥ दशा तनोस्स्वामिफलेन तुल्यं फलं ददातीत्यपरो विशेषः ॥ चरे फलामध्य शुभाधमा च द्विमूर्तिभे स्याद्विपरीतमूह्यम् ॥ अनिष्टमिष्टञ्च समं स्थिरर्क्षे क्रमाद्दृकाणैः फलमुक्तमार्यैः ॥ सत्स्वामियोगे क्षणतः शुभं स्यात्पापेक्षणात्कष्टफलं च वाच्यम् ॥ हायनोत्तमेपि ॥ पूर्वे त्रिभागे चरमे शुभा स्यान्मध्या द्वितीये त्वधमा तृतीये ॥ स्थिरे त्वनिष्टा प्रथमे त्रिभागे शुभा द्वितीये च समा तृतीये ॥ पूर्वे त्रिभागे द्वितनावनिष्टा मध्या द्वितीये शुभदा तृतीये ॥ दशाविलग्नस्य बुधैर्निरुक्ता ज्ञेयं फलं स्वेशभवं त्रिभेदैरिति ॥ लग्नदशाविशेषफलं हिल्लाजे ॥ हेममुक्ताफलद्रव्यलाभमारोग्यमुत्तमम् ॥ कुरुते स्वामिसन्मानं दशा लग्नस्य चोत्तमा ॥ लाभं कष्टेन वित्तस्य मैत्रीहीनस्य सेवनम् ॥ मनसा विकृतिं यांति दशामध्याविलग्नजा ॥ विदेशगमनं क्लेशं बुद्धिनाशं कलिं व्यथाम् ॥ महाहानिश्च कुरुते नष्टालग्नदशाफलम् ॥ क्रूरलग्नदशामध्ये सौख्यं स्वल्पं धनव्य

यम् ॥ देहे दुःखं तथा कष्टं मातुलस्य च जायते ॥ स्वामिमित्रशुभैर्दृष्टे लग्ने मध्यफलं भवेत् ॥ इति लग्नदशाफलम् ॥ अथ
ग्रहणां वर्षेशफलवद्दशाफलमित्युक्तं तेजसिंतहेन ॥ वर्षेश्वरत्वविषये ह्युसदां यदुक्तं पूर्वं फलन्निजदशासु तदेव चिन्त्यम् ॥ श्रेष्ठञ्च मध्यम
धमं च बलानुसारात्सम्यक् ततो ग्रहबलं प्रथमं विचिन्त्यम् ॥ इतिग्रहाणां दशाफलानि ॥ अथान्तर्दशानयनं वर्षतन्त्रे ॥ दशामानं समा
मानं प्रकल्प्योक्तेन वर्त्मना ॥ अंतर्दशा साधनीया प्राक्पात्यांशत्रशेन तु ॥ आदावंतर्दशापाकपतेस्तत्क्रमतोखिलाः । अयमर्थः ॥
पूर्वं हीनांशवशेन पात्यांशाश्च निष्पादितास्तत्र पात्यांशयोगेन वर्षस्थानाभिषिक्तं दशामानं भजेल्लब्धमन्तर्दशानयने ध्रुवको दिनादिकस्तेन ग्रहपात्यांशाः
पूर्ववद्गोमूत्रिकया गुणिताः षष्ट्योपर्युपरियुता ग्रहस्यान्तर्दशामानं दिनादिकं भवेत् ॥ तत्र प्रथमतो महादशास्वामिन एवान्तर्दशा । ततो लिखितक्रमे
ण तदग्रिमातर्दशा ततस्सर्वाधिकांशग्रहानंतरम्पुनरपि हीनांशक्रमेण महादशास्वामिपृष्ठपर्य्यन्तमन्तर्दशा ज्ञेया ॥ अत्रोदाहरणम् ॥ तत्र शुक्रमहाद
शादिनाद्या ९२ । ४२ । १७ इदमेव दशामानं वर्षस्थानाभिषिक्तं कल्पितम् ॥ ततसर्वपात्यांशायोगेन । अनेन २८ । १६ । ३१ प्राग्वल्लुब्धं
लब्धो दिनादिस्सर्वग्रहाणामंतर्दशा ध्रुवकः ३ । १२ । २८ । ३० अनेन शुक्रस्य पात्यांशाः २७ । ७ गुणिताः षष्ट्योपर्युपरियुताः जाता दिनाद्या
शुक्रदशायां शुक्रांतर्दशा २२ । ५१ । १३ । २६ एवं सर्वेषामप्यन्तर्दशास्साधनीयाः ॥ एवमन्तर्दशाभ्योपि विदशा साध्याः इत्युक्तं वामनेन ॥
अन्तर्दशादिनानि स्युस्तेभ्य प्रोक्तेन वर्त्मना ॥ साध्यानि विदशायाश्च दिनानि फलसिद्धये ॥ १ ॥ शुभयोगेक्षणान्मैत्र्या तत्फलं
परिचिंतयेत् ॥ अथ ग्रहाणामन्तर्दशाफलानि ताजिकसारे ॥ नृपप्रसादन्धनधान्यलाभं सुखागमम्मित्रसुतोदयञ्च ॥ दत्ते दिवानाथदशा
विपाके विधोर्दशा स्त्रीस्वजनात्प्रमोदम् ॥ १ ॥ सेनापतेर्वा नृपतेर्धनाप्तिम्मित्रार्थलाभं बहुलं सुखञ्च ॥ भानोर्दशायां यदि भूमिसूनुः
करोति रक्ताम्बरधान्यलाभम् ॥ २ ॥ सुखार्थनाशो रिपुरोगभीतिर्निरुद्यमत्वं व्यसनागमञ्च ॥ कुर्यात्तदानीं सकलार्थनाशो बुधस्य
तिग्मांशुदशाविपाके ॥ ३ ॥ हेमाश्वलाभं स्वजनात्सुहृत्त्वंस्त्रीपुत्रतो वा विविधञ्च सौख्यम् ॥ दिवाधिनाथस्य दशाप्रवेशे जीवस्य
दत्ते सुनृपेण सङ्गम् ॥ वैरोदयं सत्पुरुषान्नितांतं धर्मार्थनाशं विविधञ्च कष्टम् ॥ शुक्रस्य चेद्दस्रपतेर्दशायां दशा प्रकुर्यात्कुमतिं
कृशत्वम् ॥ क्षुच्छस्त्रभूपालभयं विवादं देहे कृशत्वं स्वजनेषु वैरम् ॥ सौरी दशा तीव्रकरस्य पाके नृणाम्प्रयात्याक्षिरुजं विधत्ते ॥

अत्र एव दशायां स्वान्तर्दशाफलं पूर्वोक्तं ग्रहाणां दशाफलमेव ज्ञेयम् ॥ इत्यर्कदशायामन्तर्दशाफलम् ॥ पित्तास्त्ररोगं स्वजने कृशत्वं भूपाद्भयञ्चार्थं भयं विरोधम् ॥ कुर्याच्छशांकस्य दशा विपाके भानोः प्रविष्टा त्वरयार्थनाशम् ॥ सुखार्थनाशन्नृपतेर्विरोधं कुस्त्रीप्रसंगं कुजनैर्विवादम् ॥ भौमस्य ताराधिपतेर्दशायां दशा नृणां देहभयं कृशत्वम् ॥ यानाश्वरत्नार्थसुवर्णलाभं निजेष्टवृद्धिं प्रियतां च लोके ॥ बौधी शशांकस्य दशाप्रवेशे दशा प्रविष्टा प्रकरोति सौख्यम् ॥ पुण्योदयम्ब्राह्मणदेवभक्तिं नृपाद्धनाप्तिं सुतमित्रसौख्यम् ॥ दत्ते शशांकस्य दशाप्रवेशे प्राप्ता दशा देव पुरोहितस्य ॥ लाभन्नृपाद्राजजनात्सुहृत्त्वं सत्पुत्रमित्राद्बहुलार्थलाभम् ॥ शौक्री दशा चंद्रदशाप्रवेशे कुर्याच्छरीरे परमां च पुष्टिम् ॥ स्वबांधवैर्मित्रसुतैश्च वैरं शत्रूदयं कांतिबलार्थनाशम् ॥ करोति चंद्रस्य दशाविपाके पाको हि मंदस्य कलत्रकष्टम् ॥ इति चंद्रदशायामन्तर्दशाफलम् ॥ धनागमं कांचनभूमिलाभं प्रपोषणम्मित्रसुतादिकानाम् ॥ दशा रवेरांशोर्धरणीसुतस्य दशाविपाके प्रकरोति सौख्यम् ॥ हिरण्यनारीरजतार्थलाभं करोति सौख्यं विजयं रिपूणाम् ॥ ताराधिनाथस्य दशा प्रयाता भौमस्य पाकेतु शुभानुरागम् ॥ असद्व्ययम्मित्रसुतैर्विरोधं भयं रिपूणामसुखन्नराणाम् ॥ करोति भौमस्य दशाविपाके शशांकसूनोर्विविधं च कष्टम् ॥ सुखार्थनाशन्निजमित्रकष्टं करोति नूनं स्वजनैर्विरोधम् ॥ कुभोजनं भूमिसुतस्य पाके दशा प्रपन्ना सुरपूजितस्य ॥ ४ ॥ खलैर्विवादं स्वजनैर्विरोधं रोगोदयं राजभयं रिपूणाम् ॥ करोति शुक्रस्य दशाप्रवेशे कुजस्य कष्टम्बहुलन्नराणाम् ॥ ५ ॥ चक्षुःप्रपीडाम्प्रकरोति पुंसां पापास्त्ररुक् शत्रुभयं क्षितीशात् ॥ सौरी दशा भूमिसुतस्य पाके यदिप्रयाता स्वजनैर्विरोधम् ॥ ६ ॥ इति भौमः ॥ मानार्थलाभं प्रकरोति पुंसां लाभं क्षितीशात्स्वजनाच्च सौख्यम् ॥ प्राप्ता हि सूर्यस्य दशा दशायां सौम्यस्य नित्यं विविधं विलासम् ॥ १ ॥ कष्टं शरीरे निजबंधुवैरं सौख्यार्थनाशं च भयं क्षितीशात् ॥ वातव्यथां चंद्रदशा प्रपन्ना चान्द्रेर्दशायाम्प्रकरोति नित्यम् ॥ २ ॥ व्रणोदयन्दद्रुविचर्चिकार्तिं सुखार्थनाशम्बहुलं च कष्टम् ॥ करोति सौम्यस्य दशाविपाके दशा हि भौमस्य परैर्विवादम् ॥ ३ ॥ आरोग्यता साधुजनेषु सौख्यं भोगान्विचित्रान् द्विजदेवसेवाम् ॥ दशा यदा देवगुरोः प्रयाता चान्द्रेर्दशायाम्प्रकरोति मानम् ॥ ४ ॥ रौप्याम्बरस्थानचतुष्पदानां लाभञ्च सौख्यं विविधं विलासम् ॥

शौक्री दशा सौम्यदशाविपाके प्राप्ताप्रतिष्ठाम्प्रकरोति पुंसाम् ॥ ५ ॥ वातार्तिकृत्कष्टमनल्परोगं कांतेर्विनाशं नृपतेर्भयञ्च ॥ सौम्यस्य पाके यदि सूर्यसूनोर्दशा प्रयाता बहुवित्तनाशम् ॥ ६ ॥ इति बुधः ॥ स्त्रीपुत्रमित्रैर्विविधं विलासं प्रपूजनन्देवगुरुद्विजानाम् ॥ शत्रोर्विनाशं प्रकरोति भानोर्दशा प्रयाता च गुरोर्दशायाम् ॥ १ ॥ माणिक्यमुक्ताफलहेमलाभं सौख्यानि दत्ते विविधानि पुंसाम् ॥ चांद्री दशा जीवदशा विपाके सर्वार्थलाभं विपुलन्नितान्तम् ॥ २ ॥ मानं नृपाद्राजजनात्सुहृत्त्वं रिपोर्विनाशं प्रकरोति लाभम् ॥ वित्तस्य भौमस्य दशादशायां गुरोर्नराणां बहुलं सुखञ्च ॥ यशःप्रणाशं स्वजनैर्विरोधं करोति मिथ्याकलहं स्वदारैः ॥ शशाङ्कपुत्रस्य दशा प्रयाता गुरोर्दशायामसुखञ्च कष्टम् ॥ वातोदयं वातकफोदयञ्च धर्म्मार्थनाशं रिपुरोगभीतिम् ॥ भृगोर्दशा जीवदशाविपाके नृणां विधत्ते नृपतेर्भयञ्च ॥ परैर्विरोधं बहुलञ्च कष्टं कफोदयन्धर्मधनक्षयञ्च ॥ सौरी दशा जीवदशाविपाके नृणां विधत्ते नृपतेर्भयञ्च ॥ इति गुरुदशायामंतर्दशाफलम् ॥ दुष्टाद्भयं भूमिपतेर्भयं च पित्तोदयं देहबलार्थनाशम् ॥ भानोर्दशादैत्यगुरोर्दशायां नृणां विधत्ते परमञ्च कष्टम् ॥ स्वल्पार्थलाभं कफशीतपीडां स्वभित्रदारैस्स्वजनैश्च पुत्रैः ॥ क्लेशं च दत्ते भृगुजस्य पाके दशा च ताराधिपतेः प्रमोहम् ॥ वेश्यानुरागं च विपक्षभीतिं वातास्ररुग्धर्मधनक्षयञ्च ॥ दशा च भौमस्य भृगोर्दशायां प्राप्ता च पुंसान्न सुखं कदाचित् ॥ सद्बुद्धिवृद्धिं द्विजदेवभक्तिं विद्याविनोदं प्रभुतां च कीर्तिम् ॥ लाभञ्च शुक्रस्य दशाप्रवेशे बौधी दशा स्त्रीजनितं च सौख्यम् ॥ हिरण्यवस्त्राम्बरभोजनानां लाभन्नृपालात्पुरुषैस्सुहृत्त्वम् ॥ पाके भृगोर्देवपुरोहितस्य दशा प्रपन्ना प्रकरोति पुंसाम् ॥ प्रमादनिद्राकलहं दशायां शुक्रस्य मांदी महदीशताञ्च ॥ इति शुक्रदशायामंतर्दशाफलम् ॥ क्लेशं प्रवासं भयमिष्टहानिं करोति वैरं सुतामित्रदारैः ॥ शनेर्दशायाञ्च रवेर्दशायां करोति पीडां परमां शरीरे ॥ कष्टेन लाभन्त्वसुखञ्च मांद्यं हृद्रोगदुःखं विविधं करोति ॥ आलस्यनिद्राभयमुग्रवैरं चांद्री दशा भास्करपुत्रपाके ॥ क्लेशागमं सौख्यधनार्थनाशं कुधर्म्मसिद्धिं पशुपुत्रहानिम् ॥ कौजी दशा सूर्यसुतस्य पाके करोति

वैराग्निजबन्धुमित्रैः ॥ सुखार्थलाभन्निजपुत्रमित्रैः प्रीतिं विधत्ते विविधं विलासम् ॥ मन्दस्य पाके शशिनंदनस्य दशा नराणान्नृपसङ्गमञ्च ॥ ४ ॥ धर्मानुरागं विजयन्नराणां नृपप्रसादम्बहुलञ्च लाभम् ॥ सौरेर्दशायां धिषणस्य जाता दशा सुखार्थागमनं करोति ॥ ५ ॥ सुरार्चनं ब्राह्मणदेवभक्तिं सुखार्थलाभन्नृपतेस्सुहृत्त्वम् ॥ ॥ शौक्री दशा सूर्यसुतस्य पाके करोति पुंसां विविधांश्च भोगान् ॥ ६ ॥ इति शनावन्तर्दशाफलम् ॥ अथ लग्नेशस्यान्तर्दशाफलमेव लग्नदशांतर्दशाफलं ज्ञेयमिति ॥ अथ शुभाशुभसूचकांतर्दशा वामनेनोक्ताः ॥ चंद्रारजीवा १ बुधजीवशुक्रा २ दिवाकरेन्दू ३ रविजज्ञशुक्राः ४ ॥ रवीन्दुशुक्रा ५ बुधजीवमन्दा ६ जीवज्ञशुक्रा ७ रवितः क्रमात्स्युः ॥ १ ॥ एवमंतर्दशायाश्च पाचकाः शुभदा ग्रहाः ॥ अन्ये त्वशुभदा ज्ञेया एवञ्च विदशाफलमिति ॥ २ ॥ अथ गौरीमतानयनं महादेवमतेन च गौरीमतदशा जन्मर्क्षमासदिनानि दिने षडंशा दशा ज्ञेया वर्षे द्वादशांशो मासः॥ महादेवमते आर्द्रातः ॥ ३ ॥ वर्षे दशादिनानि सौराणि दिनप्रवेशे दशा घटीरूपा ते च॥ दशानयनमुक्तं मुक्तावल्याम् ॥ जन्मनक्षत्रतःप्रोक्ता दशा गौरीमताह्वया॥ सूर्येन्दुकुजराह्वीज्यशनिज्ञशशिभार्गवाः ॥ १ ॥ दशेशा वह्निभाज्ज्ञेयाः क्रमात्रिः परिवर्तनात् ॥ स्युर्दशादिवसास्तेषां धृति १८ स्त्रिंशति ३० मूर्च्छनाः २१ ॥ २ ॥ वेदेषवो ५४ नागकृता ४८ मुन्यर्थाः ५७ क्षितिसायकाः ५१ ॥ मूर्च्छनाः २१ षष्टि ६० रेतेभ्यो द्वादशांशेन मासजाः ॥ ३ ॥ षडंशतुल्यास्त्वेतासां नाडिकाद्याः फलं दशाः ॥ अथवा रुद्रनक्षत्रात्त्रिभिर्भैर्दशेश्वराः ॥ ४ ॥ एते एव भवंतीति महादेवेन भाषितम् ॥ अथ गौरीमतोक्तस्य दशाक्रमस्य दशादिमा या भवशादुपेता ॥ सा भुक्तभोग्यर्क्षघटीविनिघ्ना सर्वर्क्षनाडीविहृता दिनाद्यम् ॥ द्विधा यदाप्तं त्विह भोग्यभुक्तं तस्य ग्रहस्यैव लिखेदधस्तात् ॥ दशाप्रमाणं परतो ग्रहाणां यथास्थमग्रे विलिखेदधोधः ॥ प्रांते पुनर्भुक्तघटीसमुत्थं दिनाद्यमाद्यस्थ लिखेत्खगस्येति ॥ उदाहरणम् ॥ कस्यापि रोहिणी जन्मनक्षत्रं सा रोहिणी चंद्राधःस्था अतःप्रथमवर्षे चंद्रस्य दशा द्वितीयवर्षे भौमस्य तृतीयवर्षे राहोर्दशा एवमग्रेपि ज्ञेयम् ॥ अथास्य जन्मनि रोहिणीनक्षत्रस्य भुक्तघटिकाः ४० भोग्यघटिकाः २० तत्राष्टमवर्षप्रवेशे शुक्रदशा जाता ॥ तस्या दिनानि ६० भोग्य २० घटीगुणानि १२०० सर्वर्क्षघटी ६० भक्तानि

जातानि शुक्रदशादिनानि तत्राष्टमवर्षे आदौ शुक्रदशा भोग्यदिनमिता २० ततो रवेः १८ ततश्चंद्रस्य ३० भौमस्य २१ राहोः ५४ गुरोः ४८ शनेः ५७ ज्ञस्य ५१ केतोः २१ पुनः प्रान्ते शुक्रदशा भुक्तदिनमिता ४० ज्ञेया ॥ अत्र गौरीमतमहादेवमतदशा बलराममतदशा च मासप्रवेशे मासप्रवेशदिननक्षत्राज्ज्ञेया ॥ दिनप्रवेशे दिनप्रवेशस्पष्टलग्ननक्षत्राज्ज्ञेया ॥ यथा मेषे त्रयोदशांशविंशतिकलापर्यन्तमश्विनीनक्षत्रमेव ज्ञेयम् ॥ अस्या एव नामान्तरं मुद्दादशेति ॥ मुद्ददशानयने सुगमोपायो मिश्रकृतः ॥ जन्मर्क्षसंख्यासहिता गताब्दा द्व्यूनिता नंद ९ हतावशेषाः ॥ आचंकुराजीशबुकेशुपूर्वा ग्रहा दशास्वामिन इत्थमब्दे ॥ अत्रांतर्दशाः सुगमोपायेनसामुद्रिकग्रन्थे उक्ताः ॥ वेदा ४ नागाः ८ शराः ५ सप्त ७ दिग्र १० सां ६ क ९ शराः ५ रसाः ६ ॥ सूर्यादीनाञ्च गुणकास्तैर्निघ्ना स्वदशामिति ॥ १ ॥ षष्ट्याप्तान्तर्दशा तस्य जायतेतिपरिस्फुटा ॥ यस्य वर्षे भवेत्तस्य प्रथमा च दशा भवेत् ॥ २ ॥ अन्यास्तदग्रिमस्थानादेवमन्तर्दशा अपि ॥ पापवर्षे भवेद्दुःखं शुभ वर्षे सुखाप्तय इति ॥ ३ ॥ अथ सूर्यादीनांदशान्तर्दशाफलं ॥ तत्रैव ॥ सूर्ये राजकुलाद्भीतिः पीडा स्यात्पित्तसंभवा ॥ विपत्तयश्च बंधूनां वित्तानां व्यय एव च ॥ १ ॥ शांतिं रिपुप्रतापानां नैरुज्यं धनसंपदाम् ॥ कुरुतेऽन्तर्गतश्चन्द्रो दशायां चण्डरोचिषः ॥ २ ॥ कुजो विजयमत्युग्रं हेमरत्नं नृपात्सुखम् ॥ चांद्रिश्शत्रुकुलाद्भीतिं कुष्टपामादिकान् गदान् ॥ ३ ॥ दारिद्र्यपापव्यसनं रोगेभ्योपि परिच्युतिः ॥ विलासं विविधं धर्म्मक्रियातत्परमानसम् ॥ ४ ॥ पित्तज्वरं च रोगादीन्देहत्यागं च भार्गवः ॥ मातृपितृभयश्चैव वित्तानां व्यय एव च ॥ ५ ॥ शनिर्नृपाद्भयन्दैन्यं वैरिवृद्धिं धनक्षयम् ॥ अर्थनाशोन्यदेशेषु गमनं गौरवाल्पता ॥ ६ ॥ शत्रुराजकुलाद्भीतिरनर्थो बहुधा भवेत् ॥ इतिरविमुद्दफलम् ॥ चान्द्र्यांस्त्रीसुतभूलाभो वस्त्राभरणसंयुतम् ॥ स्वपक्षवैरं कन्याया जन्म

| सू | चं | म | रा | बृ | श | बु | क | शु | ग्रहः |
|---|---|---|---|---|---|---|---|---|---|
| कृ | रो | मृ | आ | पु | पु | श्ले | म | पू | नक्षत्राणि |
| उ | ह | चि | स्वा | वि | अ | ज्ये | मू | पू | नक्षत्राणि |
| उ | श्र | ध | श | पू | उ | रे | अ | भ | नक्षत्राणि |
| आ ३ | श्ले ३ | उ ३ | स्वा ३ | ज्ये ३ | उ ३ | श ३ | रे ३ | कृ ३ | महादेव मतं |
| १८ | ३० | २१ | ५४ | ४८ | ५७ | ५१ | २१ | ६० | योगः३६० |
| १॥ | २॥ | १॥। | ४॥ | ४ | ४॥। | ४। | १॥। | ५ | योगः३० |
| ३ | ५ | ३॥ | ९ | ८ | ९॥ | ८॥ | ३॥ | १० | योगः३० |

निद्रारतिस्तथा ॥ १ ॥ इंदोर्दशायाम्मार्तण्डे विजयारोग्यसंपदः भौमे चोरात्कोशनाशो रक्तपित्तादिकान् गदान् ॥ २ ॥ चंद्रजे वित्ततुरगलाभो वित्तसुखानि च ॥ धनालंकारहस्त्यश्वमकस्मात्सुरपूजिते ॥ स्त्रीसुखञ्च सुसङ्गञ्च शुक्रेलंकारलब्धयः ॥ रोगव्यसन शोकाश्च बंधुतोभिभवश्शनौ ॥ वह्निशोकभयं घोरं बंधूद्वेगं धनक्षयम् ॥ स्त्रिया लाभं स्त्रिया हानिं केतावन्तर्गते विधोः ॥ इति चंद्रमुद्दम् ॥ भौमे शत्रुविमर्दश्च विग्रहो बांधवैः सह ॥ रक्तपित्तकृता पीडा परस्त्रीभिस्समागमः ॥ भानौ भौमदशान्तरस्थे प्रचण्डस्साहसी जयी ॥ चन्द्रे सुखसुहृद्वृद्धिर्मणिमौक्तिकसंचयः ॥ बुधे पित्तोद्भवा पीडा नाशो वैरिभयम्महत् ॥ गुरौ भूपति मित्रत्वं सुहृत्त्वासक्तचित्तता ॥ शुक्रे रणाद्भयं व्याधिव्यसनानि धनक्षयः ॥ शनौ दिने दिने दुःखमसह्यव्यसनागमम् ॥ कर्मार्थ नाशमुद्वेगं बंधुचौरादिकम्भयम् ॥ स्वनाशो देहपीडा च केतावंतर्गते कुजे ॥ इति कुजमुद्दम् ॥ बौध्या बंधुसमायोगो मित्रधर्मस मागमः ॥ प्रीतिर्जनस्य विपुला देहपीडा त्रिदोषजा ॥ चांद्रेर्दशायामुष्णांशोर्दन्तिस्वर्णाम्बरातयः ॥ चन्द्रे विचर्चिकाकुष्ठराजरो गादिकं भयम् ॥ भौमे क्लेशश्शिरोरोगो बंधुवैरम्महद्भयम् ॥ गुरौ रोगादिभिर्युक्तो भृगौ राज्यसुगन्धिमान् ॥ शनौ पापसुखा सक्तः प्रचण्डो मदनोद्धतः ॥ बंधुनाशो मनस्तापो देहत्यागो धनक्षयः ॥ सुहृद्बंधुसुतैर्द्वन्द्वो केतौ मित्रकलिर्भवेत् ॥ इति बुधमु द्दम् ॥ ज्यैष्ठ्यां मानधनप्राप्तिर्देवब्राह्मणपूजनम् ॥ कर्णरोगस्तथा वैरं स्वजनैश्च कलिर्भवेत्॥ सुखी गुरुक्षेमवांश्च सूर्ये जीवदशान्तरे ॥ चन्द्रे बहुविधा लब्धिर्निर्जितारिर्महीसुते॥शूरोपि सेवी चण्डश्च परितापी सुखी कुजे ॥ पित्रोर्भक्तिस्सुहृद्युक्तो नीरुक्सुखयुतो बुधे ॥ शुक्रे चिन्ताहतिश्शत्रुब्राह्मणाश्रयजीवनम् ॥ पराङ्गनादिसंसक्तश्शनौ सुखधनैर्हतः ॥ ४ ॥ बंधुद्वेषो मृषा वादस्स्वामिभिस्तु निरा श्रयः ॥ इति गुरुमुद्दम् ॥ शौक्र्यां स्त्रीसङ्गमो लाभो वस्त्राभरणसंयुतः ॥ कौशलयम्महती कीर्तिर्धनलाभश्च जायते ॥ १ ॥ रवौ सित दशान्तस्थे बन्धनश्चोदरामयः ॥ कामलम्मौलिदशननखरोगः कलानिधौ ॥ २ ॥ भौमे ह्युपद्रवो भूमिनाशापित्तरुजोस्त्ररुक् ॥ बुधे धनार्द्धिभूलाभसुखावित्तेष्टलाभकः ॥ ३ ॥ जीवे धनसुखं देशसंपत्तिः शीलधर्म्मकौ ॥ वृद्धांगनारातिः सौरे रिपुसौम्याधिकारिता ॥

२० ॥ अथेयं दशा चतुर्नक्षत्रेशा अतो दशादिनानि चतुर्भक्तानि लब्धा ५ एकैकनक्षत्रस्य दिनाद्या भुक्तिः ॥ अथपुष्यनक्षत्रस्य भुक्तघटीभि १२ र्भस्य भुक्ति ५ र्गुणिता ६० सर्वर्क्षघटी ६० भक्ता लब्धा पुष्यस्य गता भुक्तिर्दिनात्मिका १ ॥ इयङ्गतनक्षत्रयोरार्द्रापुनर्वस्वो र्भुक्त्या १० युता ११ जाता रवेर्गतदशा ॥ अथ पुष्यघटीभि ४८ र्भभुक्ति ५ र्गुणिता २४० सर्वर्क्षघटी ६० भक्ता ४ लब्धा पुष्यस्य गम्या भुक्तिः ॥ इयं गम्यभस्याश्लेषाभिधस्य भुक्त्या ५ युता९जाता रवेर्गम्यदशा ॥ तत्रादौ रवेर्गम्यदशादिनात्मिका ९ततश्चंद्रस्य ५० भौमस्य२८ । ४० बुधस्य५६ । ४० शनेः ३३ । २० गुरोः ६३ । २० राहोः ४० शुक्रस्य७० पुनः प्रांते गतदिनमिता ११ रवेर्दशा ज्ञेयेति ॥ अत्र प्रकारान्तरं वर्षफलप्रदीपे ॥ वर्षप्रवेशे दिनभेन नाडी निघ्ना दशाद्यस्य खषट् विभक्ता ॥ फलं दिनाद्यं हि दशागतस्य तदूनिताद्यस्य दशा तदेष्या ॥ वर्षप्रवेशे प्रथमं दशा सा ततः क्रमेणैवमिहेतरेषाम् ॥ वर्षस्य चांते प्रथमस्य याता दशा भवेदब्दफलस्य सिद्ध्यै ॥ वर्षप्रवेशे दिनभं च यत्स्यात्तस्याधिपस्याद्यदशा भवेत्सा ॥ ततस्तु तत्खेटदशा क्रमेण दशा भवेयुः सदसत्फलार्थम् ॥ अथ जन्मकालाभावे जन्मराशिवशाद्दशानयनमुक्तं तत्रैव ॥ जन्मकालाद्यभावश्चेत्कोचिज्जन्मभतो विदुः ॥ तदेव प्रोच्यते पुंसां शुभं तद्वार्षिकम्फलम् ॥ १ ॥ जन्मन्यर्कदशा ततो विधुदशा यावद्द्वितीयो रविस्त्रिस्थेर्कें दशवासरा शशिदशा भौमस्य पाकस्ततः ॥ बन्धुस्थेद्रिदिनं ततो बुधदशा यावत्सुतस्थो रविः षष्ठे चाब्धिदिनन्ततश्शनिदशा सप्तास्थिते सप्त च॥२॥ततो दशेज्यस्य च यावदष्टनवास्थितेर्कें दश वासराः स्युः ॥ ततस्तु राहोर्दशमे च सूर्ये त्रिंशद्दिनं स्यात्तु ततः सितस्येति ॥ ३ ॥ अत्रान्तर्दशानयनम्फलसहितमुक्तं तत्रैव ॥ दशा स्वपाकैर्निहता खषट्करामै ३६० र्हृता लब्धफलन्दिनाद्यम् ॥अन्तर्दशाः स्युस्स्वदशाक्रमेण फलानि तासां कथयामि चात्र ॥ ॥ १ ॥ अथ फलम् ॥ नृपतेर्भयमत्युग्रम्पीडा स्याद्रक्तपित्तजा ॥ करोति धननाशञ्च स्वदशान्तर्गतो रविः ॥ १ ॥ इदमत्र दशाफलं ज्ञेयम् ॥ अल्पायासेन लाभस्स्यात्संग्रामादौ जयस्तथा ॥ आरोग्यं स्त्रीसुखं चैव रवेरन्तर्गते विधौ॥२॥आरोग्यं स्त्रीभर्तृ सौख्यञ्च यो

| सू | चं | मं | बु | श | बृ | रा | शु | योगः |
|---|---|---|---|---|---|---|---|---|
| आ ४ | म ३ | ह ४ | अ ३ | पू ४ | ध ३ | ब ४ | कृ ३ | २० |
| २० ० | ५० ० | २७ ० | ५७ ४० | ३३ २० | ६३ २० | ४० ० | ७० ० | ३६० |
| १ ४० ० | ४ १० ० | २ १३ २० | ४ ४३ २० | २ ४० ४० | ५ १६ ४० | २ ३० ० | ५ ५० ० | मासद्यादि० ते ३० |

| सू | चं | मं | बु | श | बृ | रा | शु | योगः |
|---|---|---|---|---|---|---|---|---|
| ३ | ८ | ४ | ९ | ५ | १० | ६ | १७ | ६०दिन |
| २० | २० | ६ | २६ | ३३ | ३३ | ४० | ४० | दशा |
| ० | ० | ० | ०० | २० | २० | ० | ० | घट्यः |

रक्ताम्बरागमः ॥ अनुद्वेगेन लाभस्स्याद्भौमे सूर्यदशाङ्गते ॥ ३ ॥ धनहानिर्विरोधस्स्यात्पीडा सोपद्रवादिभिः ॥धनव्ययो हि सूर्य्यस्य दशान्तस्थे हि बोधने ॥४॥ मातृपीडा नृपाद्भीतिरुदरामयपीडनम्॥कृष्णवस्तूद्भवा हानिस्सूर्य्यस्यान्तर्गते शनौ ॥५॥सुखेन कार्य्यं सिद्धिस्स्याद्धनलाभो महान् भवेत् ॥ अचिन्त्यो राज्यसन्मानो गुरौ सूर्य्यदशान्तरे ॥ ६ ॥ कलहो मित्रपुत्राद्यैः कार्य्यहानिर्नृपाद्भयम् ॥ सेवकेभ्यो व्ययश्चैव राहौ सूर्य्यदशाङ्गते ॥ ७ ॥ मोहेन निर्बलत्वञ्च स्त्रीविरोधं धनव्ययम् ॥ क्वचित्क्षोभकरोत्यर्कदशायां भार्गवो गतः ॥ ८ ॥ इत्यर्कदशायामन्तर्दशाफलम् ॥ लाभस्स्याच्छुभवस्तूनां कनकायासलाभकः ॥ स्त्रीरतिः श्लेष्मकोपश्च स्वदशांतर्गतो विधुः ॥ रक्तपित्तप्रकोपश्च परैश्च कलहो भवेत् ॥ फलानां व्यवहारस्स्याद्भौमे चंद्रदशाङ्गते ॥ चतुष्पदादिलाभस्स्यादल्पद्रव्यस्य लाभकः ॥ कलहस्स्त्रीसुताद्यैश्च चंद्रान्तर्गतबोधने ॥ श्लेष्मपीडा वीर्यहानिश्शूलपीडा भयन्तथा ॥ पितृमातृविरोधः स्याच्छनौचन्द्रदशाङ्गते ॥ वस्त्राभरणलाभस्स्याल्लाभः सौरभ्यवस्तुनः ॥ मान्यता स्वजनेभ्यश्च चंद्रस्यांतर्गते गुरौ ॥ निष्कारणन्तथोद्वेगो देहे पीडा तथा व्ययः ॥ सेवकाश्रयसंयातो विधोरन्तर्गतं तमः ॥ स्त्रीसुखं श्वेतवस्तूनां लाभं वै राजमानताम् शत्रोर्नाशं करोत्याशु चंद्रांतस्थो हि भार्गवः ॥ शत्रुक्षयो नृपाल्लाभो मान्यता सौख्यमुत्तमम् ॥ वस्त्रालंकारलाभस्स्यादर्के चन्द्रदशांगते ॥ इति चंद्रः ॥ रक्तपित्तकृता पीडा रिपुभ्योपि भयं भवेत् ॥ सन्निपातोद्भवा पीडा स्वदशांतर्गते कुजे ॥ १ ॥ पित्ताधिक्यं विरोधस्स्यान्मित्रपुत्रादिभिस्तथा ॥ धनव्ययं क्वचिल्लाभो भौमस्यांतर्गते बुधे ॥ २ ॥ विरोधो बांधवैस्सार्धं धननाशोङ्गपीडनम् ॥ सन्निपातादिका पीडा शनौ भौमदशाङ्गते ॥ ३ ॥ कार्योपक्रमलाभौ च संग्रामादौ जयस्तथा ॥ धनागमस्सुहृत्प्राप्तिर्गुरौ भौमदशांगते ॥ ४ ॥ अग्निचोरादिजा पीडा मनश्चिन्ता व्ययस्तथा ॥ लाभहानिः क्वचिद्वैरं भौमस्यांतर्गतं तमः ॥ ५ ॥ चोराग्निभयमत्युग्रं व्ययाधिक्यमनुत्तमम् ॥ मनश्चिंतां करोत्येव भौमस्यांतर्गतो भृगुः ॥ ६ ॥ सहायात्कार्यसिद्धिस्स्याल्लाभो राज्ञो महान्भवेत् ॥ स्त्रीसुखञ्च सुहृत्प्राप्तिः सूर्यें भौमदशां गते ॥ ७ ॥ जनेन कार्यसिद्धिस्स्यात्सुखं पुत्रादिभिस्तथा ॥ वैरिनाशो धनप्राप्तिश्चन्द्रे भौमदशाङ्गते ॥ ८ ॥ इति भौमः ॥ स्त्रीसुखं राजसन्मानः कार्यसिद्धिस्तथा भवेत् ॥ बुद्धिः प्रपञ्चताला भस्स्वदशांतर्गते

॥ ४ ॥ मृतिर्भयकृतं शोकं दुःखप्राप्तिर्न संशयः ॥ अग्निदाहो ज्वरो घोरः कन्याजन्मास्त्रियाश्च्युतिः ॥ ५ ॥ इतिशुक्रमुद्दम् ॥
शानैश्चर्यान्देहपीडा पुत्रदारैश्च विग्रहः ॥ तन्द्रा श्रमो बुद्धिनाशो विदेशगमनं भवेत् ॥ १ ॥ पुत्रार्थमित्रस्त्रीनाशा दशायाम्भा
स्करे शनेः ॥ स्त्रीहतम्बन्धुविश्लेषः कलिर्मृत्युस्सुधाकरे ॥ २ ॥ भौमे दुःखं रुजो देशत्यागो बहुविधेय्यंता ॥ बुधे सुखं सुभगता
सत्कारश्च जयो धनम् ॥ ३ ॥ जीवे समुचितं सौख्यं पुरग्रामगणेशता ॥ अनेककामिनीमित्रयशोवित्तानि भार्गवे ॥ ४ ॥ बन्धू
द्वेगम्महादुःखमर्थनाशम्महद्भयम् ॥ अग्निदाहो ज्वरो घोरः कन्याजन्माङ्गनासुखम् ॥ इति शनिमुद्दम् ॥ स्वर्भानोर्जायते दुःखं
बंधूनामात्मनो रुजः ॥ देशांतरेषु गमनं धननाशो रविग्रहः ॥ १ ॥ राहोर्दशायां भार्याया विपत्तिर्बांधवक्षयः ॥ अर्थनाशोन्य
देशेषु गमनञ्चौरवालपता ॥ २ ॥ अशुभं वान्यजं दैन्यं व्याधिं भीतिं सुतक्षयम् ॥ करोति सिंहिकासुनोर्भानुरन्तर्दशाङ्गतः ॥ ३ ॥
वह्निशोकभयं घोरं बंधूद्वेगन्धनक्षयम् करोति सिंहिकासूनोर्विधुरन्तर्दशांगतः ॥ ४ ॥ कामार्थनाशमुद्वेगं बंधुचोरादिकं भयम् ॥
करोति सिंहिकासूनोर्भूमिजोंतर्दशांगतः ॥ बंधुनाशं मनस्तापं देशत्यागं धनक्षयम् ॥ करोति बहुदुःखानि राहोरन्तर्दशाम्बुधः ॥६॥
बंधुद्वेषं मृषा वादं सम्यग्बंधुनिराश्रयम् ॥ करोति सिंहिकासूनोर्गुरुरन्तर्दशांगतः ॥ ७ ॥ बंधुद्वेषं महादुःखं अर्थनाशो महद्भ
यम् ॥ शरीरे क्लेशमाप्नोति राहोरन्तर्गते सिते ॥ ८ ॥ मृतिं भयकृतिं शोकं दुःखप्राप्तिं न संशयः ॥ करोति सिंहिकासूनोश्शनिर
न्तर्दशाङ्गतः ॥ ९ ॥ इति राहुमुद्दम् ॥ केतोर्दशायां स्याद्वादो द्रव्यपुत्रक्षयौ सुखम् ॥ शत्रुराजकुलाद्भीतिरनर्थौ बहुधा भवेत् ॥
॥ १ ॥ अग्निदाहो ज्वरो घोरः कन्याजन्म स्त्रियाश्च्युतिः ॥ केतोरन्तर्गते सूर्ये राज्ञा सह कलिर्भवेत् ॥ २ ॥ अर्थनाशो
र्थलाभश्च सुखं दुःखञ्च जायते ॥ स्त्रीलाभश्च स्त्रिया हानिः केतोरन्तर्गते विधौ ॥ ३ ॥ प्रजया सह संवादश्चौ
रवह्न्यरिजं भयम् ॥ स्वनाशो देहपीडा च केतोरन्तर्गते कुजे ॥ ४ ॥ चोरैर्वा शत्रुभिर्युद्धं देहत्यागोभिजायते ॥
देहपीडा ज्वरस्तीव्रः केतोरन्तर्गते बुधे ॥ ५ ॥ द्विजेन्द्रैस्सह संप्रीतिर्नृपपूज्यैरमर्षिभिः ॥ कुलस्त्रीषु सुतोत्पत्तिः केतो

रन्तर्गतेगुरौ ॥ ६ ॥ केतोरन्तर्गते शुक्रे विप्रैस्सह कलिर्भवेत् ॥ वातपित्तकृता पीडा गोत्रजैस्सह विग्रहः ॥ ७ ॥ विदेशगमनन्दुःखं केतोरन्तर्गते शनौ ॥ सुहृद्बन्धुसुतैर्द्वन्द्वो भूनिमित्तं कलिर्भवेत् ॥ इष्टैश्च रणसंवादो राहौ केत्वन्तरङ्गते ॥ इति केतुमुद्दम् ॥ इति मुद्दशाविचारे सर्वग्रहाणां मुद्दान्तर्दशा समाप्ता ॥ अत्र स्वदशाफलमेव स्वान्तर्दशाफलं ज्ञेयम् ॥ अथ यत्र ग्रहाणामनुक्तं तत्रार्द्धश्लोकेन पूर्वोक्तग्रहादग्रिमग्रहफलं ज्ञेयमिति विशेषः ॥ समाप्तेयं गौरीमतदशामुद्दाभिधा महादेवमतदशाफलमेतदेवज्ञेयम् ॥ अथ राममते दशा ताजिकमुक्तावल्याम् ॥ बलराममताद्रौद्राच्चतुस्त्रिभिरिहक्रमात् ॥ दशेशा नख २० पञ्चाशत् ५० भानि २७ शैलेषवः ५७ सुराः ३३॥१॥त्र्यंगानि ६३ खाब्धयः ४० पूर्णशैला ७० स्तद्दिवसा मताः ॥ वर्षप्रवेशनक्षत्राद्दशेयं रामसम्मता ॥ २ ॥ बलोदिता यस्य दशा ग्रहस्य याद्या दशास्याद्भवशाद्दिनाद्या ॥ चतुस्त्रिनक्षत्रपतेर्भजेत्तां स्वभप्रमित्येकक्रमस्य भुक्तिः ॥ ३ ॥ या वर्तमानास्य तु भस्य भुक्तिः सा तद्भभक्तैष्यघटीविनिघ्ना ॥ भाज्याथ तद्भस्य गतैष्यनाडीयोगेन लब्धो गतगम्यके ते ॥ ४ ॥ युते विधेये गतगम्यभानां भुक्त्या दिनाद्ये गतगम्यके स्तः ॥ प्राक्पाकनाथद्युचरस्य तस्य गम्यप्रमाणाद्दिदशा दिनाद्या ॥ ५ ॥ पराः परेषां द्युसदां यथा स्यात्प्रान्ते पुनर्जातमितादिमस्येति ॥ ६ ॥ उदाहरणम् ॥ वर्षप्रवेशे पुष्यनक्षत्रान्तेनादौ सूर्यदशा जातादिनाद्या ॥

अथगौरीमतदशासुग्रहाणामंतर्दशाचक्रंयोगः

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू.१८ | चं३० | मं२१ | रा५४ | बृ४८ | श ५७ | बु ५१ | के२१ | शु६० |
| १८ | ४० | ६९ | १२३ | १७४ | २२८ | २७९ | ३०० | ३६० |
| ४ | ८ | ५ | ७ | १० | ६ | ९ | ५ | ६ शु. |
| सू. | चं | मं | रा | बृ | श | बु | के | शु |
| १।१२ | ४।०० | १।४५ | ६।१० | ८।०० | ५।४२ | ७।६९ | १।४८ | ६।०० |
| चं. | मं | रा | बृ | श | बु | के | शु | सू |
| २।२४ | २।३० | २।२७ | ९।०० | ४।४८ | ८।३३ | ४।१५ | २।०६ | ४०७० |
| मं. | रा | बृ | श | बु | के | शु | सू | चं |
| १ ३० | ३।३० | ३।३० | ५।२४ | ७।१२ | ४।१५ | ५।६ | ।।२४ | ८।०० |
| रा. | बृ | श | बु | के | शु | सू | चं | मं |
| २।६ | ५।०० | २।६ | ८।६ | ४।०० | ५।४२ | ३।२४ | २।४८ | ५।०० |
| बृ. | श | बु | के | शु | सू | चं | मं | रा |
| ३।०० | ३ ०० | ३।४ | ४।३० | ४।४९ | ३।४८ | ६।४८ | १।४५ | ७।०० |
| श. | बु | के | शु | सू | चं | मं | रा | बृ |
| १।४८ | ४।३० | १।४५ | ५।२४ | ३।१२ | ६।२४ | ४।१५ | २।१७ | १०।० |
| बु. | के | शु | सू | चं | मं | रा | बृ | श |
| २ ४२ | ३।२० | २।६ | ३।३६ | ६।२४ | ४।४५ | ५।५७ | ३ ३० | ६।०० |
| के. | शु | सू | चं | मं | रा | बृ | श | बु |
| १।३० | ३१०० | १।२४ | ७।१२ | ४।१० | ६।४९ | ८।२० | २।६ | ९।०० |
| शु. | सू | चं | म | रा | बृ | श | बु | के |
| १ ४८ | २।०० | २।४८ | ४।३० | ४।१० | ९।३० | ५।६ | ३।९ | ५।०० |

तत्र किं कारणमिति चेदुच्यते ॥ जन्मनि जातकोक्तमार्गेण रविश्चेत्पूर्णबलो वर्षेपि पूर्णबलः शुभस्थानगश्च भवति तदा गजाश्वलाभादिकमवश्यं वर्षे वक्तव्यम् ॥ जन्महीने बले सूर्ये वर्षे पूर्णवीर्येपि गजाश्वादिलाभादिकं स्वमे वक्तव्यम् ॥ उक्तञ्चवराहेण ॥ परिणमति फलोक्तिस्स्वप्नचिंता स्ववीर्यैरिति ॥ अथ दशारिष्टमुक्तं हिल्लाजदीपिकायाम् ॥ दशादौ दशेशस्त्रिराशीश्वरश्च यदा नष्टवीर्योभवद्रिष्टमुक्तम ॥ विपक्षाष्टमस्थोथवा क्रूरदृष्टयुतस्स्यादरिष्टं तदा पाककाले ॥ त्रिराशीश्वरश्चंद्रपाकेश्वरौ तु रिपुच्छिद्ररिःफेषु संख्यावरिष्टम् ॥ त्रिराशीशपाकेश्वरौ शीतरश्मेर्यदा वा तदा देशनीयन्त्वरिष्टम् ॥ त्रिराशिकेशस्तनुतो विधोर्वा पाकेश्वराद्विद्वि२२मिते द्रकाणे ॥ जन्मलग्नाद्दशावेशःषष्ठाष्टेङ्के दशेश्वरात् ॥ छिद्रांशस्थोथवारिष्टं करोति रिपुराशिगः ॥ छिद्रात्रैराशिपः शोध्यः स शनिर्मृत्युसन्नकम् ॥ तत्काले वीर्यसंयुक्तमरिष्टं जायते ध्रुवम् ॥ तत्काले वीर्यहीनश्च विलग्नाधिपतिर्यदा ॥ व्ययारिच्छिद्रगश्चेत्स्यात्तदा रिष्टं प्रजायते ॥ दशाधिपो वीर्य्ययुतः प्रवेशे त्रैराशिकेशोपि युतः शुभैश्च ॥ दृष्टस्त्रिकोणोपचयस्थितश्चेत्तदाशु रिष्टं विलयम्प्रयाति ॥

| २० | ७० | ४७ | १५४ | १०७ | २५० | २९० | ३६० |
|---|---|---|---|---|---|---|---|
| सू २० | चं ५० | मं ४७ | बु ५७ | श ३३ | बृ ६३ | रा ४० | शु. ७० |
| सू १।५७ | चं ६।१७ | मं २।१२ | बु ९।२ | श ३।२ | बृ ११।२ | श ४।२७ | शु ३।२७ |
| चं २।४७ | मं ३।५५ | बु ४।१७ | श ५।१३ | बृ ५।५२ | रा ७।० | शु ७।४७ | सू. ३।५३ |
| मं १।३० | बु ७।५५ | श ९।२८ | बृ ९।५७ | रा ३।५० | श १२ १५ | सू २ १३ | चं. ९।४= |
| बु ३।१० | श ४।२५ | बृ ४।४४ | रा ६ २० | श ६।२० | सू ३५ ३० | चं ५ २३ | मं ५।२५ |
| श. १ ५० | बृ १।४५ | रा ३ ३० | शु ११५ | सू १।५० | चं ८।४५ | मं ३।० | बु. ११।५ |
| बृ ३।२० | रा ५।३३ | शु ५।१५ | सू ३।५ | चं ४।३५ | मं ४।३१ | बु ६।२१ | श. ६।२६ |
| रा २।१३<br>शु ३।५३ | शु ९।४३<br>सू २।४७ | सू १।३०<br>च ३।४५ | चं १।५४<br>म ४।१७ | मं २।२८<br>बु ५।१४ | बु ९ ५८<br>श ५।४० | रा ३।४<br>बृ ७।० | बृ १२।१५<br>रा. ७।४७ |

इति श्रीबलभद्रकृते हायनरत्ने दशानयनाधिकाराध्यायः ॥ अथ मासप्रवेशानयनम् ॥ तत्प्रयोजनमाह यादवः ॥ समाफलं व्याससमासकाभ्यां समीरितम्मासफलं विना तत् ॥ नाभात्यनायासकरं ध्रुवे तत्सयुक्ति मासानयनम्फलञ्च ॥१॥ ताजिकालंकारेपि ॥ शरदधिपतिमुंथहाधिशोभा शरदपि मासफलैर्विना न भाति ॥ शरदधिगमराजितालताया न च रुचिमेति फलैश्च पुष्पिताग्रा ॥ २ ॥ अथ मासप्रवेशोपयुक्तमब्दपसूर्याद्यानयनं लिख्यते ॥ तत्राब्दपानयनम् ॥ स्वाभीष्टशाकात्तु समीपशाकं विशोध्य शेषांकशकांककोष्ठयोः ॥ अधस्थवारादिकसंयुतिर्भवेदब्दाधिपो वारमुखः समादौ ॥ १ ॥ मेषसंक्रांतितिथ्यानयनं प्रथमाध्याये प्रोक्तमेव ॥ अथाहर्गणानयनम् ॥ मेषसं

क्रमदिनाद्गतमासास्त्रिंशता विनिहितादिनियुक्ताः ॥ स्वाब्धितर्कलव ६४ वासरहीना जायते दिनगणोब्दपपूर्वैः ॥ १ ॥ अथ मध्यमार्कानयनम् ॥ द्युगणास्त्रिंशता ३० भक्तो मासाः शेषं दिनानि च ॥ तत्रत्यग्रहसंयोगः क्षेपयुग्मध्यमो रविः ॥ १ ॥ सूर्ये रुद्रा ११ भ २७ कुबाणा ५१ नवाग्नी ३९ क्षेपको मतः ॥ रेखास्वदेशांतरयोजनानि निजांघ्रि ९ हीनानि विलितिकास्स्युः ॥ देशांतरस्याथ रवावृणं प्राक् पश्चाद्धनम्मध्यरविस्स्वदेशे॥एकान्ते मध्यमार्कश्च त्रैक्यार्द्धे स्थापयेद्बुधः द्वौ २ मेघाः १७खयमाः २० सूर्य्य

| १४८९ | १५८९ | १५२४ | १५४९ | १५६९ | १५८४ | १६०९ | १६२४ | १६४९ | १६६९ | १६७९ | १७०९ | १७१९ | १७४९ | १७७९ | १७८९ | १८०९ | १८१९ | १८४९ | १८६९ | शाकांकः. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ३ | ० | ४ | २ | ६ | ३ | ० | ४ | २ | ८ | ३ | ० | ४ | १ | ६ | ३ | ० | ४ | १ | वारांकः. |
| २७ | ३७ | ४८ | ५८ | ९ | १९ | ३० | ४० | ५१ | १ | १२ | २२ | ३३ | ४३ | ५४ | ४ | १५ | २५ | ३६ | ४६ | घट्यंकः. |
| १८ | ४८ | १९ | ४९ | १९ | ५० | २० | ५१ | २१ | ५२ | २२ | ५३ | २३ | ५४ | २४ | ५५ | २५ | ५६ | २६ | ५६ | पलांकः. |
| ४ | ३२ | ० | २८ | ५६ | २४ | ५२ | २० | ४८ | १६ | ४४ | १२ | ४० | ८ | १३ | ४ | २१ | ० | २८ | ५६ | विपलाः. |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | शेषवर्षांकाः. |
| १ | २ | ३ | ५ | ६ | ० | १ | ३ | ४ | ५ | ६ | १ | २ | ३ | ४ | ६ | ० | १ | २ | ४ | वारः. |
| १५ | ३१ | ४६ | २ | १७ | ३३ | ४८ | ४ | १९ | ३५ | ५० | ६ | २१ | ३७ | ५२ | ८ | २३ | ३९ | ५४ | १० | घटी. |
| ३१ | ३ | ३४ | ६ | ३७ | ९ | ४० | १२ | ४३ | १५ | ४६ | १८ | ४९ | २१ | ५२ | २४ | ५५ | २७ | ५८ | ३० | पलं. |
| ३१ | २ | ३४ | ५ | ३७ | ८ | ४० | ११ | ४२ | १४ | ४५ | १६ | ४८ | १९ | ५१ | २२ | ५४ | २५ | ५६ | २८ | विपलं. |

मन्दोच्चं राशिपूर्वकम्॥ ग्रहोनितं च मन्दोच्चं मंदकेन्द्रं भवेदिह॥

सावनमासेराश्यंशकलाविकलाद्यागतिः।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | मा० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | रा. |
| २९ | २९ | २८ | २८ | २७ | २७ | २६ | २६ | २५ | २५ | २५ | २४ | अं. |
| ३४ | ८ | ४२ | १६ | ५० | २४ | ५८ | ३२ | ६ | ४० | १४ | ४८ | क. |
| ५ | १० | ३५ | २० | २५ | ३० | ३५ | ४० | ४९ | ५० | ५५ | ०० | वि. |

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ |
| ५९ | ५८ | ५७ | ५६ | ५५ | ५४ | ५३ | ५२ | ५२ | ५१ | ५० | ४९ | ४८ | ४७ | ४६ | ४५ | ४४ | ४३ | ४२ | ४१ | ४० | ४० | ३९ | ३८ | ३७ | ३६ | ३५ | ३४ | ३४ | ३३ |
| ८ | १६ | २४ | ३२ | ४० | ४९ | ५७ | ५ | १३ | २१ | २९ | ३८ | ४६ | ५४ | २ | १० | १८ | २७ | ३५ | ४३ | ५१ | ५९ | ७ | १६ | २४ | ३२ | ४० | ४८ | ५६ | ५ |

सावनदिनैरवेर्मध्यमाराश्याद्यागतिः॥

त्रिभादल्पं भुजः केंद्रं रसेषूनं त्रिभाधिकम् ॥ षड्भाधिकं षडूनं स्याच्चक्राच्छोध्यन्नवाधिकम् ॥ भुजांशमितिकोष्ठस्थम्फलमंश

बुधे ॥ कलहो वायुपीडा स्याद्भृत्यैस्सह धनक्षयः ॥ अपवादो मनस्तापो शनौ बुधदशां गते ॥ २ ॥ सुवर्णपट्टकूलादिलाभः कर्पूरसम्भवः ॥ सुहृत्समागमश्चैव बुधस्यान्तर्गते गुरौ ॥ ३ ॥ बुद्धिनाशो मनस्तापस्स्वल्पलाभो धनव्ययः ॥ सुहृद्भूपतिवैरञ्च राहौ बुधदशां गते ॥ ४ ॥ स्त्रीपक्षात्स्वल्पलाभस्स्याद्राज्ञो लाभो महान्भवेत् ॥ श्वेतवस्त्वंतरप्राप्तिर्बुधस्यांतर्गते भृगौ ॥ ५ ॥ सौख्यं स्वजनबंधूनां मित्रपुत्रादिसंगमः॥वैरिनाशो जयप्राप्तिः सूर्ये सौम्यदशां गते॥६॥रक्तपित्तादिपीडा स्यान्नैर्बल्यं स्वशरीरके ॥ स्त्रीयोगे कलहश्चैव चंद्रे सौम्यदशां गते ॥ ७ ॥ शिरोव्यथाथ शूलं स्यात्पीडा स्यात्तु धनक्षयः ॥ विग्रहः स्वसुताद्यैश्च भौमे बुधदशां गते ॥ ॥ ८ ॥ इति बुधः ॥ कुटुम्बकलहो मित्रैर्विरोधो धनसंहतिः ॥ नृपचोरभयं चैव स्वदशांतर्गते शनौ ॥ १ ॥ आरोग्यता महाँल्लाभो महद्भिः सह संगमः ॥ द्विजदेवगुरौ भक्तिः शनेरंतर्गते गुरौ ॥ २ ॥ चोरवैरिनृपाद्वापि धनस्योदरपीडनम् ॥ दुःखं करोति मांद्यञ्च शनेरंतर्गतस्तमः ॥ ३ ॥ वैरिभ्यो विजयश्चैव भृत्येभ्योपि धनागमः ॥ स्त्रीसौख्यं मित्रसाफल्यं शुक्रे शनिदशां गते ॥ ४ ॥ कुटुम्बकलहश्चैव धनधान्यस्य च व्ययः ॥ ईषन्मनसि चिंता स्यात्सूर्ये शनिदशां गते ॥ ५ ॥ चतुष्पदादिलाभः स्यादरिनाशो नृपाद्भयम् ॥ स्त्रीसुखं दुःखनाशश्च चंद्रे शनिदशां गते ॥ ६ ॥ रक्तपित्तप्रकोपस्स्यात् कलहो बांधवैस्सह ॥ धनधान्यव्ययश्चैव शनेरंतर्गते कुजे ॥ ७ ॥ कलहो मित्रपुत्राद्यैर्विरोधश्चैव सर्वदा ॥ शत्रुभ्यो भयमत्युग्रं बुधे मंददशां गते ॥ इति शनिः ॥ कार्यसिद्धिर्नृपान्मानधनधान्यादिसंपदः ॥ प्रमेहभवपीडा स्यात्स्वदशांतर्गते गुरौ ॥ १ ॥ दद्रुकंडूप्रकोपश्च रक्तकोपः प्रमेहतः ॥ बलहानिस्त्वर्थनाशो राहौ विज्यदशां गते ॥ २ ॥ शुक्रस्यापि फलं राहुफलवद्गुरुवद्रवेः ॥ स्त्रीसुखं संततेस्सौख्यं गुरोरन्तर्गते विधौ ॥ ३ ॥ चिंतितस्य च कार्यस्य सिद्धिः स्यात्तु धनागमः शरीरारोग्यकश्चैव भौमे जीवदशां गते ॥ ४ ॥ बुधस्यापि फलं भौमफलवच्चाथ वायुभीः ॥ बुद्धिनाशो व्ययश्चैव शनौ जीवदशां गते ॥ ५ ॥ इति गुरुः ॥ परदेशे गमश्चैव चोरेभ्योपि महद्भयम् ॥ मानहानिः शस्त्रपीडा राहौ निजदशां गते ॥ १ ॥ अर्थलाभः कार्यसिद्धिः शुक्रे राहुदशाङ्गते ॥ ज्वरातिसाररोगश्च राहोरन्तर्गते रवौ ॥ २ ॥ चंद्रस्य राहुवच्चार्द्धरविवद्भौमजम्फलम् ॥ बुधस्य शुक्रवच्चार्द्धं राहुवच्च शनेः स्मृतम् ॥ ३ ॥ समौ लाभव्ययौ चैव मित्रशत्रुसमागमः ॥ मिश्रं चैव

फलं वाच्यं गुरौ राहुदशां गते ॥ ४ ॥ इति राहुः ॥ स्त्रीसौख्यं नृपमानः स्याद्रौप्याश्वादिसमागमः श्वेतवस्तोस्तथारोग्यं स्वदशान्तर्गते भृगौ ॥ १ ॥ यत्नेन कार्यसिद्धिस्स्याद्राजसन्मानमेव च ॥ महती प्रीतिरारोग्यं रवौ शुक्रदशां गते ॥ २ ॥ स्त्रीसुखंश्वेतवस्तूनां लाभं वै राजमानताम् ॥ करोति शत्रुनाशञ्च चंद्रे शुक्रदशां गते ॥ ३ ॥ क्वचिद्दुःखं क्वचित्सौख्यं क्वचिल्लाभं क्वचिद्यशः ॥ प्राप्नोति पुरुषो नित्यं चंद्रे शुक्रदशां गते ॥ ४ ॥ इति वा पाठः ॥ संतापः कलहश्चैव पित्तकोपः समागमः ॥ शत्रूणां रक्तकोपश्च भौमे शुक्रदशां गते ॥ ५ ॥ कंडूरक्तातिपित्तञ्च विहारो हेमसंभवः ॥ धनधान्यव्ययश्चैव शुक्रस्यांतर्गते बुधे ॥ ६ ॥ अकस्माच्च धनप्राप्तिः परेभ्यो हीनवस्तुनः ॥ लाभः स्याद्भार्गवस्यान्तर्दशा यदि शनेस्तदा ॥ ७ ॥ राज्यप्राप्तिर्द्रव्यलाभः स्वल्पायासेन कर्म च ॥ सफलञ्चभवेच्छुक्रदशामध्ये गुरोर्यदा ॥ ८ ॥ स्वजनैश्च विरोधस्स्याद्व्ययश्चोदरसंभवः ॥ शूलरोगो व्ययश्चैव राहौ शुक्रदशां गते ॥ ९ ॥ इति शुक्रः ॥ इति राममतदशायामन्तर्दशा समाप्ता ॥ अथोक्तानान्दशाकदम्बानां विषयविभागो निरूप्यते ॥ ग्रन्थान्तरे ॥ बली यदा हीनबलो ग्रहः स्यात्तदा तु हीनांशदशा विधेया ॥ सर्वग्रहालोकनलब्धवीर्य्ये तनौ तसीराख्यदशा प्रदिष्टा ॥ १ ॥ लग्नस्य सबलत्वे हि भावपूर्वा तु सा मता ॥ कालहोरादशा कार्या सवीर्येब्दे च तत्पतौ ॥ २ ॥ हद्दाख्या वर्षलग्नस्य हद्देशे बलसंयुते ॥ अब्दचंद्रबलोपेते कुर्यान्नैसर्गिकी दशा ॥ ३ ॥ सवीर्यजन्मराशीशे मुद्दा गौरीमतेन तु ॥ बलसाम्ये तु सर्वेषां तसीराख्या प्रकीर्तिता ॥ ४ ॥ सवीर्ये चंद्रराशीशे बलरामाह्वया मता ॥ सर्वे नभोगाः प्रेक्षन्ते तनुभावदशां तदा ॥ ५ ॥ तत्र वर्षे सर्वापेक्षया हीनांशग्रहस्य सबलत्वे तदा हीनांशदशा विधेया ॥ १ ॥ सर्वग्रहैर्दृष्टे लग्ने तसीरदशा ॥ २ ॥ लग्नस्य सबलत्वे भावतसीरदशा ॥ ३ ॥ वर्षप्रवेशसमये कालहोरेशस्य सबलत्वे कालहोरादशा ॥४॥ वर्षप्रवेशलग्नहद्देश्वरस्य सबलत्वे हद्दा दशा ॥ ५ ॥ चंद्रस्य सबलत्वे निसर्गदशा ॥ ६ ॥ वर्षे जन्मराशीश्वरस्य सबलत्वे गौरीमता दशा मुद्दाख्या ॥ ७ ॥ वर्षे चंद्रराशीश्वरस्य सबलत्वे बलराममता दशा विधेया ॥ ८ ॥ सर्वेषाम्बलसाम्ये बलापेक्षया रहिता तसीरदशा कर्तव्या ॥ ९ ॥ लग्नोपरि सर्वग्रहाणां दृष्ट्यभावे भावदशा कर्तव्येति तत्त्वम् ॥ १० ॥ अथ दशाफले विशेषः ॥ तत्र पूर्वम्पूर्णबलस्य रवेर्दशाफले गजाश्वलाभादिफलमुक्तम् ॥ पूर्णबलरविदशा तु सर्वेषां वर्षप्रवेशे कदापि न संभवतीति नियमो न दृश्यते ॥ परन्तु तेषां गजाश्वलाभादिकन्न दृश्यते

दिक्के रवेः ॥ कोष्ठान्तरहताच्छेषात् षष्टिलब्धकलादियुक् ॥ स्पष्टंमंदफलं केंद्रे तुलाजाद्ये ऋणमन्यनम् ॥ मध्यमार्के स्फुटा

| कष्ट | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मा. | ० | ० | ० | ० | ० | ० | ४ | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | १ | १ | १ | १ |
| प. | २ | ४ | ७ | ९ | ११ | १३ | १६ | १८ | २० | २३ | २५ | २७ | १९ | ३२ | ३४ | ३८ | ३६ | ४१ | ४३ | ४५ | ४७ | ४९ | ५१ | ५३ | ५५ | ५७ | ० | २ | ४ | ३ |
|  | २० | ४० | ० | २८ | २७ | ५६ | १५ | ३९ | ५० | ७ | २३ | ३८ | ५५ | १० | २४ | २७ | ४९ | ५ | १२ | २२ | ३१ | ३४ | ५७ | ५४ | ५८ | ५९ | ० | २ | ३ | ३ |
| अं. | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ |
|  | २० | २० | १९ | १८ | १९ | १९ | १८ | १७ | १७ | १६ | १६ | १६ | १५ | १४ | १३ | १२ | ११ | १० | ९ | ९ | ८ | ७ | ४ | १ | १ | ३ | ० | ० | ० | ० |
| ग. | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | १ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | १ | १ |
| फ. | १८ | १८ | १८ | १७ | १७ | १७ | १७ | १६ | १६ | १६ | १४ | १४ | १३ | १३ | १२ | ११ | ११ | ९ | ९ | ९ | ८ | ६ | ५ | ३ | ३ | ३ | १ | ० | २७ | ५६ |
| का. | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ | ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५४ | ५५ | ५६ | ५७ | ५८ | ५९ | ६० |
| मा. | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| फ. | ८ | ४ | ११ | १३ | १५ | १७ | १९ | २१ | २४ | २६ | २८ | २९ | ३१ | ३३ | ३४ | ३६ | ३७ | ३८ | ४० | ४२ | ४३ | ४४ | ४६ | ४७ | ४८ | ४९ | ५१ | १२ | ५१ | ५३ |
|  | ३ | ५७ | ५२ | ४७ | ४० | ३३ | २० | ७ | ५५ | ३२ | ३ | ३६ | ३३ | ५८ | २ | ७ | २५ | ६ | २० | ३ | ३६ | ४५ | ० | २१ | ३८ | ४२ | ३ | १२ | १३ | ३५ |
| अं. | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
|  | ५४ | ५५ | ५५ | ५३ | ५३ | ४५ | ४९ | ४८ | ४९ | ४४ | ४३ | ३६ | ३५ | ३४ | ३२ | ३१ | ३४ | ३३ | २९ | २५ | २१ | १७ | ११ | ७ | ६ | ६ | ६ | ५ | ५ | ५ |
| ग. | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| फ. | ५५ | ५३ | ५१ | ५३ | ४९ | ४७ | ४५ | ४३ | ४२ | ४८ | ३८ | ३६ | ३४ | ३२ | ३० | २९ | २८ | २८ | २६ | २६ | १८ | १६ | १४ | १२ | १२ | १३ | १३ | १२ | ११ | ११ |
| का. | ६१ | ६२ | ६३ | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० | ७१ | ७२ | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ७९ | ८० | ८१ | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० |
| मा. | १ | १ | १ | १ | १ | १ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | ० | ० | ० | ० | ० |
| फ. | ५४ | ५५ | ५५ | ५६ | ५७ | ५० | ३९ | ० | २ | २ | २ | २४ | ४ | ५ | ६ | ६ | ७ | ७ | ८ | ८ | ८ | ९ | ९ | ९ | १० | १० | १० | १० | १० | ११ |
|  | २० | ३३ | ३६ | ३० | ३२ | ० | २७ | २२ | २४ | ५२ | ५१ | १४ | १७ | ३५ | ५१ | ४५ | १७ | ४५ | १२ | ३५ | ५३ | १८ | ३६ | ५१ | ३ | २१ | १७ | ३१ | १३ | २७ |
| अं. | १ | १ | ० | ० | ० | २ | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
|  | ४ | १ | ५८ | ५९ | ५४ | ५६ | ५६ | ५० | ४७ | ४८ | ४२ | ४० | ३८ | ३६ | ३४ | ३२ | २८ | २७ | २३ | २० | १८ | १५ | १२ | १० | ८ | ६ | ४ | १ | ० | ० |
| ग. | १ | १ | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| फ. | ४ | ० | ५८ | ५७ | ५६ | ५४ | ५० | ४९ | ४६ | ४३ | ४१ | ३९ | २७ | ३६ | ३१ | ३१ | २८ | २० | २३ | २२ | १९ | १८ | १५ | ११ | १० | ८ | ६ | ४ | १ | ० |

र्कस्स्यात् कोष्ठस्थस्य गतेः फलम् ॥ स्वर्णं कर्कमृगे केन्द्रे मध्यभुक्तौ स्फुटागतिः ॥ स्यादब्दपालकालीनः स्पष्टार्को गतिसंयुतः ॥ अथ त्रैक्यानयनम् ॥ द्विघ्नसायनमध्यार्कदोर्ज्या षड्भैर्विभाजिता ॥ कालाद्यं स्वमृणस्सूर्ये समौजपदगे क्रियात् ॥ त्रित्रिभिर्भैःपदं चौजसमं स्यादुदयान्तरे ॥ यद्वा ज्यां विनैवो दयान्तरानयनम् ॥ सायनार्कपदे गम्यगताल्पांशा विवर्जिताः ॥ द्विघ्नेन स्वशरांशेन विकलाश्चो दयान्तरे ॥ अर्कमंदफलं खेन्दु १० गुणं स्याद्विकलात्मकम् ॥ भुजान्तरं रवौस्वर्णं म्मध्यमे फलवत्स्मृतम् ॥ यदायनांशाढचरविर्मुखे स्याद्घटस्य मेषस्य च तत्र शंकोः ॥ सूर्याङ्गुलस्य द्युपलेप्रमाक्षप्रभास्थिता दिग्गज ८ दिग्वि १०

निघ्नी ॥ अंत्यास्त्रिहृतस्युश्चरखण्डकानि क्रमेण सूर्यादयनांशयुक्तात् ॥ भुजर्क्षसंख्यामितयातखण्डयुतिस्वभोग्या हतशे

षकस्य ॥ ४ ॥ खरामभागेन युतश्चरार्द्धश्चरार्द्धतुल्या विकलारवेस्तु ॥ चरान्तरं स्यादुदये तुलाजषड्के धनर्णो विपरीतमस्ति ॥ ५ ॥ त्रयाणां वीर्य्यमार्गेण योगस्त्रैक्य उदाहृतः ॥ अथवा सुगमोपायस्त्रैक्यार्थेविनिरूप्यते ॥ ६ ॥ सायनस्फुटसूर्य्यस्य भुक्तांशास्स्वोदयैर्हताः ॥ त्रिंशद्भक्ता रवेर्भुक्तम्मेषात्पृष्ठोदयैर्युतम् ॥ ७ ॥ षष्टि भक्तन्नाडिकादि अथ मध्यमभास्करः ॥ सायनोस्यांशषड्भागो नाडिकादि फलम्भवेत् ॥ ८ ॥ उभयोरन्तरन्त्रैक्यसंज्ञकं स्यात्कलादिकम् ॥ मध्यमार्कघटीभ्यश्चेद्रवेर्भुक्तघटीगणः ॥ ९ ॥ हीनस्त्रैक्यमृणं सूर्य्ये विज्ञेयं धनमन्यथा ॥ संस्कृतस्तेन मध्यार्कः स्याद्रविस्त्रैक्यसंस्कृतः ॥ १० ॥ अस्य प्रस्फुटता प्राग्वत्सूक्ष्मोर्कस्स्यात्परिस्फुटः ॥ उक्तरीत्या स्फुटः कार्यो जन्मार्कोऽपूर्व एव हि ॥ ११ ॥ प्रतिवर्षे स एवार्कस्स्फुटस्सगतिको भवेत् ॥ एकैकराशिसहितो वर्षार्कमासकालजः ॥ १२ ॥ स्फुटार्काः स्युर्द्वितीयादिमासेष्वर्कास्तु मासजाः ॥ एकैकअंशसहितास्स्युर्दिने वेशभास्कराः ॥ १३ ॥ अथ स्वाभीष्टमासस्य संख्यारूपाविवर्जिता ॥ तत्तुल्यमासगतिजकोष्ठस्थफलसंयुतः ॥ १४ ॥ जन्मार्को मध्यमोभीष्टमासपार्श्वे भवेद्रविः ॥ निरेका माससंख्या च खराम ३० गुणितायुता ॥ १५ ॥ स्वजन्माहर्गणेभीष्टार्कसंबंधी भवेद्गणः ॥ गतित्रैक्ययुताऽर्कस्य कर्तव्या स्फुटतोक्तवत् ॥ १६ ॥ ततस्स्वाभीष्टसूर्य्यस्य मासार्केनांतरं चरेत् ॥ कालाद्यं स्पष्टगत्याप्तं स्याद्दिनादि फलं स्फुटम् ॥ १७ ॥ स्वाभीष्टसूर्ये मासार्कादधिके तद्दणे स्मृतम् ॥ हीने धनं चाब्दपस्य वारादिस्तेन संस्कृतः ॥ १८ ॥ मासवेशे स्फुटा नाड्यस्तद्वारार्थमहर्गणः ॥ संस्कृताब्दपवाराद्यस्सप्ततष्टोर्कतस्स्मृतः ॥ १९ ॥ वर्तमानो वासरश्च सूक्ष्मं स्यान्मासवेशनम् ॥ श्रीमद्गुरूणां वचनैः प्रकारान्तरमुच्यते ॥ २० ॥ मासप्रवेशकालार्कद्युपिण्डोत्थरवेः कलाः ॥ न्यूनाधिकास्स्वगत्याप्ता एषा जातास्तु नाडिकाः ॥ २१ ॥ योज्याः शोध्या वर्षपालनाडीषु त्रैक्यसंस्कृताः ॥ मासवेशे स्फुटा नाड्यो देशान्तरसुसंस्कृताः ॥ २२ ॥ त्रैक्यमब्दपनाडीषु सूर्याद्व्यस्तम्प्रकल्पयेत् ॥ देशांतरस्य संस्कारं कुर्याद्व्यस्तम्पलेषु च ॥ २३ ॥ अथ त्रैक्यदेशान्तरादिसंस्काररहितेनाहर्गणोत्थस्फुटरविणाऽतरं कर्तव्यंत्रैक्यसंस्कारो नाडिकासु कर्तव्यः ॥ मासप्रवेशवारार्थं जन्माहर्गणोत्थं प्रतिमासं त्रिंशात्रिंशयुतः कर्तव्यः ॥ एवमुभयप्रकारेणापि मासप्रवेशवारा

दिकं सममेव भवति ॥ अथ संख्यारूपविवर्जिता ॥ तत्तुल्यं दिनकोष्ठस्थफलेन सहितो रविः ॥ मासप्रवेशकालीनो दिनपार्श्वे भवेद्रविः ॥ तस्मादुक्तप्रकारेण ध्रुवेशं साधयेद्बुध इति ॥ मुक्तावल्याश्च ॥ एवमेव दिवसप्रवृत्तयश्चातिसूक्ष्मफलबोधहेतवे ॥ जन्मभास्करकलादिसाम्यतः प्रस्फुटाः स्युरिति मे गुरोर्मतम् ॥ १ ॥ खेटभावसहमाद्यनुक्तमच्चिंतनीयमनुनापरं बुधैः ॥ त्वग्निकोष्ठुनशतोत्र दक्षजारासमं मतद्दशाक्रमोथवेति ॥ २ ॥ अथार्के ऐक्यदेशान्तरसंख्याकारणमुच्यते ॥ तत्र स्फुटसावनस्य चलत्वादहर्गणो मध्यमसावनेनानीतः ॥ तत्र रविमध्यमगते तुल्यादिभिस्सहिता नक्षत्राः षष्टिघटिका मध्यमार्कसावनम् ॥ इदम्मध्यमगतेस्सर्वदा तुल्यत्वात्स्थिरम् ॥ स्फुटसावनन्त्वेकस्मिन्दिने नक्षत्रं रविश्च समकालमुदितः ॥ पुनस्तस्मात्कालान्नक्षत्रघटीनां षष्ट्या नक्षत्रमुदितम् ॥ रविसंक्रांतिवृत्ते स्फुटगत्या पूर्वतोगतः ॥ अतः स्वोदयभुक्तिघातलाभाष्टभूलब्धसमासुभिरनंतरमुदितः ॥ एभिरसुभिस्सहिता नक्षत्रघटिका षष्टिः ६० रवेस्स्फुटसावनम्भवति ॥ तत्प्रत्यहञ्चान्यत्वात्प्रतिमासं राशिउदयान्यत्वाच्चलमतो मध्यमसावनेनाहर्गणः कृतः ॥ अपेक्षितस्तु स्फुटसावनेनातः स्फुटमध्यमाहर्गणयोरन्तरसाधनार्थमुदयान्तरसंस्कारः कृतः ॥ अथ स्फुटसावनाहर्गणजो ग्रहो दशशिरःपुरिमध्यमभास्करेक्षितिजसन्निधिगे सति मध्यम इतिसिद्धान्तोक्तलङ्कायाम्मध्यमार्कोदयकालिको जातः ॥ अपेक्षितस्तु स्फुटार्कोदयकाले अतो भुजांतरसंस्कारेण स्फुटार्कोदयकालिको जातः ॥ पुनर्याम्योत्तरान्तरेण चरान्तरसंस्कारसंज्ञेन स्वपुराक्षांशासममध्यरेखानगरोदयकालिकोजातः ॥ पुनः पूर्वापरांतरेण दशांतरसंस्काराख्येन स्वपुरे स्पष्टार्कोदयकालिको भवतीति तत्त्वम् ॥ अत्रोदाहरणम् ॥ तत्र श्रीमद्विक्रमादित्यराज्याद्गताब्देषु १६७३ तथा श्रीशालिवाहनराज्याद्गतवर्षेषु १५३८ श्रावणकृष्णपक्षतृतीयायां शनिवासरे ११ । १० धनिष्ठायां ४५ । ३३ प्रीतियोगे ३३ । ४४ सूर्योदयाद्गतघटीपलेषु ३४ । ३२ धनुर्लग्नोदये श्रीमत्सकलभूमिपतिसेवितचरणारविंदानां सकलभूमण्डलाखण्डलानां धर्ममार्गप्रवर्तकधुरीणानां श्रीसाहसूजामहाप्रभूणां जनिरभूदजमेरौ ॥ तत्र पलभा ५ । ५० देशांतरं १० प्रत्यक्चरखण्डानि ५८ । ४७ । १९ शाको नवाश्विविध्यून इति प्रोक्तविधिना मेषसङ्क्रान्तितिथिः २० वैशाखकृष्णपञ्चमी जाता ॥ अथाब्दपानयनम् ॥ तत्र स्वाभीष्टशकः १५३ पुस्तकस्थसमीपशकेन १५ । २१ रहितशेषं ९ अथशेषं ९ कोष्ठकांकाः ४ । १९ । ४३ । ४२ । शकः १५२८ अधश्शकः । ००४८ । १९ । ०० युतः ५ । ०८ । ०२ । ४२ जातोब्दपो वारादिः अथाहर्गणानयनम् ॥ तत्र मेषसङ्क्रा

न्तिर्वैशाखकृष्णपंचम्यामस्ति ५ ततो गणनया आषाढकृष्णपञ्चमीपर्य्यन्तङ्कतमासः २ त्रिंशद्गुणः ६० आषाढकृष्णषष्ठीतः श्रावणकृष्णतृतीयापर्य्यन्तङ्कतदिवसै २७ र्युक्त ८७ स्वाब्धितर्कां ६४ शेन १ हीनः ८६ जातः श्रावणकृष्णतृतीयायामहर्गणः ॥ ८६ समतष्टः २ अब्दपालवारतो गुरुवाराद्गणनया शुक्रवारो गतः वर्तमानः शनिवारः अथ मध्यमार्कानयनम् ॥ अहर्गणः ८६ त्रिंशद्भक्तो लब्धा मासाः २ शेषं २६ दिनानि ॥ अथ मासगति ० १ । १९ । ० ८ । १० दिन २६ गत्यो ०० । २५ । ३७ । ३२ योंगः ० २ । २४ । ४५ । ४२ राश्यादिक्षेपक ११ । २७ । ५१ । ३९ युतः ० २ । २२ । ३७ । २१ जातो राश्यादिर्मध्यमार्कोऽब्दमान्तकालीनः रेखातः पश्चिमदेशत्वाद्देशान्तरविकला १० युतो जातो देशान्तरसंस्कृतोर्कः ॥ अथ गतैष्यदिवसायेनेत्यादिनोक्तप्रकारेणाब्देशघटिका ८ । २ । ४२ इष्टघटिका ३४ । ३२ अनयोरन्तरेण २६ । २९ । १८ ॥ सूर्य्यमध्यगतिः ५९ । ० ८ गुणिताः षष्टिभक्ता लब्धं कलादिफलम् २६ । ०६ मध्यमार्कै ० २ । २२ । ३७ । ३१ धनञातो जन्मकालीनो मध्यमार्कः ० २ । २३ । ३ । ३७ ॥ अथोदयान्तरसाधनम् ॥ यत्र मध्यमोर्कः ० २ । २३ । ३ । ३७ पूर्वोक्तप्रकारोणनीतायनांशो १६ । ४५ । १८ युतः ० ३ । ० ९ । ४८ । ५५ द्विघ्नः ० १६ । १९ । ३७ । ५० षड्भाधिकत्वादयं षड्भूनो जातो भुजः ०० । १९ । ३७ । ५० ॥ अथास्य ज्या कर्तव्या ॥ तत्र ज्यानयनप्रकारः सिद्धान्तशिरोमणौ ॥ रूपाश्विनौ २१ विंशति २० रङ्कचंद्रा १९ अत्यष्टि १८ तिथ्य १५ र्कं १२ नवेषु ५९ दस्राः ॥ ज्याखण्डकांशान्यमितेर्दशांशस्युर्जातखण्डान्यथ भोग्यनिघ्नाः ॥ शेषांशकाः खेन्दुहृता यदाप्तं तद्यातखण्डैक्ययुतं भवेज्ज्या ॥ ज्याखण्डयोग उक्तः सिद्धान्तशिरोमणौ ॥ स्वर्गाः कुवेदाः खरसाः सप्तशैला यमाङ्कक्राः ॥ वेदाशास्त्रिशिवास्सर्परुद्राः खार्कास्तु पिण्डकाः ॥ पूर्वानीतभुजांशाः १९ । ३७ ५० दशाप्तलब्धं गतखण्डं १ शेषांशाः ९ । ३७ । ५० एष्यखण्ड २० गुणाः १९२ । ३६ । ४० दशाप्ताः १९ । १५ । ४० जातं खण्डैक्य २१ युताः ४० । १५ । ४० जाता ज्या एषा षड्भै २७६ र्भक्ता लब्धकलाद्यमुदयांतरं० ॥ १८ ॥ अथ सुगमोपायेनोदयान्तरसाधनम् ॥ तत्र सायनार्कस्य द्वितीयपदे अल्पा गतांशाः १९ । ४८ । ५५ एषां पञ्चमांशः १ द्विघ्नः २ अंशेषु हीनः ७ । ४८ । ५५ अर्द्धाभ्यधिकत्वादुपरि ७ एकयतः ८ जातमुदयांतरं पूर्वागतसमम् ॥ अथ सायनार्कस्य समपदस्थत्वादुदयान्तरं कलादि० । ८ व्यर्कै धनं अथ भुजान्तरसाधनम् ॥

तत्र मध्यमार्कः २ । २३ । ३ । ३७ स्वमंदोच्चे २ । १७ । २० हीनः ११ । २४ । १६ । २३ जातं मंदकेन्द्रम् ॥ इदं नवाधिकमतश्चक्राच्छुद्धम् ० । ५ । ४२ । ३७ । जातो भुजः भुजांशाधस्थं फलमंशादि ० । ११ । ३७ शेषं ४३ । ३७ । अग्रिमकोष्ठान्तरेण २ । १९ गुणितं षष्टिभक्तं लब्धं कलादि १ । ४१ ॥ अनेन कोष्ठस्थफलम् ० । ११ । ३२ । युतं ० । १३ । १८ जातमंशाद्यं सूर्य्यमंदफलम् ॥ इदं मध्यमार्के २ । २३ । ३७ तुलादिकेंद्रत्वाद्दणञ्जातः स्पष्टोर्कः २ । २२ । ५० । १९ स्थूलः ॥ अथ कोष्ठकस्थं गतिफलं २ । १७ मकरादिकेंद्रत्वान्मध्यमगतौ ५९ । ८ । ऋणं ५६ । ५० जाता स्पष्टा गतिः कलाद्या सूर्यस्य ॥ अथ मंदफलम् ०० । १३ । १८ ॥ खेंदु १० गुणं षष्ट्योपर्य्युपरियुतं जातं रवेर्विकलात्मकं भुजांतरं । ० २ । १३ ॥ मंदफलस्य ऋणत्वादृणम् ॥ अथ चरांतरसाधनम् ॥ तत्र स्पष्टोर्कः ०२ । २२ । ५० । १९ सायनः ० ३ । ०९ । ३५ । ३७ अयं त्र्यधिकत्वाद्धार्धा ६ दूनो ० २ । २० । २४ । २३ जातो भुजो भुजर्क्षसंख्या २ मिते चरखण्डे ५८ । ४७ गते अनयोर्योगः १०५ शेषं २० । २४ । २३ भोग्यखण्ड १९ गुणं ३८७ । ४३ । १७ त्रिंशद्भक्तं १२ । ५५ । २६ गतखण्डयोगे १०५ युतं ११७ । ५५ । २६ जातश्चरार्द्धं पलात्मकम् एता एव विकला रवेश्चरांतरं जातम् ॥ एतत्षष्टिभक्तं जातं कलात्मकं चरांतरम् ०१।५८ इदं सायनार्कस्य मेषादिषड्भस्थितत्वादृणम् ॥ अथवा योगे युतिस्स्यात्क्षययोस्स्वयोर्वा धनर्णयोरंतरमेव योग इति बीजोक्तमार्गेण त्रयाणामैक्यञ्जातं त्र्यैक्यं ० १ । ५३ ऋणशेषत्वादर्कऋणसंज्ञकं जातम् ॥ अथ सुगमोपायेन त्रैक्यानयनम् ॥ तत्र स्पष्टोर्कः० २ । २२ । ५० । १९ सायनः० ३ । ०९ । ६५ । ३७ अस्य भुक्तांशाः० ९ ।३५।३७ कर्कोदयेन ३४२ गुणिताः षष्ट्योपर्युपरियुताः ३२८१ त्रिंशद्भक्ता लब्धं रवेर्भुक्तं पलात्मकम् १०९ ॥ अथ मेषादिमिथुनपर्यन्तराशीनामुदयपलैक्येन ७७६ युतं ८८५ षष्टिभक्तं जातं रवेर्मेषाद्भुक्तं घट्यादि १४ ।४५॥ अथ मध्यमार्कः०२। २३ । ०३ । ३७ सायनः ०३। ०९ ।.४८ । ५५ अस्यांशाः ९९ । ४८ । ५५ षड्भक्ता लब्धं घट्यादि १६ । ३८ । उभयोरन्तरम् ०१ । ५३ जातं त्रैक्यं पूर्वागततुल्यम् ॥ अथ मध्यमार्कघटितो रवेर्भुक्तघटिकाहीना अवत्रैक्यमृणात्मकञ्जातम् ॥ अथ मध्यमार्के ०२ । २३ । ०३ । ३७ त्र्यैक्यं १ । ५३ ऋणं जातत्रैक्यसंस्कृतो मध्यमार्कः २ । २३ । १ । ४५ ॥ अस्मादानीतं पूर्ववन्मंदफलं ० । १३ । १३ । त्रैक्यसंस्कृतमध्यमार्के २ । २३ । १ । ४५ ऋणं जातत्रैक्यसंस्कृतः स्पष्टोर्कः सूक्ष्मतरः २ । २२ । ४८ । ३२ ततश्शाके ॥ १५७० आषाढसुदि १२ गुरौ

उदयाद्गतघटीपलेषु ५१ । १५ श्रीमता महाप्रभूणां सौरमानेन जन्मतस्त्रयस्त्रिंशत्तमोब्द ३३ प्रवेशो जातः ॥ तत्राब्दपः ३ । २४ । ५१ अहर्गणः ८६ । देशांतरसंस्कृतो मध्यमार्कः २ । २३ । ३ । ४१ मंदकेंद्रं ११ । २४ । १३ । १० अयनांशाः १७ । १४ । ६ मन्दफलं ०१३ । २५ उदयांतरं धनं ९ भुजांतरऋणं ०२ चरांतरं ऋणं १ । ५५ त्रैक्यमृणं १ । ४८ त्रैक्यसंस्कृतो मध्योर्कः २ । २२ । १ । ५५ त्रैक्यसंस्कृतः स्पष्टोर्कः २ । २२ । ४८ । ३२ गतिः स्पष्टा ५६ । ५७ । अत्र जन्मार्कवर्षार्कयोः साम्यमेव जातमतः प्रतिवर्षप्रवेशं जन्मार्क एव स्पष्टो लिखनीयः अथ द्वितीयमासानयनार्थं स्वाभीष्टमाससंख्या २ रूपो १ ना १ एतत्तुल्यमासगतिकोष्ठकस्थफलम् ० । २९ । ३४ । ५ देशांतरसंस्कृते जन्माहर्गणोत्थमध्यमोर्केंऽदपांतकालीने २ । २२ । ३७ । २१ युतं जातस्स्वाभीष्टमासनिकटे मध्यमोर्कः ३ । २२ ११ । १६ अस्मान्मंदकेंद्रं १० । २५ । ८ । ३४ मंदफलं १ । १५ । २३ । उदयांतरं धनं ० । २५ भुजांतरं ऋणं २२ चरांतरं ऋणं १ । ३ । त्रैक्यमृणं १ । १८ । मध्यमार्कस्त्रैक्यसंस्कृतः ३ । २२ । १० । १८ त्रैक्यसंस्कृतः स्पष्टोर्कः ३ । २० । २४ । ५७ ॥ अथ वर्षप्रवेशकालिकोर्कः २ । २२ । ४८ । ३२ एकराशियुतः ३ । २२ । ४८ । ३२ जातो द्वितियमासार्कः ॥ अथ स्वाभीष्टार्कः ३ । २० । ५४ । ५७ ॥ मासार्क ३ । २२ । ४८ । ३२ योरंतरमंशादि १ । ५३ अस्य कला ११३ । ३५ सवर्णिताः ६८ । १५ सवर्णितार्कगत्या ३४३७ भक्ता लब्धं वारादि ०१ । ५८ । ५८ मासार्कादभीष्टार्कस्य न्यूनत्वाद्धनं अनेन वाराब्दपो ०३ । २४ । ५१ । युतो जातस्संस्कृतोब्दपः ५ । ०२ । ४९ अब्दपवाराघस्था एवं मासप्रवेशघटिका द्वितीयमासप्रवेशस्य २३ । ४९ ॥ अथ मासप्रवेशवारार्थं जन्माहर्गणः ८६ द्वितीयमासप्रवेशादेकात्रिंश ३१ युत ११६ संस्कृताब्दपवार ५ युतः १२१ सप्ततष्टः २ अत्र सूर्य्यवाराद्गणनया वारवर्तमानस्सोमवारो जातः ॥ एवं वर्षप्रवेशदिनात्त्रिंशद्दिननिकटस्थसोमवारेउदयाद्गतघटीपलेषु २३ । ४९ द्वितीयमासप्रवेशो जातः एवमन्यमाससाधनं दिनप्रवेशसाधनं च कर्त्तव्यम् ॥ अथ प्रकारांतरेण मासप्रवेशानयनम् ॥ तत्र ॥ सर्वसंस्काररहितो मध्यमार्कः ३ । २२ । ११ । २६ मंदकेंद्रं १० । २५ । ४ । ३४ मंदफलम् ०१ । १५ । २३ ऋणं स्पष्टोर्कः ०३ २० । ५६ । ०३ अथ मासार्कस्य ०३ । २२ । ४८ । ३२ चान्तरकलाः ०१ । १२ । २९ सूर्यगत्या ५७ । १७ भक्ता लब्धं दिनाद्यम् ० १ । ५७ । ५० अब्दपवारादौ ०३ । ३४ । ५१ धनजातो वारादिः ५ । २२ । ४१ अत्र पूर्वमर्के त्रैक्यं ऋणमस्त्यतः संस्कृताब्दघटीषु २२ ।

४१ त्रैक्यं घट्यादि० १ । १८ धनं ०३ । ५९ ॥ तथा धनं देशांतरं सूर्य्यस्य १० वारादिपलेष ५९ ऋणं ४९ जातो घट्यादिको मासप्रवेश
कालः २३ । ५९ पूर्वानीतसमः अत्रापि मासप्रवेशवारानयनम्पूर्ववत् कर्तव्यम् ॥ मासप्रवेशे अस्मादन्यः सूक्ष्मतरः प्रकारः सोपपत्तिको नास्ति ॥
अथ मासफलानि वर्षतंत्रे ॥ मासप्रवेशकालेपि महाभावांश्च साधयेत् ॥ तत्र मासतनोर्नाथो मुन्थेशो जन्मपस्तथा ॥ त्रिराशिपो दिन
निशो रवीन्दुभपतिस्तथा ॥ अब्दप्रवेशलग्नेश एषां वीर्याधिकस्तनुम् ॥ पश्यन्मासपतिर्ज्ञेयस्ततो वाच्यं शुभाशुभम् ॥ अपरे मास
लग्नेशं मासाधिपतिमूचिरे ॥ दिनेशं दिनलग्नेशं तथा प्रोचुर्विचक्षणाः ॥ मासघस्रेशयोर्वाच्यं फलं वषशवद्बुधः ॥ अत्र विशेषमाह
यादवः ॥ अब्दाङ्गपो जन्मविलग्ननाथः कल्पोथ मासाङ्गपतिर्द्वितीयः ॥ त्रयः पुरोक्ता इति पञ्च मध्ये मासाधिपोब्देशवदत्र कार्यः ॥
अयमर्थः ॥ पञ्चाधिकारिमध्ये जन्मलग्नपस्थाने वर्षलग्नपस्थाप्यः ॥ वर्षलग्नपस्थाने मासलग्नपस्स्थाप्यः ॥ मुंथेशत्रैराशिकेशचंद्रार्कराशिपाः पूर्वत्र
न्मासलग्नतो ज्ञेयाः ॥ एवं पञ्चाधिकारिमध्ये वर्षेशवन्मासपः कार्यः ॥ ताजिकभूषणे ॥ लग्नेश्वरांशाधिपतिर्विलग्ननवांशनाथेन समं सखि
त्वम् ॥ स्नेहाख्यदृष्टिश्च युतिश्च मासे तस्मिञ्छुभं व्यस्ततयान्यथा स्यात् ॥ लग्नेश्वरांशाधिपतिर्विलग्ननवांशनाथेश्वरयोर्बली
यान् ॥ स एव मासेश्वरतां प्रयाति फलं तदीयं किल कीर्तयामि ॥ द्रविणलाभमतीव महोत्सवं नरपतेर्गुरुगौरवमादिशेत् ॥ अधि
कतां यदि मासपतिर्भवेद्दिनकरो न करोति रिपूदयम् ॥ रजतमौक्तिकशुभ्रसदम्बरप्रियजनागमनं सुखमद्भुतम् ॥ नृपकृतं
सदिदं यदिमाः पतिर्द्विजमतिर्जयतीर्थरुचिर्दिशेत् ॥ क्षितिपतेर्द्रविणागमनं रिपोरपचयं विजयं च रणांगणे ॥ अनुदिनं ननु मास
पतिः करोत्यवनिजोवनिजोरुसुखान्यपि ॥ क्षितिपतेः खलु मानधनागमो लिखनकाव्यकलादिरुचिर्भवेत् ॥ रिपुजयम्प्र
करोति निरंतरं यदि बुधः खलु मासपतिर्भवेत् ॥ बहुविलाससुखैस्सहितङ्करोत्यतितरांबरवस्त्रधनागमैः ॥ अपि नरं यदि
मासपतिः पतिः सुवचसां वचसां रचने मतिः ॥ ५ ॥ निजजनोपचयश्च जयः सदा सविनये विनये रुचिरद्भुता ॥ रतिपति
र्यदि मासपतिर्भवेत्कविरहोविरहोरिजनैर्ध्रुवम् ॥ ६ ॥ द्रुमलतापरिरोपणसादरोवरतरो हि नरो नृपगौरवम् ॥ विलसितैस्स
हितो यदिमाः पती रविभवो विभवोत्थसुखान्वितः ॥ ७ ॥ मासेश्वराणाम्नलिनाम्फलानि सम्यक् किलैतानि मयोदितानि ॥

बलस्य मध्याधमता यदा स्यात्तदानुमानेन फलम्प्रकल्प्यम् ॥ ८ ॥ वामनः ॥ लग्नेश्वरांशनाथस्य लग्नांशस्वामिना यदि ॥ सुहृत्त्वं स्नेहदृष्टिश्च चंद्रदृष्टिस्तथा द्युतिः ॥ १ ॥ सौख्यं शरीरे त्वारोग्यं निवृत्तिश्च तदा भवेत् ॥ शत्रुदृष्टिस्तयोश्चंद्रः क्रूरदृष्टिः परस्परम् ॥ २ ॥ तदा शरीरे कष्टं स्याच्चित्तोद्वेगस्तथैव च ॥ द्वयोरेकोऽस्तगो नीचो तदा कष्टात्सुखं वदेत् ॥ ३ ॥ द्वयोश्चास्तगयो र्नीचस्थयोर्मृत्युं विनिर्दिशेत् ॥ लग्नांशाधिपतिः क्रूरयुक्तः शंकाकरः स्मृतः ॥ ४ ॥ अत्र जन्माब्दकालयोरारिदृष्टियोगोत्पत्तौ एवंविधे मासे मृत्युंवदेत् ॥ अन्यथा मृत्युसमं कष्टं वाच्यमिति विशेषः ॥ लग्नांशनाथस्य यदा धनांशस्वामिना यदि ॥ मैत्र्यादियोगश्च यदा तदा द्रव्यं भवेद्बहु ॥ शत्रुयोगे क्रूरदृष्टौ नीचास्तगतयोस्तयोः ॥ धननाशश्च भवति धनन्तत्स्वामिनो वशात् ॥ २ ॥ लग्नेश्वरांशनाथस्य सहजांशेश्वरेण चेत् ॥ मैत्र्यादियोगश्चतदानुजसौख्यम्प्रजायते ॥ ३ ॥ लग्नेश्वरांशनाथस्य सुहृदंशेश्वरेण चेत् ॥ मैत्र्यादियोगश्च यदा सुहृदः सुखमश्नुते ॥ ४ ॥ लग्नेश्वरांशनाथश्चेत्सुतांशस्वामिना यदि ॥ मैत्र्यादियोगश्च तदा सुतसौख्यम्प्रजायते ॥ ५ ॥ लग्नेश्वरांशनाथस्य षष्ठांश स्वामिना यदि ॥ मैत्र्यादियोगश्च यदा शत्रुसंधिं तदा वदेत् ॥ ६ ॥ लग्नेश्वरांशनाथस्य सप्तांशस्वामिना यदि ॥ मैत्र्यादियोगश्च यदा तदा स्त्रीसुखमादिशेत् ॥ ७ ॥ लग्नेश्वरांशनाथस्य मृतीशांशेश्वरेण चेत् ॥ मैत्र्यादियोगश्च यदा स रुग्णस्स्यात्तदा सुखम् ॥ ८ ॥ मृतीशांशपतौ वीर्ययुक्ते कष्टं विनिर्दिशेत् ॥ लग्नांशनाथस्य यदा धर्मेशांशेश्वरेण चेत् ॥ ९ ॥ मैत्र्यादियोगश्च यदा मासे धर्म्ममतिर्भवेत् ॥ कर्मेशांशपतेश्चिन्त्या कर्मसिद्धिः कुलोचिता ॥ १० ॥ आयेशांशपतेरेवं लाभस्स्याद्व्यवहारतः ॥ व्ययेशांशपतौ स्वल्पवीर्ये स्वल्पव्ययो भवेत् ॥ ११ ॥ व्ययाष्टार्कांशपतयो विबलाः शुभदायकाः ॥ लग्नांशशेषभावांशपतयो बलिनः शुभाः ॥ १२ ॥ अत्र लग्नेश्वरांशनाथस्य यद्भावांशस्वामिना स्नेहदृष्टिर्योगो वा चंद्रस्यापि स्नेहदृष्टिर्योगो वा तदा भावोक्तसकलपदार्थानाम्पूर्वोक्तानाम्मासे सुखं वाच्यम् ॥ भावांशस्वामी उदितः स्वोच्चगो वा तदा अत्यंतं तद्भावोत्थशुभपदार्थाना सुखं वाच्यम् ॥ एवं लग्नेश्वरांशनाथस्य यद्भावांशस्वामिना क्रूरदृष्टिश्चंद्रस्यापितत्रक्रूरदृष्टिस्तदा तद्भावोत्थं दुःखं वाच्यम् । भावांशस्वामी अस्तंगतश्चेत्तदा अत्यन्तमशुभं तद्भावोत्थं ज्ञेयमिति विशेषः ॥ विशेषान्तरमुक्तं वामनेनैव ॥ यावत्कालं भवेदेवं तावत्कालं भवेदिदम् ॥ परस्प

रन्तान्सञ्चार्य मासं यावत्फलं वदेत् ॥ अयमर्थः ॥ लग्नेश्वरांशनाथभावांशनाथचंद्राणां प्रत्यहं गच्छतां यावत्तद्राशिसंचारस्तावत्कालमेव शुभं फलम् ॥ अथ तदनंतरं यद्येकस्य द्वयोर्वा तद्राश्यन्तस्थितिरन्यस्य राश्यंतरं संचारो विपरीतः स्यादथवा सर्वेषां राश्यंतरस्तत्र यथा मित्रशत्रुदृष्टियोगो दृष्ट्या भावो वा तथातथा शुभाशुभमध्यमफलं वाच्यमिति ॥ वर्षतंत्रे भावांशाधिपतिस्स्वभावपनवांशेन मैत्र्यादियोग उक्तः ॥ भावांशाधिपतिस्स्वभावपनवांशेशेन मैत्रीदृशा दृष्टो वा सहितः शशी च यदि तौ मैत्रीदृशालोकिते ॥ तद्भावोत्थसुखं विलोममथ तद्व्यत्यासतः कीर्तितं नीचास्तादिफलञ्च लग्नविदितं विद्वद्भिरूह्यन्धिया ॥ १ ॥ अयमर्थः ॥ यदा तौ ग्रहौ शत्रुदृष्ट्या परस्परं पश्यंतौ युक्तौ वा भवतश्चंद्रोपि शत्रुदृष्ट्या पश्यति तदा तन्मासि भावोत्थदुःखं स्यात् ॥ अत्रायं विशेषः ॥ भावांशपनवांशेशौ द्वौ अपि नीचास्तवक्रगौ भवतस्तदा तद्भावोत्थदुःखमवश्यं मासे भवति यदेको नीचादिगः अपरः सत्स्थानगो मध्यमस्थानगो भवति तदा द्वौ तद्भावोत्थदुःखमनुभूय पश्चात्सुखं स्यादिति ॥ अन्यच्च तत्रैव ॥ लग्नेशमासेशसमेश्वरांशनाथा यदंशाधिपमित्रदृष्ट्या ॥ दृष्टा युता वा शशिना तदा तद्भावोत्थसौख्याय न चेदरिष्टम् ॥ १ ॥ लग्नेशमासेशसमेशमुन्थाधिपाः षडष्टान्त्यगतास्सपापाः ॥ दृष्टाः खलैः शत्रुदृशात्र मासे व्याध्यादिविद्युद्भयदुःखदास्स्युः ॥ २ ॥ केन्द्रत्रिकोणायगतास्तु लग्नमासाब्दपा वीर्ययुता नराणाम् ॥ नैरुज्यशत्रुक्षयराज्यलाभमानोदयात्यद्भुतकीर्तिदाः स्युः ॥ ३ ॥ ताजिकालंकारे ॥ वर्षेऽन्थिहाभोगमथाद्यमासादशाद्यहद्दाधिपतिस्ततोयः ॥ मासाधिपः पूर्णबलस्तु पूर्णम्फलं ददातीह वदन्ति केचित् ॥ १ ॥ ताजिकसारे ॥ लग्नांशनाथोथ विलग्नलाभः केन्द्रत्रिकोणायगतो बलिष्ठः ॥ सौख्यं विलासान्निरुजं नितांतं नृणाङ्करोत्येव समेश्वरो वा ॥ १ ॥ षष्ठाष्टगो लग्ननवांशपश्चेत् क्रूरग्रहैर्युक्तनिरीक्षितश्च ॥ मासे नृणां कष्टमयं विवादं सम्यक्करोत्येव न संशयोत्र ॥ २ ॥ त्रैलोक्यप्रकाशे तु लग्नेशलग्ननवांशाधिपयोः फलमुक्तम् ॥ तत्काललग्नस्वामी यो नवांशकपतिस्तु यः ॥ तयोरन्योन्यदृष्टिश्चेच्चन्द्रदृष्टिश्शुभा मता ॥ १ ॥ तन्वादिभावे तु फलं तद्दशादैवचिंतकैः ॥ वाच्यं मासाधिपाद्वापि विशेषस्तत्र कथ्यते ॥ २ ॥ यस्यांशो मासयोर्भावे तद्भावे दूषणं गुणम् ॥ जन्मादिकशशांकाच्च तत्प्रवेशात् फलं वदेत् ॥ ३ ॥ नवांशकपतिः खेटो यावत्कालं भुनक्ति तत् ॥ तावत्कालस्य वक्तव्यं फलं तन्वादिकं क्रमात् ॥ ४ ॥

त्रिकोणे स्वगृहे स्वोच्चे मित्रदृष्टे सुहृद्गृहे ॥ राश्यंशयोस्सुहृत्त्वे च फलं श्रेष्ठमतोन्यथा ॥ ५ ॥ लग्नांशकपती मित्रे शुभदृष्टौ परस्परम् ॥ तदा देहसुखं वाच्यन्धने चेद्धनलब्धयः ॥ ६ ॥ सहजे भ्रातृजं सौख्यं तुर्ये गेहसुखं वदेत् ॥ सुते सुताप्तिर्योगो वा शत्रौ शत्रुविवृद्धिकृत् ॥ ७ ॥ द्यूने पत्नीकृतं सौख्यं मृत्यौ मृत्युकरः स्मृतः ॥ धर्मे धर्मफलप्राप्तिः कर्म्मप्राप्तिस्तु कर्मगे ॥ ८ ॥ लाभे लाभस्समग्रोपि व्यये हानिर्निरन्तरम् ॥ लग्नांशपौ यदा शत्रू शत्रुदृष्टौ युतौ तथा ॥ ९ ॥ व्यत्ययेन फलं वाच्यं पूर्वोक्तं यच्छुभाशुभम् ॥ १० ॥ अथ लग्नादिसर्वभागेषु सूर्यादिग्रहाणान्नवांशकफलमुक्तं जीर्णताजिके ॥ मूलत्रिकोणमित्रोच्चप्राप्ते मूर्तौ रवौ नृपः ॥ सम्बन्धेन धनप्राप्तिः फलम्पूर्वम्प्रकीर्तितम् ॥ अन्यत्रस्थे रवौ लग्ने देहपीडा निरंतरम् ॥ द्वितीये धननाशश्च दुर्वाच्यं स्यात्तृतीयगे ॥ चतुर्थे भोजने दौस्थ्यं पुत्रपीडा तु पंचमे ॥ शत्रुनाशो रिपुस्थे स्याद्यत्ने तुष्टिर्न कुत्रचित् ॥ अष्टमे व्याधिराधिश्च धर्महानिस्तु धर्मगे ॥ पदाप्तिर्दशमे प्रोक्ता लाभे लाभस्तथा भवेत् ॥ व्यये व्ययं नृपाद्दंडः सूर्यस्यांशैः फलं स्मृतम् ॥ इत्यर्थः ॥ अत्र लग्नस्थेर्के प्रतापकरणं पापदृष्टे द्वेषकरणं दुर्वाच्यं कठिनवक्ता भोजनावसरे दौस्थ्यं कलिः सप्तमेन तुष्टयः बंधनपीडादिसंभवकरणं वा दशमे राज्यसुखं प्रभुगौरवं वा एकादशे अल्पलाभः द्वादशे राज्यदंडकली ॥ इति विशेषः ॥ इत्यर्कः ॥ उच्चगे स्वगृहे चंद्रे देहपुष्टिर्विलग्नगे ॥ अन्यत्राशुभदः प्रोक्तो धने सौम्येक्षितः स्वदः ॥ सहजे सहजातसौख्यं चतुर्थे भव्यभोजनम् ॥ पंचमे सर्वतः सौख्यं रोगसंतापदो रिपौ ॥ निवृत्तिवार्ताश्रवणं सप्तमे लंघनं मृतौ ॥ नवमे शत्रुविजयो दशमे स्यान्महत्पदम् ॥ लाभे तु वस्त्रलाभः स्याद्व्यये स्यात्सद्व्ययो विधौ ॥ इति चन्द्रः ॥तत्र पंचमे चन्द्रे शुभम् ॥ पूर्ववत् सुतसौख्यम्॥षष्ठे शुभाशुभदृष्टे रोगसंतापौ ॥ अष्टमे लंघनं नद्यादितरणम् ॥ पापदृष्टे चंद्रे रोगधारणं लंघनं दुष्टम् ॥ सिंहसिंहांशेर्कचंद्रौ मकरलग्नेमासादिनावेशोबुधः ॥ एवं मेषमेषनवांशे अर्कभौमयोगलग्नपनवांशमृगांशौ सौरचंद्रौ मीनलग्ने बुधः दशमे गुरुशुक्रक्षेत्रयुते क्षत्रं चार्कयुते नृपाल्लाभो लाभे सर्वग्रहयुतदृष्टे वस्त्राप्तिः ॥ द्वादशे शुभयुतदृष्टे विवाहादौ व्ययः ॥ पापयुक्तेक्षिते असद्व्यय इति विशेषः ॥ इति चंद्रः ॥ मूर्तौ नाशो धने हानिः पदप्राप्तिस्तु विक्रमे ॥ बुभुक्षा मरणं तोये बुद्धिहानिस्तु पंचमे ॥ स्वातंत्र्यं रिपुभे श्रेष्ठं वादः स्त्रीभिस्तु सप्तमे ॥ छिद्रे ग्रहे प्रपीडा स्याद्धर्महानिस्तु धर्मगे ॥ मित्रभेदस्तु दशमे हानिर्लाभे व्यये व्ययः ॥

फलमुक्तं तु भौमस्य विपरीतमतोन्यथा ॥ अत्र स्वोच्चादिगो भौमो लग्नेतीव शुभः स्मृतः ॥ तृतीये बंधुविग्रहश्चतुर्थे भूमिकर्षणाम् ॥ सप्तमे स्त्रीकलिः अष्टमे देहपीडा लाभे लाभः किंचित्सामान्यः ॥ व्यये हठाद्व्यय इति विशेषः ॥ इति भौमः ॥ कौटिल्यं लग्नगे सौम्ये द्वितीये वचनाद्धनम् ॥ मिथ्यावाक्यं तृतीयस्थे विज्ञानं शिल्पिजं सुखे ॥ कौटिल्यं पंचमे षष्ठे मिथ्यावेषकरो मतः ॥ स्मरे कुटिलयुद्धाख्यं रोगे जीर्णादितोष्टमे ॥ मिथ्याधर्मपरो धर्मे खभे शिल्पात्सुतं परम् ॥ लाभे तु यदि लाभः स्यात्पूर्वलब्धव्ययो व्यये ॥ अत्र षष्ठे बुधे कुटिलाविग्रहः ॥ दशमे शिल्पकर्मणि इति विशेषः ॥ इति बुधः ॥ गुरोर्भगणभोगोत्र द्वादशाब्देन लभ्यते ॥ संचार्य प्रातिवर्षेषु द्वादशस्वपि राशिषु ॥ गुरौ मूर्तौ भवेन्मंत्री धनं धनगतं भवेत् ॥ विक्रमं विक्रमे तुर्ये सुखं राज्याद्धनागमः ॥ विद्यापुराणपुत्रादि पुत्रे शत्रुकरो रिपौ ॥ योषित्सौख्यं तथा यत्ने ज्ञेंदुशुक्रयुते बहु ॥ मृतौ रोगागमो धर्मेधर्मलाभो वृषागमः ॥ कर्मगे राज्यलाभः स्याल्लाभे लाभो व्यये व्ययः ॥ मूर्तौ जीवे मंत्रालाभः द्वितीये धनलाभः ॥ तृतीये मिष्टवक्ता ॥ चतुर्थे मिष्टभोजनम् ॥ पंचमे सुतसौख्यं धर्मवृद्धिः ॥ षष्ठे रोगारिवृद्धी ॥ नवमे धर्मदानसुखागमः दशमे पदप्राप्तिः ॥ एकादशे सर्वार्थाप्तिः ॥ द्वादशे सद्व्यय इति विशेषः ॥ इति गुरुः ॥ जगत्प्रीतिः सिते मूर्तौ धनलाभो द्वितीयगे ॥ तृतीये पोषणं भ्रातृभगिन्योरपि संपदः ॥ सुखे सर्वसुखावाप्तिः सर्वलोकप्रियो भवेत् ॥ पंचमे बुद्धिसंपत्तिः कुटुंबकलहो रिपौ ॥ स्त्रीरतिः सप्तमे शुक्रः अष्टमे श्लेष्मसंभवः ॥ अकस्माद्धनधान्याद्यधर्माप्तिश्चापि धर्मगे ॥ राज्यं रविर्लाभगे ॥ स्त्रीभ्यो धनव्योपि व्ययो व्यये ॥ अत्र लग्ने शुक्रे जायासुखं देहपुष्टिः ॥ द्वितीये सुखं द्रव्यं च ॥ तृतीये भ्रातृसुखम् ॥ चतुर्थे परदारस्पर्शनादिसुखम् ॥ सप्तमे स्त्रीरतिः ॥ बुधगुरुयुते वश्यपापादिग्रहे स्ते स्वमे रतिः ॥ दशमे स्वोच्चे स्वगृहे शुभयुक्ते राज्यमन्यथा राजगौरवात् ॥ लाभे महालाभः द्वादशे गीतइतिहासक्रीडा व्यये इति विशेषः ॥ इति शुक्रः ॥ तनौ देहविपत्सौरे स्वोच्चादिस्थे तनौ सुखम् ॥ धननाशो धने सौरे विक्रमे सहजापदः॥स्त्रीभोगौ सुखगे नष्टौ पुत्रे पुत्रादिपीडनम् ॥ शत्रुनाशकरः षष्ठे द्यूने निर्वृतिनाशकृत् ॥ वातरोगस्तथा छिद्रे धम धर्मादिलब्धयः ॥ राज्यगौरवहानिः स्यादशमे सूर्यनंदने ॥ लाभे लाभव्ययौ नष्टौ व्यये चेत्स्यान्महाव्ययः ॥ अत्र लग्ने शनौ कभोजनम् ॥ देहे बलाभावः ॥ द्वितीये धनक्षयश्चौर्यं च तृतीये पराक्रमः ॥ चतुर्थे माषान्नकुभोजनम् वाहनं भयं तेजोहा

निः पंचमे भ्रातृयुद्धम् ॥ सप्तमे गमनागमनं हंति ॥ अष्टमे सुखाभावः ॥ नवमे महाजयः ॥ लाभे लाभः ॥ व्यये नष्टव्ययः ॥ इति विशेषः ॥ इति शनिः ॥ राहुस्तनौ तनौ पीडा वस्त्रालंकारपीडनम् ॥ धनेधनविनाशाय विक्रमे बंधुनाशनः ॥ तोये भोजकुटुंबघ्नः पुत्रे संतातिपीडनम् ॥ रिपुहा रिपुराशिस्थः पत्नीनाशाय सप्तमे ॥ मृतौ मृत्युविनाशाय शुभलाभाय कीर्तितः ॥ धर्मे धर्मपदप्राप्तिर्लाभे लाभविनाशकृत् ॥ असद्व्ययकरश्चांत्ये स्वोच्चक्षेत्रादिगः शुभः ॥ अत्र राहौ लग्ने शस्त्रपीडा रक्तदर्शनम् ॥ तृतीये भ्रातृहानिः ॥ परस्परं विरोधः ॥ चतुर्थे कुटुंबभोजनम् ॥ सप्तमे मृताविवाहिताकष्टम् ॥ अष्टमे सुखाभावः ॥ नवमे मलिनः ॥दशमे राजगौरवलाभः ॥ लाभे लाभाधिक्यम् ॥ अत्र भावे कन्याराशिर्नवांशे सति बुधफलवद्राहुफलं वाच्यमिति विशेषः ॥ शुभाशुभफलमेकस्मिन्नेव भावे स्वोच्चग्रहनीचादिग्रहविषयकं ज्ञेयमिति राहुः एतद्ग्रहाणां भावे नवांशफलं ज्ञेयम् ॥ अत्र विशेषमाह चंडेश्वरः तत्तद्ग्रहस्य यो भोगस्तन्नवांशे क्रमात् फलम् ॥ मूर्त्यादिसर्वभावेषु क १०८ ल्प्यमष्टाधिकं शतम् ॥ सूर्यज्ञभृगुपुत्रेभ्यो सत्रिभागं दिनत्रयम् ॥ पंचाहो भूमिपुत्रस्य चत्वारिंशद्दिनं गुरोः शनेर्मासत्रयं प्रोक्तं दशाहसहितं पुनः ॥ मासद्वयमितं राहोश्चंद्रः सर्वत्र मध्यगः ॥ अथ वर्षे मासे वा संक्षिप्तं भावफलं वर्षतंत्रे ॥ सूर्यारमंदास्तनुगा ज्वरार्तिं धनक्षयं पापयुगिंदुरित्थम् ॥ शुभान्वितः पुष्टतनुश्च सौख्यं जीवज्ञशुक्रा धनराज्यलाभम् ॥ १ ॥ चंद्रज्ञजीवाः स्युरितो धनस्था धनागमं राज्यसुखं च दद्युः ॥ पापा धनस्था धनहानिदाः स्युर्नृपाद्भयं कार्यविघातमार्किः ॥२॥ दुश्चिक्यगाः खलखगा धनधर्मराज्यलाभप्रदा बलयुताः क्षितिलाभदाः स्युः ॥ सौम्याः सुखार्थसुतमानयशोविलासलाभाय हर्षमतुलं किल तत्र चन्द्रः ॥ ३ ॥ चंद्रः सुखे बलयतो व्यसनं रुजं च पुष्टः शुभेन सहितः सुखमातनोति ॥ सौम्याः सुखं विविधमत्र खलाः सुखार्थनाशं रुजं व्यसनमप्यतुलं भयं च ॥ ४ ॥ पुत्रवित्तसुखसंचयः शुभाः पुत्रगो भृगुसुतोतिहर्षदः ॥ पुत्रमित्रधनबुद्धिहारकास्तस्कराऽमयकलिप्रदाः खलाः ॥ ५ ॥ षष्ठे पापा वित्तलाभं सुखाप्तिं भौमेत्यंतं हर्षदः शत्रुनाशम् ॥ सौम्या भीतिं वित्तनाशं कलिं च चंद्रो रोगं पापयुक्तः करोति ॥ ६ ॥ सपापः शशी सप्तमे व्याधिभीतिं खलाः स्त्रीविनाशं कलिं भृत्यभीतिम् ॥ शुभाः कुर्वते वित्तलाभं सुखाप्तिं यशो राजमानोदयं बंधुसौख्यम् ॥ ७ ॥ चंद्रोष्टमे निधनदः खलखेटयुक्तः पापाश्च तत्र मृतितुल्यफला

विचिंत्याः ॥ सौम्याः स्वधातुवसतौ रुजमर्थहानिम्मानक्षयं मुथशिले शुभजे शुभं च ॥ ८ ॥ तपसि सोदरभीः पशुपीडनं खलखगेतिमुदो रविरत्र चेत् ॥ शुभखगा धनधर्मविवृद्धिदाः खलखगोपि शुभान्यपरैर्जगुः ॥ ९ ॥ गगनगो रविजः पशुवित्तहा रविकुजो व्यवसायपराक्रमौ ॥ धनसुखानि परे च धनात्मजावनिपसंगसुखानि वितन्वते ॥ १० ॥ लाभे धनोपचयसौख्ययशोभिवृद्धिसन्मित्रसंगबलपुष्टिकरास्तु सर्वे ॥ क्रूरा बलेन रहिताः सुतवित्तबुद्धिनाशं शुभास्तु तनुते स्वफलस्य वृद्धिम् ॥ ११ ॥ पापा व्यये नेत्ररुजं विवादं हानिं धनानान्नृपतस्करादेः ॥ सौम्या व्ययं सद्व्यवहारमार्गे कुर्युः शनिर्हर्षविवृद्धिमत्र ॥ १२ ॥ अत्रेदं भावफलं संक्षेपेणोक्तं मासप्रवेशलग्ने पद्मकोशोक्तं भावफलं मणित्थोक्तं वा स्वबुद्ध्या यथायोग्यं यथासंभवं च लेखनीयम् ॥ अथान्यो विशेषः ॥ वर्षप्रवेशलग्ने द्रव्यं पुत्रजायालाभविवाहारिष्टयोगोन्यतो मासप्रवेशलग्नेपि यस्मिन्मासे तत्संभवस्तस्मिन्मासेऽवश्यं तत्फलं वाच्यमिति ॥ मासे हीनांशादिदशाः सर्वाः पूर्वदशाध्याये निरूपिता एव ॥ विशेषमाह यादवः ॥ फलं च सर्वं प्रथमोक्तवच्च मासप्रमाणेपि दशा च कार्या ॥ प्राग्वच्च तस्या हि फलानि पश्च विशेषमत्र प्रथमं ब्रवीमीति ॥ ये हद्दभागाः कथिताः क्रियादौ मासप्रवेशांगमते च तस्मिन् ॥ तावत्प्रमाणा हि दशाच तेषां ज्ञेया ग्रहाणामिह रौमकोक्ता ॥ अजेविलग्नेगरसेभवाणा दशाब्द ६ शु ६ ज्ञा ८ र ५ शनैश्चराणाम् ॥५॥ तथैवमग्रेपि फलानि तासां ग्रहस्वरूपे तु समग्रकाणि ॥ अथ मासलग्नमुंथहालग्नयोर्मध्ये यो बलवांस्तस्माद् हद्दादशा विचार्या इत्युक्तं वर्षतंत्रे ॥ इंथिहालग्नपो राशिपो वली तत्र हद्दपाः ॥ दशेशाःस्वांशतुल्याहैरित्युक्तं कैश्चिदागमात् ॥ अत्र विशेषमाह वामनः ॥ स्वहद्दे मित्रहद्दे वा दिनमासदशा तथा ॥ हद्दां पश्यति यः खेटः फलं तस्योत्तमं भवेत् ॥ अत्र स्वहद्दादिज्ञानंमासलग्नवशतो ज्ञेयम् ॥ अत्रांतर्दशाज्ञानमाह यादवः ॥ बलानुमानेन शुभाशुभानि तान्येव विंद्यादथ चैकघस्राः ॥ अन्तर्दशार्के १ न्दु १ कु १ राहु १ जीव १ मंद १ ज्ञ १ केतू १ शनसां तदीशात् ॥ अत्र मेषलग्ने प्रारंभे प्रथमं गुरुदशादिनादि ८ तत्रांतर्दशा प्रथममेकदिनतुल्या गुरोः १ ततः शनेरेकादिने तुल्या १ ततो बुधस्य १ ततः केतोः १ ततो भौमस्य १ ततोर्कदशांतर्दशादिनानि १ एवं षड्दिनानि जातानि ॥ ततः शुक्रदशादिनानि ६ अत्र प्रथमं शुक्रांतर्दशादिनम् १ ततो रवेः १ ततश्चंद्रस्य १ ततो भौमस्य १ ततो राहोः १ ततो गुरोः १ एवं दशेशमारभ्योक्तक्रमेणैकैकदिवसमिताः सर्वेषां ग्रहाणामंतर्दशा ज्ञेया ॥ फल

मप्युक्तं तत्रैव ॥ सौम्यग्रहस्यैव दशां प्रविष्टामंतर्दशा सौम्यभवातदा स्यात् ॥ कार्यार्थसिद्धिर्मनसश्च तुष्टिर्मित्रातिपुत्रादिसुखं तथैव ॥ १ ॥ क्रूरस्य पाके यदि पापपाकः प्रोद्वेगचिंताभयकोपवादः ॥ मृषापवादो गदकादिकं च लोकैर्विरोधं स्वपरैरतीव ॥ २ ॥ शुभस्य मध्ये यदि पापकस्य दशा तदा दुःखमनोधिमोहाः ॥ परस्परं ताडनबंधनानि भवंति पुंसां व्यसनानि वापि ॥ ३ ॥ क्रूरग्रहस्यापि दशाविभागे सौम्यस्य चेत्स्याद्सुखं च तंद्रा ॥ आलस्यबुद्धिर्व्यसनानि चैवं विचार्य मासे प्रवदेत्फलानि ॥ अत्र मुंथामासेशदशादिफलवज्ज्ञेयम् ॥ अत्रायं विशेषः जन्मनि वर्षे वा यो ग्रहः स्वगृहे स्वोच्चे स्वमित्रहद्दादौ सौम्ययुतदृष्टो वा भवति तस्य दशा शोभना ॥ नीचारिगृहास्तगतपतितभवना ६ । ८ । १२ धीशदशा निंद्या ॥ जीवे संतापोत्पत्तिः ॥ चंद्रः ४ । ८ । २ । १ । ९ एष्वशुभः ॥ अत्रापि मास प्रवेशफलानि ॥ वामनः ॥ कलादिना समो भानुर्यद्वेलायां प्रजायते ॥ दिनेदिने भुक्तियोगात्तदग्रं दिनजं स्मृतम् ॥ १ ॥ दिनलग्ने ग्रहान्सर्वान्स्पष्टान् भावांश्च साधयेत् ॥ तत्र स्पष्टीकृतश्चंद्रो यत्रांशे तत्फलं वदेत् ॥ २ ॥ लग्नांशस्थे शुभैर्दृष्टे चंद्रे पुष्टतमं वपुः ॥ धनांशे शुभयुग्दृष्टे धनधान्यं रसैः समम् ॥ ३ ॥ सहजांशे भ्रातृसौख्यं तुर्यांशे भव्यभोजनम् ॥ सुतांशेपत्यजं सौख्यं षष्ठांशे रोग वैरिणोः ॥ ४ ॥ सप्तमे स्वस्त्रियाः सौख्यं शुक्रज्ञगुरुसंगमे ॥ स्वयंवरस्त्रियाःसौख्यं धृतिर्वा न च वर्त्मना ॥ ५ ॥ दिनादावष्टमेकस्माद्रोगो धरणकं मृतिः ॥ क्रूरद्वयांतरे वेधः ससौम्यः स्वल्पसौख्यकृत् ॥ ६ ॥ पुण्यांशे संपदस्तीर्थं कर्मांशे कर्मणां फलम् ॥ गुरुशुक्रपदेशेच सार्के भूपात्पदं महत् ॥ ७ ॥ लाभांशेपि नवो लाभः सौम्ययुक्तेक्षिते परम् ॥ निधिप्राप्तिर्व्ययांशे च सशुभे शुभकृद्व्ययः ॥ ८ ॥ संवित्प्रकाशे ॥ चंद्रे स्वोच्चशुभस्वमित्रभवनस्थः सौम्यमित्रेक्षितो नीचारातिग्रहादि ६ रंध्र ८ रहितस्थानस्थितो हर्षितः ॥ पुष्टश्चैव निरीक्षितोखिलजयश्चेत्स्यात्समस्तं दिनं ज्ञेयोसौ दिवसोखिलोपि फलदः स्याद्वैपरीत्येन्यथा ॥ अत्र दिनप्रवेशे लग्नादिनवांशफलमुक्तं ताजिकसारे ॥ यदि विलग्नलवः शुभखेचरैर्बलयुतैः सहितोथ विलोकितः ॥ बहुसुखं प्रकरोति हिमांशुना धनपदं च तथा विजयं नृणाम् ॥ १ ॥ शुभखगैः सहितोथ विलोकितो बहुसुखं प्रकरोति हिमांशुना ॥ धनपदं च तथा विजयं नृणां शुभखगैः सहितोथ विलोकितः ॥ २ ॥ बहुसुखं प्रकरोति धनं तदा सहजतश्च सुखं सहजांशके ॥ यदि शुभैः सहिते विधुना तथा सुख

लवो यदि सौम्ययुतेक्षितः ॥३॥ शुभतरं स्वजनैःसह भोजनं सुतसुखं प्रकरोति सुतांशके ॥ विधुबुधेज्यसितैश्च युतेक्षितः सुखलवो यदि सौम्यखगेक्षितः ॥ ४ ॥ रिपोर्गृहांशः शुभखेटयुक्तः करोति रोगारिभयं नराणाम् ॥ शुभैश्च जायांशगतैर्विलासं स्वभार्यया दुष्टखगैः खलत्वम् ॥ ५ ॥ वध्वंशकः सौम्यखगांतरस्थः सौम्यस्तदा दारसुखं च पुंसाम् ॥ शुक्रज्ञजीवैस्सबलैश्च सौख्यं सप्तस्थितैर्वा बहुकामिनीनाम् ॥ ६ ॥ रंध्रांशके रंध्रमतः समेतः सौम्यैर्विधत्ते मरणं रणादौ ॥ मिश्रैर्विमिश्रं च खगैः शुभत्वं धर्मांशके धर्ममतिः सुपात्रे ॥ ७ ॥ भूपास्पदं भौमयुतैश्च सौम्यैः कर्मांशकस्थैर्नृपतेर्धनाप्तिम् ॥ लाभांशकस्थैः सितचंद्रजीवैर्लाभो महान्मिश्रखगैश्च मिश्रः ॥ ८ ॥ व्ययः शुभः स्याद्व्ययभांशयातैर्बुधेज्यशुक्रैस्त्वशुभैश्च हानिः ॥ दिनेदिने भूमिभृतां सदैव फलं विलोक्यं सुधिया ग्रहोत्थम् ॥ ९ ॥ विलग्ननाथः शुभयुक्तदृष्टः केंद्रत्रिकोणायगतो बलिष्ठः ॥ सौख्यं च लाभं नृपतिं नितांतं नृणां करोत्येव समेश्वरो वा ॥ १० ॥ अन्यच्च तत्रैव ॥ षष्ठाष्टगो भौमयुतः शशांको दत्तेत्वसौशस्त्रभयं नराणाम् ॥ भौमोष्टमस्थोरिभयं च विघ्नं सूर्यस्तथैवं प्रकरोति नूनम् ॥ १ ॥ रात्रीश्वरो रंध्रगतः सपापः करोत्यरिष्टं सबलश्च पुंसाम् ॥ क्रूरैः सुखस्थैर्गजवाजिपाताद्ध्रुवं प्रयातो बहुला च पीडा ॥ २ ॥ सप्तस्थितैः सौम्यखगैर्बलाढ्यैर्दुरोदरात्संविजयं करोति ॥ धर्मार्थलाभं नवमोपजातैर्विलग्नतो वाक्पतिसौम्यशुक्रैः ॥ ३ ॥ नग ७ पराक्रम ३ शत्रु ६ भव ११ स्थितैः शशिसुरेज्यदिनेशसितैर्यदा ॥ नवमर्क्षगतैश्च तदा जनो भुवि तले रमते बहुभार्य्यया ॥ ४ ॥ वेश्यामर्थरतिः करोति रविजः सप्तस्थितैर्वा बली भौमो वा सबुधः सितेमदगतः सौख्यं स्वदारोद्भवम्॥नूनं देहभृतौ सुरेज्यभृगुजौ सप्तस्थितौ भोगदौ नानास्त्रीजनितं सुखं प्रतिदिनं पुंसां गुरुः सप्तमे॥५॥ अत्रोक्तफलं यथासंभवं स्वबुद्ध्या वाच्यमिति॥वामनः॥व्यत्यये व्यत्ययस्तद्वत् क्रूरैर्व्ययधनस्थितैः॥दिनेंदोर्लग्नगे बंधुवैरिभिः कलिमादिशेत्॥१॥तथैव लग्नगे क्रूरेतथापापयुतेक्षिते॥दिनेंदौ शस्त्रघातेन मृत्युर्व्यस्तेन्यथा भवेत्॥२॥एकांशावस्थितैर्योगः क्षीणेंदुर्न च शोभनः ॥ लग्नाच्छिद्रे मेषराशौ मकरे च तदंशके ॥ ३ ॥ सेंदवः कुजसौरार्किर्दिने स्यादासिना वधः ॥ राहौ वाथ कुजे मंदे परस्मिन्नपि खेचरे ॥ ४ ॥ अष्टमे स्वगृहे चैव दिने चंद्रोसिना वधः ॥ अत्रायं विशेषः॥ पूर्वं लग्नं मासलग्नं च महारिष्टदं मिश्रफलदं महाशुभफलं वा निर्णय

पश्चाद्दिनप्रवेशलग्नफलं शुभं मिश्रं अशुभं च वर्षमासानुसारेण वाच्यम् ॥ दिनेशानिर्णयः वर्षतंत्रे ॥ मुथहेशस्त्रिराशीशो दिवा सूर्यक्षनायकः ॥ रात्रौ चंद्रभपो वर्षस्वामी वर्षविलग्नपः ॥ १ मासलग्नपतिर्घस्रलग्नेशः सप्तमः स्मृतः ॥ एषां बली तनुं पश्येद्दिनपः परिकीर्तितः ॥ २ ॥ षष्ठाष्टरिःफोपगता दिनाब्दमासेथिहेशाः खलखेटयुक्ताः ॥ गदप्रदा मानयशोहराश्च केंद्रत्रिकोणोपगताः सुखाप्त्यै ॥ ३ ॥ यदंशकः सौम्ययुगीक्षितो वा स्निग्धेक्षणाद्भावजसौख्यकृत्सः ॥ दुःखप्रदः प्रोक्त इतोन्यथात्वे सर्वेषु भावेष्वियमेव रीतिः ॥ ४ ॥ द्विर्द्वादशे खला हानिं व्यये सौम्याः शुभव्ययम् ॥ कर्तरीपापजा रोगं करोति शुभजा शुभम् ॥ ५ ॥ कर्तरीलक्षणमाह वसिष्ठः ॥ लग्नस्य पृष्ठाग्रगयोरसाब्धौ सा कर्तरी स्याहजुवक्रगत्योः ॥ तौ शीघ्रचारौ यदि वक्रचारौ न कर्तरी चेति पितामहोक्तिः इति ॥ अत्र लग्नपापग्रहयोरंशसाम्ये कर्तरीदोष इत्युक्तं गर्गेण ॥ लग्नाद्विरिःफगौ क्रूरौ त्रयमेतत्समांशकम् ॥ तदा कर्तरिजो दोषो नान्यथा भावजं फलम् ॥ कर्तर्यपवादोपि बादरायणोक्तः ॥ विधौ धनोपगे शुभग्रहेथवांत्यगे गुरौ ॥ न कर्तरी भवत्यहो जगाद बादरायण इति ॥ अत्र शुभग्रहकर्तरी शुभैव स्वल्पसौख्यकरी ज्ञेयेति ॥ ताजिकसारे ॥ तनुपतिस्तनुते मदनानुगे बहुसुखं त्वथवा हिमगुर्नृणाम् ॥ गगनबंधुगतो भृगुनंदनः खलु तथाविजयं गुरुसोमजौ ॥ अरि ६ विनाश ८ गतस्तनुनायकः खलखगैः सहितः सुरपूजितः॥ तनुभृतां प्रकरोति दिने व्यथां गदपदं बहुलं विबलो यदा ॥ मृत्युस्थिता दुष्टखगाश्च नित्यं कुर्वीत सौम्यैः सहिताश्च तस्मिन् ॥ घस्रे विवादं कलहं स्वशत्रोर्भयं नृणां नैव सुखं कदाचित् ॥ सौम्याः स्वकेंद्रात्मजलाभगाश्चेत्पापास्त्रिषष्ठायगता यदि स्युः ॥ कुर्वन्ति घस्रं विविधं विलासं वित्तागमं वै विजयं नराणाम् ॥ सहजधीमदनायरिपुस्थितो ३।५।७।११।६ यदि शनी गुरुभानुसितेक्षितः ॥ नवमकेंद्रगतेषु शुभग्रहेष्वबलयामनुजो रमते सदा ॥ इति वामनः ॥ अत्र दृष्टौ योगे च विशेषमाह यादवः ॥ संपूर्णदृष्ट्या च दिने फलं स्याद्योगस्तथैकांशसमागमोक्तः ॥ क्षीणः शशी नैव शुभप्रदश्च ग्रहैश्च भान्वंशगतैः फलोक्तिः ॥ अत्र दिनप्रवेशेपि मया दशाध्याये सम्यक्तया दशा निरूपिताः संति तास्तत एवावधार्याः ॥ अथ मद्गुरुचरणकृता दिनदशा लिख्यते॥जन्मभादिनभं गण्यं वेद४घ्नंतिथिवास्युक् ॥ नवा ९प्तं भू १ रसां ६ का ९।क्षि २ वेदा ४ ष्टा ८ द्रि ७ गुणे ३ षुभिः ५ ॥ शेषे सूर्यादिखेटानां दशा ज्ञेया दिनो

द्रवा ॥ सौख्यं सौम्यदशायां स्याद्दुःखं पापदशासु च ॥ अथ विशेषफलम् ॥ शिरोऽव्यथा वित्तहानिः कलहं दुष्टभोजनम् ॥ वृथाया त्रारवौ प्राच्यां चंद्रे स्वं मिष्टभोजनम् ॥ राजपूजा सुखं वस्त्रं भौमे दुःखं भयं व्ययम्॥गोधूमयवमुद्गादिभोजनं शशिनंदने ॥ मित्रसंगं सुखं क्रीडा विद्या सौख्यं नृपाद्धनम् ॥ गुरौ सुभोजनं द्रव्यं लाभं स्त्रीमित्रभूपतः ॥ सौख्यं प्रतीच्यां गमनं वस्त्राप्तिं च भृगोर्धनम् ॥ सुभोजनं सुखं भूपमित्रस्त्रीतो यवान्नभुक् ॥ शनौ भ्रमस्तीव्ररोषो नृपाद्भीर्देहपीडनम्॥कुधान्याप्तिर्वृथायात्रा राहुकेत्वोः फलं तथा ॥ अथ दिनप्रवेशे अवस्थाविचारो वर्षतंत्रे ॥ दिनप्रवेशेऽत्र विधोरवस्था या तु यादृशी ॥ तदवस्था तुल्यमसौ फलं दत्ते नसंशयः ॥ विहाय राशिं चंद्रस्य भागा द्विघ्नाः २ शरोद्धृताः ५ ॥ लब्धं गता अवस्थाः स्युर्भोग्यपाः फलमादिशेत् ॥ प्रवासः प्रवासोपगे सात्रि नाथेऽर्थनाशस्तु नष्टोपगे मृत्युभीतिः ॥ मृतावास्थिते ३ स्याज्जयायां जयस्तु४ विलासस्तु हास्योपगे ५ कामिनीभिः ॥ रतौ स्याद्र तिः ६ क्रीडिता ७ सौख्यदात्री प्रसुप्तापि निद्रां कलिर्देहपीडा ॥ ८ ॥ भयं ९ तापहानिः १० सुखं स्यात्तु भुक्ता ११ ज्वरार्क पिताः सुस्थिराः स्युः क्रमेण ॥ अत्र चंद्रो लग्नाज्जन्मराशेर्वा अष्टमगस्तदावस्थाफलं विपरीतं ज्ञेयमित्युक्तं ताजिकसारे ॥ छिद्रोपगो रात्रि पतिर्विलग्नाद्व्यस्तं फलं वा जनिभाद्विलोक्यमिति ॥ छिद्रगत्वं षडंशस्थागतस्याप्युपलक्षणमितिकेचित् ॥ अशुभावस्थापवा दमाह वामनः ॥ कष्टावस्था शुभाशस्थे चंद्रे ज्ञेया शुभप्रदेति ॥ अथ दिनप्रवेशे भोजनविचारः ॥ वामनः ॥ दिनलग्नं निवेश्या दौ चक्रे द्वादशराशिके ॥ तात्कालिकग्रहवशाद्भोजनादि विचिंतयेत् ॥ आदिशब्देन आखेटस्त्रमादि ज्ञेयम् ॥ भोज्यदाता तनु स्वामी भोज्यं हिबुकवेश्मपः ॥ द्यूनपश्च बुभुक्षोक्ता भोक्ता द्यूनाधिपो मतः ॥ लाभवेश्मनि लग्ने च शुभदृष्टे सुभोजनम् ॥ जीवे लग्ने सिते वापि कुस्थानेऽपि सुभोजनम् ॥ राहौ मंदे तथा लग्ने सूर्ये दृष्टे युतेऽपि च ॥ न चात्र भोजनं क्वापि शस्त्रतो घातमा दिशेत् ॥ २ ॥ रविदृष्टिर्विना लग्नं रवियोगं विनापि वा ॥ सायकं दशनं वाच्यं लंघनं च विनिर्दिशेत् ॥ उष्णं तु दशमे चंद्रे शीतं तत्र कुजे स्थिते ॥ तुर्यस्थेऽर्के रसं तिक्तं सोमे सलवणं भवेत् ॥ कुजे तु कटुकं प्रोक्तं बुधे प्रोक्तं तु मिश्रितम् ॥ गुरौ तु मधुरं प्रोक्तं शुक्रेऽम्लं तुवरं शनौ ॥ ग्रहे बलयुते वापि भोज्यान्ने रसमादिशेत् ॥ स्निग्धं शुक्रे शनौ तैलमुच्चगे संस्कृतं शुभम् ॥ नीचे कटु

शनौ तुर्य्ये संस्काररहितं पुनः ॥ लग्ने सूर्य्यादयः स्वोच्चे नृपादिगृहभोजनम् ॥ राजा रविः शशी राज्ञी मंगलो वाहिनीश्वरः ॥ कुमा
रो ज्ञो गुरुर्मंत्री सितो नेतानुगः शनिः ॥ मूलत्रिकोणके खेटे सपितुस्तत्र भोजनम् ॥ मित्रवेश्मनि मित्रर्क्षे समे समगृहे पुनः ॥ एवं
धने धनाढ्यं च बंधुभ्यो बंधुभे तथा ॥ पितृवेश्मनि तुर्य्ये स्यात्पुत्राद्भुक्तं तु पंचमे ॥ शत्रुवेश्मनि शत्रौ स्याद्योषिद्वेश्मनि सप्तमे ॥
छिद्रे तु कपटाद्भुक्तं नवमे धर्मभोजनम् ॥ दशमे राजामार्गाच्च लाभो पित्रादिना हतः ॥ व्यये मूल्यात्तथा भुंक्ते तुर्य्याशाद्भोज्यसं
मितिम् ॥ चंद्राराशीश्वरं चंद्रः पश्येच्चेत्सुखभोजनम् ॥ न पश्येच्च तदा कष्टं भोजनं दुर्वचोदितम्॥कालहोराधिपो लग्ने सुखे वा शीघ्र
भोजनम् ॥ धने तुर्य्ये च राजा च मिष्टमन्नं क्षिपत्ययम् ॥ तुर्य्यं पश्यति लग्नं वा चंद्रस्तत्र सुभोजनम् ॥ दशमं तु शुभः पश्येत्स्वगृहे
सुखभोजनम् ॥ शत्रौ शत्रुगृहे भुक्तमन्यदूह्यं स्वबुद्धितः॥लग्ने सर्वग्रहोपेते स्वगृहे भोजनं भवेत्॥चरराशौ लग्नगते वारंवारं तु भोज
नम्॥एकवारं स्थिते लग्ने द्विवारं द्विःस्वभावके॥सूर्य्यारौ बलिनौ लग्ने क्षत्रियस्य गृहे भुजिः॥द्विजगेहे शुक्रगुरू चंद्रो वैश्यगृहे बुधः ॥
शूद्रगेहे सूर्यसुतो नीचगेहे कुभोजनम् ॥ सुखसंस्थे सुखाधीशे सुभोज्यं सरसं वदेत् ॥ वर्षतंत्रे ॥ तिलान्नमर्के हिमगौ सतण्डुला सौम्ये
मसूराश्चणकाः सुभोजनम् ॥ शनौ कुलित्थादिसमाषमन्नं भोज्यं तुषान्नांशिखिराहुवीर्य्ये ॥ शुभेक्षणालोकनतः सहर्षम् ॥ सूर्य्ये
मूलं पुष्पमिन्दौ कुजे स्यात्पत्रं शाखा वापि शाकं सवीर्य्ये ॥ शुक्रे ज्यज्ञेऽथ जनं भूरिभेदं मंदेनेत्थं सामिषं राहुकेत्वोः ॥ अथ यथा
कस्यां दिशि इत्यादिप्रश्ने संज्ञाध्यायोक्तग्रहराशिस्वभावेन स्वबुद्धया सर्वं वदेदिति॥अथ दिनप्रवेशे मृगयाविचारः॥सवीर्य्यौ कुजज्ञौ नृपाखेटसिद्ध्यै
न सिद्धिर्यदा वीर्यहीनाविमौ स्तः ॥ जलाखेटमाहुः सवीर्यैर्ग्रहर्क्षैर्जलाख्यैर्नगाख्यैर्नगाखेटमाहुः ॥ जलपर्वतादिग्रहराशयः संज्ञाध्यायो
क्ता ज्ञेयाः ॥ लग्नास्तनाथौ केंद्रस्थौ निर्बलौ क्लेशदायिनौ ॥ मृगयोक्ता शुभफला वीर्याढ्यौ यदि तौ पुनः ॥ क्रूराक्रांतानि यावंति
मध्ये भानीन्दुलग्नयोः॥तावंतः प्राणिनो वध्या द्वित्रिघ्नाःस्वांशकादिषु॥विपत्करगते दुःखं नैधने च विभेदनम्॥प्रत्यारौ सबलं भिन्ना ॥८७॥
त्पापे वा जन्मभे गणे॥ समभेतभवे २ च्चायमद्यखाद्यं त्रिषमे तथा॥अत्र विशेषः प्रश्नवैष्णवे॥लग्नेशजामित्रपतीत्थशाले प्रश्नं ह दृष्टास्त्य
नयोर्द्वयोश्च॥आखेटकःस्यात्सफलारिदृष्ट्या कष्टाददृष्ट्या विफलोल्पको वा ॥ लग्नेश्वरे द्यूनगते विलग्नजायेश्वरे स्यान्मृगयाप्रभूता ॥

द्यूनेश्वरे मंदगतौ सुदृष्ट्या स्वल्पाद्बलाढ्ये क्षितिजे ऽथ गुर्वी ॥ विभौमगेहे च कुजे नभस्थे जीवज्ञदृष्टे मृगयागरीयसी ॥ बुधस्य जीवस्य गृहे नभस्थे लग्नेथ गुर्वी मृगया तदा भवेत् ॥ जामित्रनाथे हि बुधे नभस्थे चाखेटकः स्वल्पतरोपि न स्यात् ॥ द्यूनस्थिते वीर्ययुतः प्रभूतः स्यादल्पकोऽन्यत्र गते च केन्द्रात् ॥ अथ जलाखेटकप्रश्ने ॥ जामित्रनाथेन सुधाकरेण यदीत्थशालं कुरुते महीजः॥शुक्रेक्षितो वारिचरस्य राशावाखेटकः स्यात्प्रचुरो झषाणाम् ॥ अथाखेटके दिननक्षत्रवशेन फलमुक्तं ॥ भूपालवल्लभे॥ सूर्यभात्त्रित्रिभे चंद्रे पाशघातवधस्तथा ॥ पाशे पाशगतं कुर्याद् घाते प्राप्तिर्भवेन्नहि ॥ वधे प्राप्तिर्भवेन्नित्यमेवं वाच्यं न संशयः ॥ लुब्धनामर्क्षगोराशिर्यत्र स्याद्दिनचंद्रमाः ॥ तन्मध्ये यदि सौम्याः स्युस्तदा च हरिणादिकम् ॥ राशिचंद्रमसोर्मध्ये पापा दुष्टपशुस्तदा॥ मिश्रखेटे मिश्रपशुर्नग्रहश्चेत्पशुर्नहि ॥ राहोः शनेस्तु महिषा भौमभास्करयोर्मृगाः ॥ ज्ञशुक्राभ्यां वुधेंदुभ्यां सूकरादय एव च ॥ आखेटकस्य दिवसे चंद्रः क्रूरयुतो यदि ॥ रवियुक्तो भवेत्पंगुर्भौमे शृंगं विना मृगः ॥ अंगविद्धस्तमः सौरैर्महिषाः शनिराहुतः ॥ वराहो रविभौमाभ्यां पक्षिणो बुधशुक्रयोः ॥ शृंगहीना युतः सौम्यैः सशृंगास्तु तथेतरैः ॥ तिथिः पंचगुणा नक्षत्रवाराढ्या त्रिविभाजिता ॥ एकादिशेषे मृगया जलस्थलगिरौ क्रमात् ॥ अथ दिनप्रवेशे स्वप्नविचारो वर्षतंत्रे ॥ लग्नांशके तनुगेथवास्मिन्दुःस्वप्नमीक्षेत यथार्कबिंबम् ॥ रक्तांबरावह्निमथापि चंद्रे शङ्खाम्बररक्तांबरपुष्पवस्त्रम् ॥ स्त्रियः सुरूपाश्च कुजे सुवर्णं रत्नांबरस्रक्पशुविद्रुमाणि॥ बुधे हयस्वर्गतिधर्मवार्ता गुरौ रतिर्द्धर्मकथासुरेक्षा ॥ सद्बंधुसंगश्च सिते जलानां पारे गतिर्दैवरतिर्विलासः ॥ शनावरण्याद्रिगतिश्च नीचैः संगश्च राहौ शिखिनीत्थमेवम् ॥ चंडेश्वरः ॥ मिश्रे मिश्रं वदेत्स्वप्नं स्वामियुक्ते तु हेतुजम् ॥ नीचारिभे जिते वापि परवेश्मगतेस्तगे॥दुस्स्वापवाच्यं तत्स्वप्नमन्यथा सुखदं वदेत् ॥लग्ने सूर्ये शुभैर्दृष्टे रविराशिस्तयोद्युने॥ स्वप्ने स्वप्नं तदा दृष्टं निश्चयेनेति निर्दिशेत् ॥ रवीन्दुशुक्रौ दृष्टौ च तयोर्वा यदि सप्तमः ॥तदा स्वप्ने नृपो दृष्टश्चंडेश्वरनृपोदितम् ॥ इति स्वप्नविचारः ॥ अथ मंदावबोधार्थं वर्षपत्रीलेखनक्रमो लिख्यते॥प्रथमं मंगलश्लोका आशीर्वादश्लोकाश्च लेख्याः॥ ततः संवत्सरशकायनर्तुमासपक्षतिथिवारनक्षत्रयोगकरणदिनमानरात्रिमानेष्टकालादिभिर्वर्षसमयो लेख्यः॥ततो वर्षकुंडली जन्मकुंडली ग्रहन्यासपूर्विका लेख्या ॥ ततः स्पष्टग्रहाश्च तन्वादिद्वादशभावसंधयश्च लेख्याः॥ग्रहाणां

विंशोपकाबलं परस्परं दृष्टयो भावेषु च दृष्टयो लेख्याः॥ततो ग्रहाणां मैत्रीचक्रं लेख्यम्॥ततः पंचवर्गीबलानि द्वादशवर्गिका लेख्या ॥ ततो ग्रहाणां स्थानदिक्कालनिसर्गचेष्टादृग्बलानि इष्टकष्टसहितानि लेख्यानि ॥ ततो भावबलं लेख्यं ततो वर्षेशनिर्णयं तत्फलं च मुन्थाफलं लेख्यम् ॥ततः सहमानि सहमकुण्डलिका लेख्या ततोरिष्टारिष्टभंगौराजयोगराजयोगभंगौ च लेख्यौ॥ततस्तन्वादिद्वादशभावविचाराद्ग्रहाणां भावफलानि भावविचारादेव यथाभावस्थानि सहमफलानि लेख्यानि ॥ ततो वर्षप्रवेशे दशाविषयविभागेनागतादशा तत्प्रवेशाः कश्चिल्लेख्यः ॥ ततो दशाफलानि लेख्यानि ॥ ततो दशा मध्ये तदंतर्दशाः फलसहिता लेख्याः ॥ ततो द्वादशमासप्रवेशमासकुंडलिकास्पष्टा ग्रहा द्वादशभावसहिताः मासेश्वरनिर्णयमासे सफलमासदशाः फलसहिता लेख्याः ॥ ततो मासप्रवेशमध्ये दिनप्रवेशकुंडली स्पष्टग्रहद्वादशभावफलदिनेश्वरानिर्णयदिनेश्वरफलं दिनदशाफलं यथासंभवं भोजनमृगयाखेटकस्वमादिसहिता लेख्याः ततोग्रिमाब्दप्रवेशः कुंडलीसहितो लेख्यः ॥ इति वर्षपत्रीलेखनक्रमः ॥ निर्मथ्य सत्ताजिकशास्त्रसिंधुं समूहतो हायनरत्नसंज्ञः ॥ सद्वर्षपत्रीकरणोद्यतानां ज्योतिर्विदां कंठविभूषणाय ॥ १ ॥ वित्तं नान्यं परेषां तु सिंधोर्मथनजं श्रमम् ॥ इति संचिन्त्य सोमेश त्वदंघ्रौ रत्नमर्पितम् ॥२॥ पृथ्वीपते महावीर श्रीमत्साहिसुजातिके॥श्रीराजमहलस्थेन मया ग्रंथो विनिर्मितः॥ ॥ ३ ॥ यो मे मासकृतेः समः करहतो योगास्तिथिः स्यात्तथा त्रिर्वारामिति तैः सहार्धसदृशं भं सर्वयोगे पुनः ॥ भूत्राणाक्ष १६६१ कुभिर्भवेदुपमितिर्ग्रंथस्य तावद्धि यस्तं मन्ये गणितद्वयाब्जकमलप्रोद्बोधने भास्करम् ॥ ४ ॥ इति श्रीमद्दैवज्ञाचार्यपंडितदामोदरात्मजबलभद्रविरचिते हायनरत्ने मासप्रवेशादिविचाराध्यायोऽष्टमः ॥ समाप्तश्चायं ग्रंथः ॥

॥ छ ॥

---

इदं पुस्तकं मुम्बय्यां खेमराजश्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रागारे
मुद्रयित्वा प्रकाशितम् । माघ संवत् १९६१, शके १८२६.

